# श्रीप्रव्रज्याविधानस्योपक्रमः

अर्हन् यः परमो यमयमसमज्योतिर्मयं मन्यते, चक्रे येन च कर्म्ममर्म्ममथनं यस्मै नतोऽहं प्रभो ! ।
यस्माद्विभ्यति रागमुख्यरिपवो यस्यामलं केवलं, यस्मिन्निर्वृतिनायिका कृतरतिः स स्ताज्जिनः श्रेयसे ॥ १ ॥

व्यवहारप्रव्रज्या—विपश्चिद्वरा वृणुतैतत्प्रव्रज्याविधानकुलकं तदभिधेयानुष्ठानद्वारेण चेत्सती समीहा सनातनस्थानस्थास्नुतायां, न हि यतो विना प्रव्रज्याविधानममृतानन्दमयी सनातनपदस्थास्नुता, यद्यपि मरुदेवाप्रभृतीनामतीर्थसिद्धानां भरताधिपभरतचक्र्यादीनां गृहस्थलिंगस्थत्वेन गार्हस्थ्यव्यवहारवतां च निःश्रेयसकैवल्यभावाद् भवत एव व्यवहारप्रव्रज्यां विनापि निःश्रेयसकैवल्ये, परं यथा देवानां विनापि कवलान् तृप्तेः संभवस्तथा केषांचित् तथाभव्यत्वस्य तथाविधत्वेन स्यातामपि तथा निःश्रेयसकैवल्ये, परं मनुष्यादयो न तादृशमातोदयवंत इति तैर्न देवादीन् अनुकृत्य जिजीविषुभिः कावलिकाहारः प्रतिक्षेप्तुं शक्यः, एवमेव तथातथाभव्यत्ववतो मरुदेव्यादीन्निरीक्ष्य निःश्रेयसकैवल्यप्राप्तिमतो विना व्यावहारिकप्रव्रज्यां नोदासितव्यं स्वप्नेऽपि प्रव्रज्यायां व्यवहारानुगतायां, न च विना चारित्रं विना च तपः सिद्धिं जानानैस्तीर्थकृत्पादैरपि न न चीर्णं व्यवहारचारित्रं, न च न तप्तं कठिनकर्मेन्धनकृतानलदर्शं दुस्तपं तप इति, यदि श्रीमतां जिनानां न तथा तथाभव्यत्वं तर्हि के परे तत्कृतिमनुकर्त्तुमपि सर्वथाऽशक्तास्तदुपदेशलवमात्रलब्धसद्दर्शनादिलाभाः?, किंच-न युक्तमेवेदं धर्मश्रवणाद्यपि तेषां काकाचित्कभावावलंबनपटूनां, यतो न श्रीजिनैर्श्वरैरन्यैश्च प्रत्येकस्वयंबुद्धैः श्रुतो बुद्धानां पार्श्वे धर्मः, तन्मतस्ते न धर्मश्रवणतपश्चरणव्यवहारचारित्रपराङ्मुखाः, ततो

निःश्रेयसमभिलपद्भिः कार्यमेव व्यवहारप्रव्रज्गादि, तत एव सार्थकं वचनमिदं निर्युक्तिगतं यदुत सम्यग्दृष्टयो देशविरताश्चैकगतिकाः श्रमणनिर्ग्रन्थास्तु स्वर्गापवर्गगतिद्वयगुताः, किंच-' जस्सट्ठाए कीरइ नग्गभावे ' इत्यादिकमाचक्षाणा जिनेन्द्रा अपि निःश्रेयसार्थिनां व्यवहारप्रव्रज्यायाः कर्त्तव्यतामेवाहुः ।

प्रव्रज्यारूढिः—सत्स्वप्यनेकेपु चारित्रदीक्षाप्रव्रज्यापरिव्रज्यातपस्यानियमस्थितिप्रभृतिपु चारित्रवाचकेपु पर्यायेपु जैनशास्त्रकृतां प्रव्रज्याशब्दस्य विशेपत उपादेयता, अत एव ' अगाराओ अणगारियं पव्वइए ' ' पव्वज्जाठाणमुत्तमं ' 'पव्वइएण य अणगारेण ' 'पव्वज्जाविहाणसुत्तं' 'प्रव्रज्यां प्रतिपन्नो यः' 'पव्वज्जापडिवत्ती' इत्यादि, अत एव च दीक्षाशब्दं देशविरतानां स्वयंसेवकभावांगीकारविधावाख्यातवन्तः ख्यातकीर्तयः श्रीहरिभद्राचार्याः श्रीपंचाशके, पंचवस्तुके चाख्यायापि प्रव्रज्यायाः पर्यायान् ' पव्वयणं पव्वज्जे ' त्युक्त्वा आरंभपरिग्रहयोस्त्यागमेव प्रव्रज्याया वाच्यतयोक्तवन्तः पूज्याः, एवं चास्य प्रव्रज्याविधानकुलकस्य पूर्वतनाचार्येण कृतिरतिशयेन युक्तैवेति मन्तव्यं,

यद्यपि नात्र मूलसूत्रे प्रव्रज्याविधानेत्यभिधाया निर्देशस्तथापि ' दुलहा होइ पव्वज्जा ' ' सा पुण दुप्परियल्ला ' ' अहव पव्वज्जा ' इत्यादीन्यनेकानि वाक्यान्यस्य प्रव्रज्याविधानमित्यभिधां व्यञ्जयन्ति, वृत्तिकारास्तु भगवन्तः ' श्रीप्रव्रज्याविधानेऽर्थमहतीं'त्युक्त्वा स्पष्टमेवास्य कुलकस्याभिधानं प्रव्रज्याविधानमित्याचख्युः, ' श्रीप्रव्रज्याविधानप्रकरणतिलकस्यास्य वृत्तिं विधाय' त्युपसंहारेऽप्याख्यान्तः ख्यातिं निन्युरस्य प्रव्रज्याविधानेत्यभिधां, अवचूर्णिकारास्तु वृत्तिकृतामनुकारिणस्तेऽपि समाप्तौ प्रव्रज्याविधानावचूर्णी'त्युक्तवन्तः ।

कुलकाभिधानं—यद्यपि वृत्तेः समाप्तौ ' इति प्रव्रज्याविधानकुलकवृत्तिः समाप्ता ' इति लिखितमेव स्पष्टतया, वृत्तिकारैश्च ' प्रव्रज्याविधानप्रकरणतिलकस्य ' त्यप्यभिदधुः, परं छन्दोवशात्तन्नातिसंभवहीनं, महद्ग्रन्थस्यावतरणार्थकं हि प्रक्रियते न चात्र तथा. किन्तु अभव्यस्वरूपानुगतं यथा अभव्यकुलकं संबोधप्रकरणे जीवस्वरूपादिनिरूपकं ' जीवकुलकं ' श्रीप्रवचनसारोद्धारवृत्तौ तथेदं श्रीप्रव्रज्याविधानस्य मुख्यत्वेन निरूपकमिति यथार्थानुगतंप्रव्रज्याविधानकुलकमिति नाम, महाग्रन्थस्यावतारकत्वाभावेऽपि व्युत्पादनार्थत्वात् प्रकरणस्य प्रकरणत्वेऽपि न क्षतिः, तथा च प्रकरणार्थोपसंहार इत्युक्तावपि न क्षतिः ।

नामविचारः—यद्यप्यत्र मानुष्यदुर्लभत्वादीनि धर्मसर्वस्वान्तानि द्वाराणि गदितानि, परं मनुष्यादिदौर्लभ्ये सप्तमीनिर्देशात् अन्ते न धर्मशब्देन सर्वविरतेरभिप्रेतत्वात् युक्तमेव सर्वस्यापि प्रकरणापराभिधानस्य कुलकस्येदं प्रव्रज्याविधानाभिधानं, यद्यपि व्याकरणकोशादिषु विधानशब्दो विध्यर्थे संजल्पितस्तथापि विधिशब्दस्य धर्मशास्त्रेषु ग्रहणादिविधौ रूढत्वात् विहाय विधिशब्दं विधानशब्दोऽभिहितः साद्यन्तस्वरूपाख्याकतया, एवं च विधानशब्दस्य गुरुता परिहृता ज्ञेया,

क्रमविचारः—मनुष्यत्वादिषु दशसु द्वारेषु क्रमप्रयोजनं तथा लाभादि स्वयमभ्यूह्यत एव, परं प्रव्रज्याद्वारे तद्दुष्करताद्वारे यदभिः प्रकरणकृद्भिरभिहितं तदपि तथाक्रममेव भगवद्भिः श्रीहरिभद्रसूरिभिरनेकाख्यानान्तरालयायिकामृतायां श्रीज्ञानाधर्माख्यानिकोपाख्यानिकाप्रतिबिम्बभूतायां श्रीसमरादित्यकथायां न्यवेदि, तथा च तद्ग्रन्थः —

समराइच्चकहा तइओ भवो-एत्थ खलु भव्वकालमेव समसत्तुमित्तभावेण पाणाइवायविरई, अप्पमत्तयाए अणलियभासणं, दन्तसोहणमेत्तस्सावि अदिन्नस्स वज्जणा, मणवयणकाएहिं अबम्भचेरनिरोहो, वत्थपत्तोवगरणेहिंपि निम्ममत्तया, चउव्विहराइ-

भत्तविरई, उग्गमुप्पायणेसणाविसुद्धपिण्डगहणं, संजोयणाइपञ्चदोसरहियमियकालभोयणं, पञ्चसमियत्तणं तिगुत्तया, ईरियासमियाइभावणाओ, अणसणपायच्छित्तविणयाइसबाहिरब्भिन्तरतवोविहाणं, मासाइया य अणेगाओ पडिमाओ, विचित्ता य दव्वादओ अभिग्गहा, अण्हाणं भूमिसयणिज्जं केसलोओ निप्पडिकम्मसरीरया. सव्वकालमेव गुरूणं निद्देसकरणं, खुहापिवासाइपरिसहाहियासणं दिव्वाइउवसग्गविजओ लद्धावलद्धविवित्तिया, किं वहुणा?—अच्चन्तदुव्वहमहापुरिसवूढअट्ठारससीलङ्गसहस्सभरवहणमविस्सामंति। ता तरियव्वो खलु अयं बाहाहिं महासमुद्दो, भक्खियव्वो निरासाय एव वालुगाकवलो, परिसक्कियव्वं निसियकरवालधाराए, पायव्वा सुहुयहुयवहजालावली, भरियव्वो सुहुमपवणकोत्थलो, गन्तव्वं गंगापवाहपडिसोएणं, तोलियव्वो तुलाए मन्दरगिरी, जेयव्वमेगागिणा चाउरङ्गबलं, विंधेयव्वा विवरीयभमन्तट्ठचक्कोवरि धिउल्लिया, गहियव्वा अगहियपुव्वा तिहुयणजयपडागा। एओवमं दुक्करं समणत्तणंति ॥

अत एव समरादित्यस्य संक्षेपकाः पूज्यपादाः श्रीप्रद्युम्नसूरयः समरादित्यसंक्षेपेऽप्येवमेवाहुः प्रव्रज्याविधानक्रमं, तथा च तद्ग्रन्थः—

श्राद्धयुक्तमिदं किं तु, श्रामण्यमतिदुष्करम् ॥ १८१ ॥
सर्वत्र समता कार्या, धार्या पंचमहाव्रती। निश्याहारो न कार्यश्च, ग्राह्यः शुद्धो दिवाऽप्यसौ ॥ १८२ ॥
अपञ्चदोषं भोक्तव्यं, ध्येयाः शासनमातरः। धार्याश्च प्रतिमा भाव्या, भावनाः पंचविंशतिः ॥ १८३ ॥
द्रव्याद्यभिग्रहाः कार्या, भूशय्या स्नानवर्जनम्। लोचो निष्प्रतिकर्मत्वं, गुर्वादेशविधायिता ॥ १८४ ॥

परीषहोपसर्गाश्च, सह्याः किं बहुनाऽथवा। धार्याऽष्टादशशीलाङ्गसहस्री दुर्वहा सदा ॥ १८५ ॥
मन्तुं चक्रेण भार्योऽयं, तार्या गंगा विलोमतः। जेयमेकाकिना सैन्यं, मेरुस्तोल्यस्तुलाधृतः ॥ १८६ ॥
राधावेधो विधेयोऽसावगृहीतः पुरा क्वचित्। निरन्तरं ग्रहीतव्यो जगत्त्रयजयध्वजः ॥ १८७ ॥

कुलकानुकरणं—भगवद्भिः श्रीहरिभद्रसूरिभिः कुलकमभव्यस्वरूपोपदर्शकमादौ कृतं, तदनु श्रीअभयदेवसूरिभिश्चन्द्रगच्छ-मण्डनैर्वन्दनकुलकादीनि कृतानि, तदनुकरणेन कैश्चित् पूर्वसूरिभिः प्रव्रज्याविधानाभिधमेतत् कुलकमकारि, यद्यपि श्रीमत्प्रद्युम्न-सूरिभिरपि नैतत्कुलककारिणामभिधानमुपलब्धं तेन 'प्राच्यसाधुप्रवरविरचिते' इति प्रोचुः ते तथापि श्रीमद्भिः प्रद्युम्नसूरीणां पितृ-व्यगुरुभिः श्रीपरमानन्दसूरिभिः एतत्कुलकानुकारेण संस्कृते प्रव्रज्यास्वरूपमात्रप्रदर्शनपरं कुलकं कृतं, एतच्च श्रीईर्यापथिकीषट्-त्रिंशिकायां मुद्रितमपि भव्यावबोधाय दर्शनीयतामेति, तच्चेदम्—

नूनं धन्योऽसि महात्मन्! येनासौ पारमेश्वरी दीक्षा। लब्धा सम्प्रति यदमावतिदुष्प्रापाऽऽगमेऽभिहिता ॥ १ ॥ तथाहि—
पञ्चेन्द्रियत्वमानुष्याऽऽर्यदेशकुलकल्पताऽऽयुषां भावे। सद्गुरुसंगश्रवणश्रद्धासु च सर्वविरतिः स्यात् ॥ २ ॥ तदिमां चिन्तामणिका-मधेनुकल्पद्रुमोपमां लब्ध्वा। दीक्षां क्षणमपि कार्यो न हि प्रमादस्त्वया तस्याम् ॥ ३ ॥ ग्रहणाऽऽसेवनशिक्षाविषये यतितव्य-मविरतमिदानीम्। धर्मैतन्मूलकल्पे विनयेऽभिरतिर्विधातव्या ॥ ४ ॥ पञ्चमहाव्रतरत्नानि नित्यमेवानुशीलनीयानि। षड्विध-जीवनिकायो हि रक्षणीयः स्वजीववत् (स्व) ५ ॥ वाक्यं मृषा न वाच्यं परपीडाहेतुकं न सावद्यम्। नैवादत्तं स्तोकमपि वस्तु परकीयमादेयम् ॥ ६ ॥ चरणीयं ब्रह्मव्रतमनघं श्रीस्थूलभद्रमुनिनेव। मूर्च्छापरिग्रहोऽपि न परिहार्योऽनेकदोषनिधिः ॥ ७ ॥

वर्ज्यं च चतुर्भङ्ग्यापि सर्वदा रात्रिभोजनं सर्वम् । विज्ञानाराधनयोर्यतितव्यं चरणकरणानाम् ॥ ८ ॥ दशविधदश-
धासामाचार्याः कार्यस्तथाऽऽदरः परमः । सचक्रवालसामाचारी चाहर्निशं सेव्या ॥ ९ ॥ अष्टावप्याराध्या मातर इव मातरः
प्रवचनस्य । शीलाङ्गानामष्टादशसाहस्री च वोढव्या ॥ १० ॥ कार्या च पिण्डशय्याकर्पटयात्रादिविषयिणी शुद्धिः ।
ग्रामकुलस्वजनादिषु परिहरणीयं ममत्वं च ॥ ११ ॥ गुणवृद्धिमूलहेतुगुरुकुलवासो न जातु मोक्तव्यः । कर्त्तव्या
द्रव्यादिप्रतिबद्धाऽभिग्रहजिघृक्षा ॥ १२ ॥ विकृतित्यागः षष्ठाष्टमादिकष्टं तपश्च चरणीयम् । जेया परीषहचमूर्महोपसर्गाश्च
सोढव्याः ॥ १३ ॥ अनियतवासो भिक्षाटनं च तलिकोपभोगपरिहारः । शीतातपदंशाद्याहितपीडाविषहणं कार्यम् ॥ १४ ॥
स्नानविलेपनभूषाद्यभिलापश्चेतसाऽपि नो कार्यः । भूमौ शयनं केशोल्लुंचनमपि दुष्करं सह्यम् ॥ १५ ॥ प्रतिमाभ्यासः कार्यो-
त्सर्गो नानाविधासनाविधानम् । इत्यादिरनेकविधः कायक्लेशो विधातव्यः ॥ १६ ॥ क्षान्तिक्षमैश्च भाव्यं क्रोधाहङ्कारनि-
कृतिलोभाश्च । शलव इव निग्राह्या दमनीयः करणहयनिचयः ॥ १७ ॥ अन्यच्च चरेत्तिष्ठेदासीत तथा शयीत भुञ्जीत ।
भाषेत शान्तचित्तः सदैव किल यतनया साधुः ॥ १८ ॥ मानापमानलाभालाभेष्वविकारमानसैर्भाव्यम् । सोढव्या
दुर्जनवचनकण्टकाहितमहापीडा ॥ १९ ॥ दण्डत्रितयं शल्यत्रयं च निकथास्वपरपरिवादः । ऋद्धिरससातगौरवमदविषया
दूरतस्त्याज्याः ॥ २० ॥ किं बहुना पैशाचिकमाख्यानं कुलवधूकथां श्रुत्वा । नित्यं संयमयोगैर्धार्यश्चात्माऽक्षणिक एव
॥ २१ ॥ एतत्समुद्रतरणं बाहुभ्यां श्रोतसि प्रतिश्रोतः । गमनं सिकताकवलस्य चर्वणं शिखिशिखापानम् ॥ २२ ॥ मेरो-
स्तुलया तोलनमिदं तु निशि निशितखड्गधारायाम् । चंक्रमणं शत्रुबले युद्धं चैकाकिनश्चैतत् ॥ २३ ॥ ग्राह्या च जयपताका

गणनेव विधाय नन्वेषा । इत्यादिभिरुपमानैः सुदुष्करा भवति जिनदीक्षा ॥ २४ ॥ अथवेयं प्रव्रज्या सुदुष्करा भवति कातरनराणाम् । वीराणां मोक्षसुखाभिलाषिणां हन्त सुकरैव ॥ २५ ॥ अपरं च सर्वमपि धर्मकृत्यमिह भावतः कृतं सफलम् । स्यादिति भावविशुद्धया परिपाल्याऽसौ सदा भद्रैः ॥ २६ ॥ इति दीक्षाविधिनेनं यो भव्यजनः करोति भावेन । स भवेत्परमानन्दः सूरिः सज्ज्ञानचारित्रः ॥ २७ ॥ अथ तस्मिन्नेव भवे भवान्तरे वा मनुष्यसंबद्धे । हत्वा मोहं लब्ध्वा च केवलं शिवपदं लभते ॥ २८ ॥ इति प्रव्रज्याविधानं समाप्तम् ॥

किञ्चैतान् पद्मचन्द्रसूरीन् श्रीमन्तः समरादित्यसंक्षेपे 'कूनडग्रामविश्रामं' इति प्रोच्यास्तौपुस्तच्छिष्याः श्रीलक्ष्मचन्द्राः अनेककुलकानां श्रीमद्वैराग्यशतकादीनां फिट्सूत्राणि चक्रुः, यानि च त्रयोदशशताब्दीगताडपत्रानुसारेणेर्यापथिकीषट्त्रिंशिकायां मुद्रितानि, तदनुसारेणानुमातुमिदमर्हं यदुत तत्काले विशेषेण कुलककृतौ प्रवृत्तिरभूदिति ॥

टीकाकृत्पारंपर्यादि—यद्यपि श्रीमद्भिः समरादित्यसंक्षेपे आख्यायि गुरुपारंपर्यं परं तत् श्रीमद्यशश्चंद्रप्रभाचार्येभ्यः पुरस्तादेव, अत्र तु श्रीमन्महावीरप्रभोरारभ्य तदुक्तं, उभयमपि पारंपर्यमेवं —

संक्षेपोक्तम्-चन्द्रप्रभः प्रभुरभूदिह चन्द्रगच्छे, तस्माद् गुरुश्च समयूपुरिपद्रदेव्याः । श्रीमान् धनेश्वर इति प्रथितोऽस्य शिष्यः, श्रीशान्तिसूरिरिति तस्य च देवभद्रः ॥ १ ॥ अक्षावलिप्रवरपुस्तकधर्मचिह्नश्वेताम्बुजस्वरविपञ्चि करे यदीये । शब्दानुशासनविरञ्चिरिनः स देवानन्दप्रभुः पुरुपरूपगिरीश्वरोऽभूत् ॥ २ ॥ श्रीरत्नप्रभदेवानन्दौ कनकप्रभः प्रभुश्चास्मात् । श्रीपरमानन्दविभोर्जयसिंहः सूरिरादिशत ॥ ३ ॥ शिष्यः श्रीकनकप्रभस्य सुकविः श्रीबालचन्द्रानुजो, ज्यायान् श्रीजयसिंहतः प्रतिभया श्रीवस्तुपाल-

स्तुतः । विश्वाह्लादनठक्कुरान्वयगुरुर्मत्या सतां संमतः, सूरीणां शुकवित्वशोधनविधौ प्रद्युम्नसूरिः कविः ॥ ४ ॥ वर्षे वारिधि-
पक्षयक्षगणिते ( १३२४ ) श्रीवर्धमानस्थितश्चक्रेऽमुं प्रथमं लिलेख तु जगच्चन्द्रः शुभीः पुस्तके । प्राग्वाटान्वयमन्त्रिवाहड-
सुतश्रीराणिगस्याङ्गजौ, ग्रन्थार्थे रणमल्लसेगसन्निवौ स्वं प्रार्थयेतां गुरुम् ॥ ५ ॥ यावद् ग्रन्थरथाश्चतुर्दशशती श्रीहारिभद्रा इमे,
वर्षन्ते किल पारिणामिकतया सिद्धध्वगानेऽङ्गिनाम् । तावत्पुण्यरथः स एष समरादित्यस्य मन्त्रिमितः, संक्षेपस्तदनुस्तवः प्रचरतु
श्रीडाकृते धीमताम् ॥६॥ यस्मिंश्चक्राणि रत्नत्रितयमपिगृहिश्रेयसी चोद्धियुग्मं, कारुण्यं स्थालमुच्चैरितरयमचतुष्काष्ठिफागाढबद्धम् ।
संवेगस्वच्छभावौ शिखरकलशकौ शुद्धबुद्धिः पताका, साधुश्राद्धौ च धुर्यौ जयतु शमयुतः स्यन्दनः सेप शास्त्रम् ॥ ७ ॥

अत्रत्यं श्रीदेवानन्द शिष्यश्रीकनकप्रभाशिष्यकः । समरादित्यसंक्षेपकर्ता वृत्तिमिमां व्यधात् ॥१॥ वादीन्द्रदेवसूरेर्वंशे
श्रीमदनचन्द्रगुरुशिष्यः प्रथमादर्शेऽदर्शयदेनां मुनिदेवमुनिर्देवः ॥२॥ श्रीप्रव्रज्याविधानप्रकरणतिलकस्यास्य वृत्तिं विधाय,
प्राप्तं किञ्चिन्मया यत् सुकृतमकृतकं योगशुद्ध्या विशुद्धम् । तेनायं भव्यलोको भवतु भवभवभ्रान्तिशीतोपशान्तौ, धर्मे जैनेन्द्रधर्मे
विशदलनिशदस्वान्तवृत्तिप्रवृत्तिः ॥३॥ किञ्च-आकिञ्चन्यवतापि याचकजनो येन स्वतुल्यः कृतः कारुण्यं विविधोपसर्गजनकेऽप्यु-
द्बुधे दुर्जने । एकेनाप्यखिला परीषहचमूः साऽपि द्रवाद् द्राविता, श्रीसिद्धार्थनरेन्द्रनन्दनजिनोऽव्यात्स वीरस्त्रिधा ॥ ४ ॥
श्रीवीरजिनेन्द्रस्य, विबुधानां सदास्पदम् । सुधर्मभोगाः सधर्मा श्रीसुधर्माऽभूद्गणाधिपः ॥ ५ ॥ अनम्बुकृतवाग्जम्बूस्तस्य
शिष्यः प्रशस्यधीः । नान्योऽस्मान्मुक्तिकामिन्या, कामितोऽस्मिन्ननेहसि ॥ ६ ॥ जम्बूकथाप्रबंधैर्यैः, स्तेनो न्यायेन संयतः ।
सोऽभूत्तत्प्रभवः पूर्वप्रभवः श्रुतकेवली ॥ ७ ॥ शय्यम्भवो भवोदन्वत्तारणे तरणीनिभः । दशवैकालिकग्रंथं, निर्ग्रन्थोऽपि

व्यधादथ ॥ ८ ॥ यशोभद्रं वितन्वानं, यशोभद्रं विभुं स्तुमः । कर्म्मसंग्रामनामभ्यां, सम्भूतविजयं तथा ॥९॥ श्रीभद्रबाहुपादेभ्यो, नमो यैर्विहिता हिता । आवश्यकादिग्रन्थानां, निर्युक्तिर्युक्तिसंगता ॥ १० ॥ नमः श्रीस्थूलभद्राय, यो गार्हस्थ्येऽपि च । निजदूर्या वर्द्धयन् कामं, कामं कोशाप्रियाहृदि ॥ ११ ॥ श्रुतकेवलिभिः षड्भिस्तैः सदाऽऽचरणैरियम् । नास्त्यस्तिपक्षा जैनी वाक्, अमरीवाभ्रमद् भुवि ॥ १२ ॥ दशपूर्वभृतामाद्यो, जयत्यार्यमहागिरिः । यस्योन्नतिरनुल्लङ्घ्याऽन्यैः सचरणचारिभिः ॥१३॥ श्रीमत्सुहस्ती गुहस्तीव, जिनराजस्य शासने । चित्रं त्वनेन भूपालो, निजद्वारि नियन्त्रितः ॥ १४ ॥ श्रीसुस्थितगणाधीशः, स्नानामसदृशं जनम् । श्रीमान् सुप्रतिबुद्धश्च, चक्रतुर्देशनावशात् ॥ १५ ॥ अथ गणः कोटिकनामकोऽभूत्तेजस्विमंदन्युदयाद्रितुल्यः । यत्रेन्द्रदत्तो रविराविरासीद्भव्याम्बुजन्मप्रतिबोधकर्त्ता ॥१६॥ शिष्यः सिंहगिरिस्तस्य, श्रीरोहणगिरिप्रभुः । यत्र रत्नाकरे रत्न, इव रत्नोऽभवद्विभुः ॥ १७ ॥ वज्रस्वामी नवो वज्रो, ह्यष्टादशकोणभृत् । रुक्मिण्यूर्मिकया येन, यः कथंचिन्नियंत्रितः ॥ १८ ॥ उद्दामधामवयधाम बभूव नाम, श्रीवज्रसेन इति तस्य विनेयरत्नम् । यचन्द्रमुख्यसामितिप्रवरवामाभून्मौलिच्यत्राप वसतिं दृन्यापरूपाम् ॥ १९ ॥ नागेन्द्रचन्द्रनिर्वृतिविद्याधरसंज्ञकाश्च चत्वारः । शिष्यास्तस्याभूवन् मर्यादायां नदीनालाः ॥२०॥ संज्ञाकषायविकथानरकादिकायुर्बन्धार्त्तरौद्रभवभेदचयं निषेद्धुम् । ये द्रव्यकर्म्मचरधर्म्मकथानुयोगास्ते जज्ञिरे किल चतुर्भितमूर्त्तिभाजः ॥ २१ ॥ श्रीवज्रसेनदृढमूलकृतप्रतिष्ठश्छायां सदा विदधात्यतिरम्यरूपाम् । पुष्पैरिव प्रसृमरैः गुणिभिर्यशोभिश्चन्द्राख्यया निजगदानयमरित गच्छः ॥ २२ ॥ तत्र श्रीनलचाटमन्दिरमहाराजालुकस्याग्रतो, वादं सप्रतिपक्षमक्षनर्म कुर्वन् तदन्यैः समम् । संज्ञांगरूपदः गणैरभिहितः प्रद्युम्नसूरिः प्रभुः, सूर्योऽयं जगताज्जडेऽपि रुचिमयन्नामाविर्म्म मयि॥२३॥

तस्माद्गतेष्वथ च भूरिपु सूरिपु श्रीचन्द्रप्रभः प्रभुरभूद् गुणरत्नभूमिः । जिह्वाङ्कुशीभिरनिशं कविभिः खनद्भिः, प्राप्तानि तानि न यतः परिनिष्ठितानि ॥२४॥ पट्टे तस्य धनेश्वरः प्रभुरभूचारित्रलक्ष्मीपुष्पा(सुमा)कल्पोऽनल्पविकल्परम्यविहृतिः शुद्धाहृतिः प्राच्यवत् । श्रीमत्पापुल(भूमि`वित्त सम्मसूपुर्या तु देवी( व्याः पुरो, )देवीभूतगुरुप्रदत्तमिच यो मन्त्रं फलाढ्यं व्यधात् ॥२५॥ तेनोहितं पतनतो विरताप्रबोधं, वक्ति स्वयं हि समयूपुरपट्टदेवी । किं ब्रूमहे मनुजबोधविधौ वयं तु, श्रीमद्धनेश्वरगुरोर्गरिमाणमस्य ॥२६॥ श्रीशान्तिसूरिर्निज-शिष्यास्तस्याथ चत्वारस्तत्त्वारब्धसुचेतसः । श्रीवीर१शान्ति२देवेन्द्र३३ देवपूर्वाख्यसूरयः ४ ॥ २७ ॥ ज्ञानेन शान्तवावयामृतेन तत्कालजनानपुष्यत् । वंशेपु तेषां सुमनस्त्वमद्याप्यस्तीति चित्रं हृदि कस्य न स्यात् ? ॥ २८ ॥ हस्ते रूपेण च देवभद्रस्ततो गणाधीश्वरदेवभद्रः । श्रुतामृतं पीतमनन्तमन्तःसभं शुभं यः शुभमुज्जगार ॥ २९ ॥ देवानन्दगुरुर्जयत्य-पुस्तकमस्ति शस्तमुदयत्पवाश्च धर्मध्वजः, कीर्त्तिर्घोषवती सदापि विशदा यस्याक्षमाला प्रभोः । शिष्यास्तस्याभूवन्नाद्यो रत्नप्रभाभिधः यमितः पुंरूपभृद्भारती, शब्दानामनुशासनं तदुदितं न्यायेन सारस्वतम् ॥ ३० ॥ विराधनागौरव-सूरिः । परमानन्दः सूरिः सूरिः कनकप्रभस्तदनु ॥ ३१ ॥ अतुल्यशल्यत्रयवत् त्रयस्ते, चारित्रभूभर्तृकरे विरेजुः । दण्डशल्यत्रिकाणि भेत्तुं समकालमेव ॥ ३२ ॥ आद्यस्तु विद्यमानेपु, श्रीदेवानंदसूरिषु । जगाम द्युसदां धाम, तद्बोधनचिकीरिव ॥ ३३ ॥ भूयौदार्यविशेपतोऽपि परमानंदप्रदानोद्यतः, सूरिर्नैष्ठिकशेखरः स परमानन्दः प्रभुः प्राणिनाम् । यस्य श्रीजयसिंह-सूरिरजनि ख्यातो विनेयाग्रणीः, सिद्धान्तार्थविचारसारसरणिः सर्वोपकारक्षमः ॥ ३४ ॥ वन्दे श्रीकनकप्रभस्य समतां यन्नाम-वर्णत्रयी, पौरस्त्या विपरीतवाद्यपि निजं रूपं न मुंचत्यलम् । किं चोपश्रुतिनिःश्रितोऽप्यरतिदः कार्ये शुभे सर्वदा, मध्यस्थत्वमुपा-

गमदमनिधी यस्मिन्नकारोऽप्यसौ ॥२५॥ शिष्यः श्रीकनकप्रभस्य सुकविः श्रीबालचन्द्रानुजो, ज्यायान् श्रीजयसिंहतः प्रतिभया श्रीवस्तुपालस्तुतः। विशालह्लादनठक्कुरान्वयगुरुर्मत्या सतां सम्मतः, सूरीणां सुकवित्वशोधनविधौ प्रद्युम्नसूरिः प्रभुः ॥ २६ ॥

वृत्तिकृद्ग्रन्थविचारः—इमे एव पूज्यपादाः प्रस्तुतेऽपि विवरणे स्वं तत्संक्षेपकर्तृतया ख्यापयन्ति, एतच्च निम्नप्रदर्शितोल्लेखात् स्पष्टतां शेमुषीभृतां--

पृष्ठे १ 'वृत्तिं प्रद्युम्नसूरिः प्रथयति समरादित्यसंक्षेपकर्त्ता'—

पृष्ठे १४५ "यदुक्तमुक्तया युक्तं श्रीहरिभद्रगुरोर्मया। समरादित्यसंक्षेपे, यतिस्नानोज्झनक्षणे ॥ १ ॥ कृते स्नाने क्षणं शौचं, रागमार्गो न चेतसि। स्त्रीजनप्रार्थनीयत्वं, ब्रह्मचर्यस्य दूषणम् ॥ १ ॥ घातो जलस्थजीवानामन्यसत्त्वविराधनम्। क्षीरक्षालनमंगार, इत्यादान ... नम्॥२॥ अस्नाने तु न दोषास्ते, मत्वेति मुनिपुंगवैः। वर्ज्यं स्नानं ततः सिद्धिवधूसंगमसस्पृहैः ॥ ३ ॥ पृष्ठे २४२ श्रीदेवानन्दशिष्यश्रीकनकप्रभशिष्यकः। समरादित्यसंक्षेपकर्त्ता वृत्तिमिमां व्यधात् ॥१॥" एवं च श्रीमतां कृतिद्वये न कोऽपि विवादः, न च निश्चयितव्यं तेषां समरादित्यसंक्षेपकरत्वोपाधौ, यतः कथा हि समरादित्यस्य तथाविधा चैव यतो यथावद्भावार्थं नस्या व्यवस्थाप्य न संक्षेप्तुं शक्या प्राकृतैः, किंच-ग्रन्थकृत्पूर्वजश्रीचन्द्रप्रभसूरीणामपि गुरुपादाः श्रीप्रद्युम्नसूरय इति स्पष्ट निर्शंकितं स्यात् पार्श्वस्थं तेभ्य इति योग्य एवोपाधिः, अन्यच्च-तत्र श्रीसमरादित्यसंक्षेपे यथा पूर्वतनसूरीणां नमनादि आम्नायप्रकाशिनां नमनादि न विदधिरे तथा नात्रातोऽप्येककर्तृगोक्तौ द्वयोः प्रयोजनं स्यादपि, किंच-श्रीसमरादित्यसंक्षेपे व्यस्तसमस्तनिर्देशेन गूढचतुर्थादिना च यथाऽऽराध्यगुरुवराणां स्मृत्यादि न च तथाऽत्रेत्यपि हेतुत्वेन स्यादेव, मंगलमपि तत्र विस्तरेण,

अत्र तु विभक्तिसप्तकक्रमेण सामान्यार्हत्स्तुतिरेव मंगलतया, समरादित्यसंक्षेपे मंगलपूर्वतनाचार्योपकार्याचार्यस्तुतिक्रियैवं, अत्रत्या तु स्तुतिः शिरोधृता या सैव ।

चित्रभानुसुधाभानुचण्डभानुप्रभाधिकम् । शाश्वतं जयति ज्योतिः, परमं परमंगलम् ॥ १ ॥
आदिबोधिदमर्हन्तं, वृषभं कनकप्रभम् । प्रणौमि यदनुध्यानं, स्तम्भनं मोहभूपतेः ॥ २ ॥
शान्त्याद्यर्हत्त्रयं नौमि, यत्पदाधो निधिव्रजः । नवहेमाम्बुजव्याजात्, परित्यक्तोऽपि नात्यजत् ॥ ३ ॥
जेताऽपि जगतामेष, विषमास्त्रो यतस्त्रसन् । सुभ्रुवां भुवनेऽनेशत्, स नेमिः पातु वः प्रभुः ॥ ४ ॥
श्रीमतः पार्श्वनाथस्य, स्तुमस्तां गतरागताम् । यत्र प्रभावती मूर्तिः, सत्त्वं सर्वत्र दृश्यते ॥ ५ ॥
अन्तस्थाशीर्षवर्गान्त्यानपि पूज्यपदं नयन् । वर्द्धमानमहावीरनामभ्यां पातु वो जिनः ॥ ६ ॥
विदितस्फूर्त्तयः शुद्धसंयमस्येव मूर्त्तयः । जिनाः सप्तदशान्येऽपि, श्रेयो विश्राणयन्तु वः ॥ ७ ॥
चतुर्मुखभवां हंसगामिनीमर्थदीपिकाम् । स्फुरत्प्रकीर्णकामङ्गोपांगपूर्णां गिरं स्तुवे ॥ ८ ॥
श्रीमते गोपमुख्याय, गौतमस्वामिने नमः । परितश्चारिता येन, त्रिपद्यपि जिनस्य गौः ॥ ९ ॥
स सुधर्मसधर्मा श्रीसुधर्मा गणभृद्वरः । सवृन्दारकवृन्देन, वज्रिणा सेवितः श्रिये ॥ १० ॥
जम्बूर्जित्वा जनीव्याजाच्चमूः कर्ममहीभुजाम् । तानेकांगाञ्जिगायाष्टावप्यकष्टात्किमद्भुतम्? ॥ ११ ॥
वैरिणामन्तरंगाणां, षण्णामपि निषेधकाः । षट् सन्तु षड्व्रताधाराः, श्रुतकेवलिनः श्रिये ॥ १२ ॥

यत्रोऽग्रं नवतत्त्वाम्रो, नवो घनागिरावभूत्। चार्ल्मिकायां रुक्मिण्यां, यो भ्रात्राऽपि न यन्त्रितः ॥ १३ ॥
तामेवायां स्तुवे यस्या, धर्मपुत्रो वृषासनः । गणेशो हरिभद्राख्यश्चित्रं भवावियोगभूः ॥ १४ ॥
चतुर्दशशतीं ग्रन्थान्, सदालोकान् समावहन् । हरेः शतगुणः श्रीमान्, हरिभद्राविभुर्मुदे ॥ १५ ॥
तमःस्तोमं स हन्तु श्रीसिद्धसेनो दिवाकरः । यस्योदये स्थितं मूकैरुलुकैरिव वादिभिः ॥ १६ ॥
सिद्धव्याख्यातुराख्यातुं; महिमानं हि तस्य कः । समस्त्युपमितिर्नाम; यस्यानुपमितिः कथा? ॥ १७ ॥
वादं जित्वाऽऽल्लुकक्ष्मापसभायां तलपाटके । आत्तैकपट्टो यस्तं श्रीप्रद्युम्नं पूर्वजं स्तुवे ॥ १८ ॥
धर्मप्रतिष्ठाचार्याय, नमः श्रीदेवसूरये । यत्प्रसादमिवाख्याति, सुस्वप्नेषु दर्शनम् ॥ १९ ॥
नृपतिर्बोधितोऽमारिवारिणा हेमसूरिणा । चित्रं तु चेतना जन्तुजाते जातेह भूतले ॥ २० ॥
श्रीदेवानन्दसूरिभ्यो, नमोऽस्तु यदुपज्ञतः । सिद्धसारस्वतादीदृक्, कुर्वेऽहं बालचापलम् ॥ २१ ॥
तद्विनेयं नमामि श्रीकनकप्रभसद्गुरुम् । पदार्थमर्थितो ज्ञात्वा, येन पोतोऽप्यहं पितुः ॥ २२ ॥
श्रीमते नरचन्द्राय, नमोऽस्तु मलधारिणे । ददे मेऽनुत्तरा येनोत्तराध्ययनवाचना ॥ २३ ॥
विभुं विजयसेनं तं, नौमि येन जनेऽखिले । न्यस्तो विकस्वरो न्यायस्तर्कीया-कलिका मयि ॥ २४ ॥
कृतश्रमामविश्रामं, पद्मचन्द्रप्रभुं स्तुवे । चातुर्विद्येन मे दत्ता, येनावश्यकवाचना ॥ २५ ॥
बहुप्रबन्धकर्तुः श्रीपालचन्द्रस्य का स्तुतिः । मन्त्रीशवस्तुपालेन; यः स्तुतः कवितागुणात् ? ॥ २६ ॥

गूढचतुर्थादौ--प्रद्युम्नस्य कवेर्लक्ष्मीजानिः किमभिधः पिता ? ॥ ५० ॥
कुमारसिंह इत्युक्ते, कुमारेणापरः सुहृत् । विशालबुद्धिनामाऽथ, पपाठाभिनवं कविः ॥ ५१ ॥
प्रकाशा कीदृशी वार्त्ताऽऽशीर्वादे च किमुच्यते? । किं च योग्यं सतां वासे?, भवात्कः स्याद्वियेकिनाम्? ॥५२॥
५:श्चाधिष्ठायकः शंखेश्वरपार्श्वजिनेश्वरे? । कुमारेण विचिन्त्योक्तं, भूतानन्दपुरंदरः ॥ ५३ ॥
अहो मतेरतिशयो, भावित्वेत्यथ भूपणः । प्राह देव ! मयाऽप्यस्ति, कृतं स प्राह तत् पठ ॥ ५४ ॥
वेश्यानां क नरे प्रीतिर्नीरसं कीदृशं फलम्? । उपक्षये च को धातुर्वाजिनां किं प्रशस्यते ? ॥ ५५ ॥
प्रद्युम्नस्य कवेरस्य, गुरूणां श्रीमतामिह । कनकप्रभसूरीणां, गुरवः के च विश्रुताः? ॥ ५६ ॥
पाठयित्वा पुनस्तं च, श्लाघित्वा कवितागुणान् । मैत्री बलात्मजः प्राह, श्रीदेवानन्दसूरयः ॥ ५७ ॥
श्रीमन्तो देशनावारानंतदर्शितमूर्त्तयः । जयन्तु मद्गुरोरर्थ्याः, कुमारोऽपाठयत् पुनः ॥ ८९ ॥
ततः प्रोचे परिज्ञातं, श्रीदेवानन्दसूरयः । अथ चित्रमतिः प्राह, निजं गूढचतुर्थकम् ॥ ९० ॥
सज्ज्ञानसूक्तयः कर्मनिकरप्रभाविष्णवः । श्रेयसे सन्तु नः पूज्याः, पुनरूचे च पाठतः ॥ ९१ ॥
कुमारोऽथावदज्ज्ञातं, कनकप्रभसूरयः । प्रोचेऽथ भूषणः पर्षद्भूषणो गूढतुर्यकम् ॥ ९२ ॥
धर्मवीरत्वसकलः, श्रितबान्धवतां श्रितः । श्रीप्रद्युम्नकवेर्नन्यात् कुमारोऽपाठयत्पुनः ॥ ९३ ॥
क्षणं विचिन्त्य च प्राह, धर्मबान्धववीकलः ।

वृत्तिकरणं गार्हस्थ्यसंबंधश्च-श्रीमन्तः प्रद्युम्नसूरयः श्रीमत्या लक्ष्मीरूपाया लक्ष्म्याख्याया रमणीजनगणालंकारभूताया: कुक्षिसरसि सरसिजायमानाः, श्रीमतां च वकुलदेवानां प्राग्वाटान्वयविभूषणानां कुलालंकरणस्य श्रीकुमारसिंहाभिधानस्य कुलप्रद्योतका इति प्रशस्तेरन्त्यायाः 'प्राग्वाटान्वये'ति ( २४५ ) काव्यादवसीयते, यद्यप्यत्र श्रीमतो धन्धस्य श्रीकुमारसिंहापत्यत्वमात्रं संसूचयंति परं श्रीधन्धव्यवहारी श्रीमतां सहजो बान्धव इति 'सहजेनार्थितो धन्धनाम्ने'ति प्रस्तावनाद्वितीयकाव्यात् स्पष्टतरमवगीयत एव, ततश्च श्रीमतामपि त एव जनयितारः, श्रीसमरादित्यसंक्षेपे तु 'प्रद्युम्नस्य कवेर्लक्ष्मीजानिः किमिमिधः पिता ॥ ५० ॥ कुमारसिंह इत्युक्तं, कुमारेणे'ति वचनात् स्पष्टमेव स्वजनकस्य कुमारसिंहेत्यभिधानमुक्तं, यद्यपि 'धर्मवीरन्वमकल०' इत्यादिश्लोकोक्ते गूढचतुर्थके 'धर्मबांधववीकल' इति बंधुनाम स्पष्टितं, परं श्रीवीकलस्य धर्मबांधवत्वेन श्रीधन्धस्य च सहजबान्धवताख्यानं संगतमेव, अनेन धर्मपत्न्यादयः शब्दा नाभिधातुमुचिता इति चेन्निर्णीयते नानुचितं स्यात्।

ग्रन्थानां कर्तृत्वं शोधकत्वं च 'मत्या सतां संमतः, सूरीणां सुकवित्वशोधनविधौ प्रद्युम्नसूरिः कविः' इति श्रीसमरादित्यसंक्षेपे अत्र न स्पष्टमुक्तत्वात् अपरसुकविकृतानां शोधकत्वं ज्ञायते वाङ्मयानां, तत्तद्ग्रन्थकृद्भिरपि स्पष्टमेव स्वस्वग्रन्थानां श्रीप्रद्युम्नसूरिभिः शोधनमनुमतं, तथा च श्रीबालचन्द्राचार्या उपदेशकन्दल्यां विवेकमंजरीवृत्तौ च श्रीदेवेन्द्रसूरयः उपमितिसारोद्धारे श्रीउदयप्रभसूरयः श्रीउपदेशमालाकर्णिकावृत्तौ श्रीमुनिदेवसूरयः श्रीशान्तिनाथचरित्रे श्रीप्रभाचन्द्राः प्रभावकचरित्रे श्रीरत्नप्रभसूरयः कुवलयमालाकथासंक्षेपे श्रीधर्मकुमारसुधियः श्रीशालिभद्रचरित्रे श्रीविनयचंद्राचार्याः श्रीमल्लीनाथचरित्रे श्रीमानतुंगसूरयश्च श्रीमुनिसुव्रतचरित्रे स्पष्टतरं श्रीमतां प्रद्युम्नसूरीणामेव तत्तद्ग्रंथशोधकतामाचरव्युः

रचनाकालः—यद्यपि अनेकानि ग्रन्थरत्नानि श्रीमद्बुद्धिरत्नाकरादुन्मुद्रितानि भविष्यन्ति परं तल्लाभाभावात् तत्तद्ग्रन्थरचनायाः कालो निर्णेतुं न शक्यः, परं श्रीसमरादित्यसंक्षेपे ' वर्षे वारिधिपक्षयक्षगणिते ' इत्युक्तेः, अत्र च ' वर्षेऽष्टपक्षयक्षाख्ये ' इत्युक्तेः आद्या कृतिः चतुर्विंशत्यधिकायां त्रयोदशशताब्द्यां परा च अष्टाविंशत्यधिकायां त्रयोदशशताब्द्यां चाकारीति निस्संदिग्धमेव, १२९८ तः १३२२ पर्यन्ते ग्रन्थानां शोधनस्योल्लेखादवसीयते एतद्यदुत कर्तृताशोधकते श्रीमतां सहैव, एते सहभाविन्यौ क्वचिदेव, परं श्रीमत्स्वभयमप्यविशेषेण।

शोधनमस्या वृत्तेः-वादीन्द्रदेवसूरिवंशे श्रीमदनचंद्रगुरुशिष्यः। प्रथमादर्शेऽदर्शयदेनां मुनिदेवमुनिदेवः ॥ १ ॥ ( २४२ ) इत्युक्तेः 'लिखने शोधने सज्जो, मुनिदेवो मुनीश्वरः' (२४५) इत्युक्तेश्च स्पष्टमस्याः शोधने लिखने च श्रीवादिदेवसूरिवंशीयश्रीमुनिदेवाभिधाः सज्जाः सुधियः, अनेन विचक्षणतमा अपि पूर्वसूरीन्द्राः ग्रन्थानां ग्रन्थने शोधने लिखने चापि सज्जा एव बभूवुरिति निस्संदेहं, अनुकरणीयं चैतदैदंयुगीनानामपि महात्मनां, श्रीसमरादित्यसंक्षेपोऽपि श्रीमद्भिर्जगच्चन्द्रसूरिभिरशोधीति 'प्रथमं लिलेख तु जगच्चंद्रः सुधीः पुस्तके' इति तदन्त्यलेखादेव स्पष्टं।

पुस्तकदुर्लभता—यद्यपि प्राचीनतरोऽयं ग्रन्थः प्रत्ना च वृत्तिरपि तथापि न द्वित्रान् पुस्तकालयानन्तरेण क्वाप्यनयोः सत्ता, न च केनापि मुद्रितपूर्वे उपयुक्ततरे चातिशयेन प्रव्राजितानां प्रविव्रजिषूणां चेति मुद्रणमनयोरारब्धं, पुस्तकालयाश्चाधुना विशेषेण जैनाभासानामेवाधीना इति न नूतनं, ततः पुण्ययत्नीयादर्शोल्लिखकृतादादर्शादेव केवलात् मुद्रिते एते इति कृते शोधनश्रमे क्षन्तव्यं क्षुण्णं क्षमाधरैरित्यर्थयते आनन्दसागरः श्रीसिद्धक्षेत्रे आषाढशुक्लप्रतिपदि २४६४ ॥

नमः वीतरागाय ।

प्राचीनतराचार्यविरचितं समरादित्यसंक्षेपकृत्श्रीप्रद्युम्नाचार्यप्रणीतवृत्तियुतं

# श्रीप्रव्रज्याविधानकुलकम् ।

अर्हन् यः परमो यमर्थमसमज्योतिर्मेयं मन्वते, चक्रे येन च कर्म्ममर्म्ममथनं यस्मै नतोऽहं प्रभो ! ।
यस्मात्क्षिप्यन्ति रागमुख्यरिपवो यस्यामलं केवलं, यस्मिन्निर्वृतिनायिका कृतरतिः स स्ताज्जिनः श्रेयसे ॥ १ ॥
अर्थेन द्वादशांगीनदखिलसमयेष्वर्हतां तुल्यरूपे, सूत्रेण प्राच्यसाधुप्रवरविरचिते ग्रन्थतः स्वल्पमाने ।
श्रीप्रव्रज्याविधानेऽर्थमहति सहजेनार्थितो यन्धनाम्ना, वृत्तिं प्रद्युम्नसूरिः प्रथयति समरादित्यसंक्षेपकर्त्ता ॥२॥

तत्र च दशाधिकाराः, तद्यथा-दुर्लभत्वं मनुष्यत्वे १, बोधेर्दुष्प्रापता २ ततः । प्रव्रज्याया दुरापत्वं ३, तत्स्वरूपप्रकाशनम् ४ ॥ १ ॥ तस्या विषमताख्यानं ५, धर्म्मस्य फलदर्शनम् ६ । व्रतनिर्वाहकत्वं च ७, श्लाघा निर्वाहकर्तृषु ८ ॥ २ ॥ मोहक्षितिरुहोच्छेदो ९, धर्म्मसर्वस्वदेशना १० । इत्थं प्रकरणेऽमुष्मिन्, दशद्वारविवेचनम् ॥ ३ ॥ तत्र प्रकरणस्यास्य महार्थस्यापि सूत्रेण स्वल्पत्वान्मनसैवेष्टदेवतां नमस्कृत्य प्रथमगाथया परमपदसौख्यमुख्यनिबन्धनमनुष्यत्वस्यैव दुर्लभतामाह—

**संसारविसमसायरभवजलवडियाण संसरंताणं । जीवाण कहवि जइ होइ जाणवत्तं व मणुअत्तं ॥१॥**

संसार एव विषमः पोतप्राप्तावपि दुस्तरत्वात् सागरः—समुद्रः तत्रापरापरजन्मजले पतितानां संसरतां–परिभ्रमतां जीवानां कथमपि-महता कष्टेन यानपात्रमिव मनुष्यत्वं यदि भवति, यतो महाभीष्मं मोहदुर्दिनं प्रबला विषयकुवाता वेला इवाधिरोहंति नवनवा मनोरथाः महाग्राद इव दुर्वारो मकरध्वजः आवर्ता इव दुस्तराः कषायाः नागदन्ता इवोत्कटा रागद्वेषाः महोर्मय इव दुःखपरम्पराः और्वानल इवार्तध्यानं वेत्रवल्लीव स्खलनहेतुर्ममता नेत्रचक्रमिव कुविकल्पजालं महामत्स्या इव व्याधयः सर्वैरपि पोतभंगहेतुभिरन्वितो विषमः संसारसमुद्रः, अत एव मनुजत्वपोतस्य दुर्लभत्वेन दृष्टान्तदशकं सूचयति, ते चामी—

**चुल्लग १ पासग २ धन्ने ३ जूए ४ रयणे य ५ सुमिण ६ चक्के य ७ । चम्म ८ जुए ९ परमाणू १० दस दिट्ठंता मुणेयव्वा ॥१॥**

तत्र चुल्लगशब्देन देशपरिभाषया भोजनमुच्यते, तत्र दृष्टान्ते श्रीब्रह्मदत्तचक्रिकथा, तथाहि-साकेतस्वामिचन्द्रावतंसस्य तनयो व्रतम् । पुराऽऽदात् मुनिचन्द्राख्यो, मुनेः सागरचन्द्रतः ॥ १ ॥ सार्थाद् भ्रष्टोऽन्यदाऽटव्यां, ग्लानो गोपैः स वीक्षितः ।

चतुर्भिर्गोपदारकैः, प्रतिबोधं पट्कृतः ॥२॥ प्रबोध्याद्दीक्षयत् सैष, चतुरश्चतुरोऽपि तान् । तन्मध्याद् द्वौ पुनर्धर्मे, जुगुप्सां चक्र-
तुर्मनी ॥ ३ ॥ तौ गत्वा [illegible] शंखपुरे सुतौ । दास्यां शाण्डिल्यविप्रस्य, सर्पदष्टौ च तौ मृतौ ॥ ४ ॥ कालिं-
जरगिरौ व्याधेन, हतौ तौ युग्मजौ मृगौ । हंसौ गंगातटे बद्ध्वा, जालिकेन निपातितौ ॥ ५ ॥ वाराणस्यां ततो भूत्वा, दत्तमा-
तंगनन्दनौ । चित्रसम्भूतसंज्ञौ तावभूतां स्नेहलौ मिथः ॥ ६ ॥ तत्र शंखमहीशेन, नमुचिः सचिवो निजः । कृतागा भूतद-
त्तस्य, प्रच्छन्नं हन्तुमिच्छता ( मार्पितः ) ॥ ७ ॥ तेनोचे नमुचिः पुत्रौ, यदि पाठयसे मम । तत् त्वां रक्षामि तद्वाक्यं, स तथैव
व्यधादथ ॥८॥ पाठयंस्तौ स तन्माता, विप्लुतः सन् जिघांसितः । भूतदत्तेन ताभ्यां तु, गुरुरित्यपसारितः ॥९॥ ततो निःसृत्य
नमुचिर्हस्तिनापुरमागतः । चक्रे सनत्कुमारेण, चक्रिणा सचिवो निजः ॥ १० ॥ इतश्च चित्रसम्भूतौ, मिलितावश्विनाविव ।
गन्धर्वगानतो हाहाहूहूणतिकृतौ इव ॥ ११ ॥ सर्वगन्धर्वसारांशामपूर्वविश्वकार्मणम् । ताभ्यां प्रकाशयन्त्यौ च, न जगौ
कस्य मानसम् ॥ १२ ॥ चित्रसम्भूतगन्धर्वौ, गीतनृत्यमनोहरौ । अन्यदा पौरगन्धर्वाः, सर्वा अपि विजिग्यिरे ॥ १३ ॥
राज्ञश्च प्रविशन्तौ तौ, पुरस्यान्तर्निषेधितौ । राजाऽऽज्ञाभंगमादाय, प्रविष्टावन्यदा पुरे ॥ १४ ॥ गायन्तावुपलक्ष्यैतौ, लोष्टयष्टया-
दिभिर्हतौ । आरक्षेण च कोपेन, दूराद् दूरतरीकृतौ ॥ १५ ॥ निन्दन्तौ स्वं स्वगीतं च, रूपं तारुण्यमेव च । मृत्यवे पर्वतारूढौ,
पाताद् झम्पां प्रदास्यतः ॥ १६ ॥ तावच्च मुनिना मृत्योर्निषिध्याथ प्रबोध्य च । तौ व्रतं ग्राहितौ तीव्रं, तपेते दुस्तपं तपः
॥ १७ ॥ अन्यदा विहरन्तौ तावागतौ हस्तिनापुरम् । सम्भूतर्षिश्च भिक्षार्थं, प्राविशन् नगरान्तरम् ॥ १८ ॥ राजमार्गगतः
सोऽथ, दृष्टो नमुचिमन्त्रिणा । साशंकनिजतत्त्वस्य निरासने पत्तीन्नयुक्त सः ॥ १९ ॥ ताडितस्तैरपक्रामन्नपि यावन्न मुच्यते । तावत्

क्रोधान्मुनिस्तेजोलेश्यामुदगिरन् मुखात् ॥ २० ॥ तत् ज्ञात्वा सपरीवारश्चक्री पौरजनावृतः । तत्राभ्येत्य मुनिं दक्षः, क्षमयामास
सामभिः ॥ २१ ॥ चित्रोऽप्यत्रान्तरे ज्ञात्वा, सम्भूतमुनिमभ्यगात् । वाक्यैः श्रुतानुगैस्तस्य, सुधीः क्रोधमरोधयत् ॥ २२ ॥
सम्भूतः शान्तकोपोऽथ, चित्रेणानायि तद्वनम् । नृपप्रभृतिको लोको, वन्दित्वाऽगान्निजाश्रयम् ॥ २३ ॥ चित्रः प्रोवाच संभूतं,
ग्रासमात्रैषिणोरपि । एवं भवेत्तिरस्कारो, नाहारस्तद् वरं हि नौ ॥२४॥ इत्यालोच्य मुनी एतौ, द्वावप्यनशने स्थितौ । अहंपूर्वि-
कया लोकस्तयोरेति विवंदिषुः ॥ २५ ॥ चक्री ज्ञात्वा च नमुचिं, पराभवकरं मुनेः । बद्धं चतुष्पथेनोर्व्यानानयत् साधुसन्निधौ
॥ २६ ॥ तौ वन्दित्वा महाभक्त्याऽदर्शयन्नमुचिं तयोः । मोचितः शोचिताचारोऽप्याभ्यां राज्ञो न कर्म्मणः ॥ २७ ॥ सपत्नी-
भिश्चतुःषष्टिसहस्रैः परिवारिता । वन्दनाय सुनन्दाऽऽगात्, स्त्रीरत्नमपि तौ मुनी ॥ २८ ॥ तस्याश्च वन्दमानाया, अलकस्पर्शतः
पदोः । सम्भूतसाधोः सम्भूतः, सर्वाङ्गपुलकोद्गमः ॥ २९ ॥ अप्यलर्कविषादेतदलकस्पर्शजं विषम् । दुःसहं यद्विपाकानुभवो
भावी भवान्तरे ॥ ३० ॥ तपसाऽनेन भूयासं, स्त्रीरत्नपतिरित्ययम् । गते सान्तःपुरे राज्ञि, निदानमकरोन्मुनिः ॥ ३१ ॥ चित्रस्तं
प्राह किं मौलिमेवं योजयसि क्रमे? । मुक्तिदानप्रभूष्णु त्वं, विषयार्थे व्ययँस्तपः ॥ ३२ ॥ ते नेत्युक्तोऽपि सम्भूतो, न मिथ्यादु-
ष्कृतं व्यधात् । मृत्वा द्वावपि सौधर्मेऽभूतां देवौ महर्द्धिकौ ॥ ३३ ॥ च्युत्वा चित्रस्य जीवोऽथ, प्रथमस्वर्गलोकतः । पुरे पुरिम-
तालाख्ये, महेभ्यस्तनयोऽभवत् ॥ ३४ ॥ च्युत्वा सम्भूतजीवोऽपि, काम्पिल्ये ब्रह्मभूपतेः । भार्यायाश्चुलनीदेव्याः, कुक्षौ सम-
वतीर्णवान् ॥ ३५ ॥ चतुर्द्दशमहास्वप्नसूचितागामिचक्रितः । स्वर्णवर्णोऽभवत् सूनुस्तस्याः सप्तधनूच्छ्रयः ॥ ३६ ॥ ब्रह्ममग्न इवा-
नन्दाद्, ब्रह्मभूपतिरस्य च । ब्रह्माण्डविश्रुतामाख्यां, ब्रह्मदत्त इति व्यधात् ॥ ३७ ॥ मित्राणि वदनानीव, चत्वारि ब्रह्म-

नाऽन्य न । कणेरदत्तो दीर्घश्च, कटकः पुष्पचूलकः ॥३८॥ ब्रह्मदत्तस्य पूर्णेषु, वर्षेषु द्वादशस्वथ । परलोकगतिं भेजे, ब्रह्मराजः शिरोरुजा ॥ ३९ ॥ दीर्घः पर्यन्निभिन्नात्तु, तस्य राज्ये न्यवुञ्जत । अदीर्घबुद्धिर्दीर्घस्तु, तत्कोशायकरोन्निजम् ॥ ४० ॥ सङ्गं ब्रह्मणः पत्न्या, चुलन्या सह नर्मकृत् । धनिशर्मा क्रमाद्वेजे, मित्रस्नेहस्य मर्मभित् ॥४१॥ दुर्वृत्तमेतयोर्वेत्ति, गणरात्रे पवित्रधीः । तिदिह न धनुर्मन्त्री, अपराधं परम् ॥ ४२ ॥ अध्यापयन्नधिगेताभ्यां, कुलं शीलं श्रुतिर्मतिः । लज्जा कुलस्य मर्यादा, त्यक्तमेकपदेऽखिलम् ॥ ४३ ॥ मा भूदेतत्कृतोऽनर्थः, कुमारस्येति सोऽमुचत् । निजं वरधनुं नाम, ब्रह्मदत्तान्तिके सुतम् ॥ ४४ ॥ तेन ज्ञापितवृत्तान्तो, ब्रह्मभूः काककोकिले । मृगेभभद्रहस्तिन्योर्वेदुकस्येव युग्मके ॥ ४५ ॥ मेलयित्वाऽथ शुद्धान्ते, गत्वा साऽऽकूतमब्रवीत् । यथा एते ( त्वामुं ) हनिष्याम्यन्नमन्यायकारिणम् ॥ ४६ ॥ तत्तद्वाक्यप्रचारेण, ककनेनेव ब्रह्मभूत् । चुलन्याः पुत्रान्यन्नदारु दीर्घो व्यदारयत् ॥ ४७ ॥ उद्वाहनं जतुगृहे, निशि ज्वाल्यो हुताशनः । उभाभ्यां मन्त्रितं त्वेवं, पुष्पचूलसुता पुना ॥ ४८ ॥ तत् ज्ञात्वा धनुर्मन्त्री, दीर्घराजं व्यजिज्ञपत् । वृद्धोऽहमधुना धर्म्मं, दिदधे त्वदनुज्ञया ॥ ४९ ॥ दूरस्थो नैव मन्योऽस्मिति व्याजादवत् स तम् । राज्यश्रीस्त्वा विना मन्त्रिन्!, यामिनीव विना विधुम् ॥ ५० ॥ ततो गङ्गातटेऽस्त्रैव, धर्म्मं सत्त्रादिना कुरु । तथा चक्रे स सत्रं चानवच्छिन्नमाहयत् ॥ ५१ ॥ दानमानोपकाराद्यैः, स प्रत्ययितपूरुषैः । चक्रे सुरंगां द्विक्रोशां, तनां जतुगृहावधिः ॥५२॥ ज्ञापितः पुष्पचूलस्तन्मन्त्रिणा दुहितुः पदे । प्रेषीद्दासीसुतां सा चोपयेमे ब्रह्मसूनुना ॥५३॥ पते महासमरस्यैरपि, प्राविशदन्तःपुरे वरे । व्यूढा ब्रह्मवदासत्वादिव दासीसुताऽजदितः ॥ ५४ ॥ चुलनी सम्मुखं प्रैषीत्, कुमारं वधूसमन्वितं । स मन्त्रिसूनुना चाहमनुनीयस्त्वनु जगिमवान् ॥ ५५ ॥ गते यामयुगे जातगृहे ज्वलति मन्त्रिसूः । पृष्टः किमेतदित्याह,

चुलनीदुष्टचेष्टितम् ॥ ५६ ॥ त्वामाक्रष्टुं सुरंगाऽस्ति, च्छन्ना तातेन दापिता । पार्ष्णिघातात् प्रकाश्यैतां, ततो निःसर गम्यते ॥ ५७ ॥ इत्युक्तो ब्रह्मसूस्तेन, तथा कृत्वा रसातले । मातृदुश्चेष्टितेनेव, लज्जितः प्राविशत् स तु ॥ ५८ ॥ क्रोशद्वितयमानेन, दीर्घरूपाऽपि साऽद्भुतम् । दत्तरंगा सुरंगाऽभूत्, तयोर्जीवितदानतः ॥५९॥ धनुर्धृतौ सुरंगातस्तुरंगावधिरुह्य तौ । पञ्चाशद्योजनीं यातावथाश्वौ मृत्युमापतुः ॥ ६० ॥ ततः पद्भ्यां गतौ ग्रामं, कोष्ठकं ब्रह्मसूनुना । प्रोक्तो वरधनुर्मित्र !, बाधेते क्षुत्तृषा च माम् ॥ ६१ ॥ प्रतीक्षस्वेति स प्रोच्य, समानीय च नापितम् । वपनं कारयित्वा च, चूलामात्रमधारयत् ॥ ६२ ॥ कषायवस्त्रो यज्ञोपवीती च ब्रह्मनन्दनः । सत्योऽभूत् पिदधे सद्यः, श्रीवत्सं पट्टकेन च ॥ ६३ ॥ ग्रामे च प्रविशन्तौ तौ, विप्रवेषावुभावपि । निमन्त्र्य भोजितौ भक्त्या, विप्रेणैकेन सादरम् ॥ ६४ ॥ भोजनान्ते द्विजेनोक्तः, कुमारो गणिकेन मे । पुराऽऽख्यायि समित्रो यः, पट्टच्छन्नभुजान्तरः ॥ ६५ ॥ भुंक्ते तव गृहे तस्य, षट्खण्डपृथिवीशितुः । त्वया बन्धुमती देया, स्वसुता तां तदुद्वह ॥ ६६ ॥ तामुद्वह्य निशां स्थित्वा, प्रातः प्रास्थात् समंत्रिसूः । ततः श्रुत्वा पथो रुद्धानुत्पथेनाटवीमितौ ॥ ६७ ॥ कुमारं तृषितं मुक्त्वा, वटाधो वारिणेऽगमत् । मंत्रिसूर्दीर्घयोधैश्च, रुद्धो बद्ध्वाऽथ दस्युवत् ॥ ६८ ॥ ब्रह्मदत्ते व्यधात् संज्ञां, पलायस्वेति सोऽप्यगात् । वनाद् वनान्तरं प्राणवृत्तिं चक्रे फलैर्जलैः ॥ ६९ ॥ तृतीयादिवसे वीक्ष्य, तापसं तेन संयुतः । गत्वाऽऽश्रमं कुलपतिं, ववन्दे तेन भाषितः ॥ ७० ॥ ब्रह्मभूः सत्यमेवाह, प्रोचे कुलपतिस्ततः । दिष्ट्या भ्रातृव्य ! दृष्टोऽसि, सुखं तिष्ठात्र मेऽन्तिके ॥ ७१ ॥ तेनेत्युक्तश्च तत्रैव, द्विजेनैकेन सख्यभाक् । शस्त्रशास्त्रकलाभ्यासप्रीतः प्रावृषमत्यगात् ॥ ७२ ॥ शरद्यसौ गतः सार्द्धं, तापसैः समिदाहरैः । गजस्याद्रौ सकृन्मूत्रं, वीक्ष्यास्यानुपदं ययौ ॥ ७३ ॥ न्यायाध्वनीनः सोऽध्वानमतीतः पंचयोजनीम् । ददर्शेभं च निभि-

न्वे, दिदृशे नान्ममन्मुखम् ॥ ७५ ॥ कृतशुण्डाकटाटोपं, सकोपं चाभिधावितम् । शिक्षावित् खेदयामास, चिरं नागं नरेन्द्रजः ॥ ७६ ॥ तदा कुमारपक्षन्यो, गर्जितस्पर्द्धोद्धिपं द्विपम् । धाराधरोऽम्बुधाराभिर्व्यद्रावयदुपद्रवन् ॥ ७६ ॥ कुमारोऽपि च दिग्मूढो, नर्मनेको गुरुम्नगम् । उत्तीर्णास्तस्तटेऽपश्यन्, पुराणं पुरमुद्वसम् ॥ ७७ ॥ कुमारः प्रविशँस्तत्रापश्यत् खड्गवरान्विताम् । वंशजालीं स निच्छेद, च्छेदच्छेकोऽसिना च ताम् ॥ ७८ ॥ तदन्तःस्थस्य कस्यापि, भूमपस्य शिरः पृथक् । कबन्धं च पृथग् वीक्ष्य, वीक्षाम्भोऽन्वतापत ॥ ७९ ॥ गच्छन्नग्रे महोद्याने, प्रासादं सप्तभूमिकम् । दृष्ट्वाऽऽरूढो ददर्शैकां, स्त्रीं निषण्णां सुदुःखिताम् ॥ ८० ॥ अपृच्छत् स तां का त्वं ?, किमेकाकी च शोचसि ? । सा प्राह कथय त्वं स्वं, कः ? किमर्थं समागतः ? ॥ ८१ ॥ मन्ये प्रोक्ते कुमारेणोत्थाय सा प्रणिपत्य च । ऊचे ते पुष्पचूलस्य, मातुलस्य सुताऽस्म्यहम् ॥ ८२ ॥ दत्ता ते पुष्पवत्याख्या, नाट्योन्मत्तानिलेन तु । खेचरेण हृता विद्यां, साधयत्येष भूमपः ॥ ८३ ॥ कुमारः प्राह तं शत्रुं, साधयित्वाऽहमागतः । साऽथ त्रिगुणमुत् तेनोपगम्य रमिताऽनिशम् ॥ ८४ ॥ प्रातश्च शब्दमाकर्ण्य, स प्राहैतां कुतो ध्वनिः ? । सोचे खण्डाविशाखाख्ये, कन्ये नाम्यो तव द्विषः ॥ ८५ ॥ तन्निमित्तं विवाहोपस्करहस्ते समागते । त्वं दूरे भव जानेऽहं, त्वय्यभिप्रायमेतयोः ॥ ८६ ॥ रागे रक्तां सितां गेऽन्यां, चालयिष्ये पताकिकाम् । इति संकेतमाधाय, गता साऽभ्यर्णमेतयोः ॥ ८७ ॥ क्षणांतरे च स श्वेतां, पताकां वीक्ष्य नान्वितान् । प्रियानुरागादुल्लंघ्य, वनमेकं सरोऽव्रजत् ॥ ८८ ॥ तत्र स्नात्वा स पीत्वाऽऽपस्तत्तीरवनमागतः । विधेर्विज्ञानगर्भितं, कन्यामेकामलोकत ॥ ८९ ॥ सा दास्या सह जल्पन्ती, तं पश्यत्यन्यतो ययौ । वस्त्रभूषणतांबूलभृद्दासी चाययौ पुनः ॥ ९० ॥ स्वामिन्या मे भवद्योग्यं, प्रैषीत्युक्त्वा समर्प्य च । सोचे नाथ ! तदादेशात्, त्वां नेष्ये मंत्रिमंदिरे ॥ ९१ ॥

पदोऽवधार्यतां तत्रेत्युक्तः सोऽगात् तया समम् । सा प्रोचे मंत्रिसूः प्रैषीत् , श्रीकान्ता राजपुत्र्यमुम् ॥९२॥ मन्त्रिणोपास्यमानोऽयं, निनाय क्षणदां क्षणात् । प्रातश्चोपनृपं यातः, कुमारो मंत्रिणा सह ॥ ९३ ॥ नृपेण सत्कृतः कन्यां, तद्दत्तां परिणीतवान् । ब्रह्मदत्तस्तया सार्द्धं, गणरात्रमतीतवान् ॥९४॥ ब्रह्मदत्तोऽन्यदा क्रीडन् , रहस्येनामुवाच च । एकस्याज्ञातवंशादेः, पित्रा दत्ताऽसि मे कुतः? ॥९५॥ श्रीकान्ता प्राह तत्कान्ता, वसन्तपुरपत्तने । राज्ञः शवरसेनस्य, सूनुर्मम पिता प्रभो ! ॥९६॥ पर्यस्तो राज्यतः क्रूरगोत्रिभिः पल्लिमाश्रितः । स सद्योग्रामघाताद्यैः, पुष्णाति च परिग्रहम् ॥ ९७ ॥ अहं चतुर्णां पुत्राणां, पश्चाज्जातेति वल्लभा । पित्रोक्ता वत्स ! कथ्यो मे, यस्ते कोऽपि मतो वरः॥ ९८ ॥ वीक्षमाणा सरस्तीराध्वन्यध्वन्यव्रजं सदा । त्वां समासादयं नाथ !, मनोरथपथातिगम् ॥ ९९ ॥ स पल्लीपतिरन्येद्युर्ग्रामघातकृते ययौ । कुमारोऽपि समं तेन, क्षत्रियाणां क्रमो ह्ययम् ॥ १०० ॥ ग्रामेऽथ लुट्यमाने द्राक्, कुमारस्य सरस्तटे । नत्वा वरधनुः कण्ठे, लगित्वा चारुदद् भृशम् ॥ १ ॥ आश्वासितः कुमारेण, स स्ववृत्तान्तमभ्यधात् । वटाधस्त्वां तदा मुक्त्वा, गतोऽहं नाथ ! पाथसे ॥ २ ॥ प्राप्तो दीर्घभटै रुद्धो, बद्धः पृष्टश्च दस्युवत् । अरे वरधनो ! ब्रह्मदत्तः क्वेति ? मयोदितम् ॥ ३ ॥ व्याघ्रेण भक्षितः स्थानं, दर्शयेति च तेऽब्रुवन् । इतस्ततो भ्रमंश्चक्रे, तव संज्ञां पलायने ॥ ४ ॥ परिव्राड्दत्तां गुटिकां, मुखे निक्षिप्तवानथ । तत्प्रभावाच्च निःसंज्ञो, मृत इत्युज्झितोऽस्मि तैः ॥ ५ ॥ गतेषु तेषु चाकृष्य, गुटिकां त्वां गवेषयन् । ग्रामे क्वापि परिव्राजमनमत् तेन भाषितः ॥ ६ ॥ अहं वरधनो ! मित्रं, धनोरस्मि पितुस्तव । वसुभागो महाभाग!, ब्रह्मदत्तः क्व वर्तते? ॥७॥ मया च कथिते सत्ये, म्लानास्यः स पुनर्जगौ । तदा जतुगृहे दीर्घो, वीक्ष्य चैकं करङ्ककम् ॥८॥ सुरङ्गां तत्र चापश्यत्तदन्तेऽश्वपदानि च । रुद्धवान् युवयोर्मार्गं, कुपितो धनवे तथा ॥ ९ ॥ नष्टो धनुस्ते माता तु,

[illegible]त्रा मातङ्गवाटके । शुनोऽस्यहं गतस्तत्र, तत्रैककापालिकोऽभवम् ॥ १० ॥ प्रतिवेश्य भ्रमन् पृष्टस्तैर्विद्यासाधनं जगौ । मैत्री
[illegible]भूत्तन्मयाग्र निवेदितम् ॥११॥ मातस्तत्पुत्रमित्रस्ते. कुरुते पादवंदनम् । गत्वाऽन्येद्युः स्वयं बीजपूरं सगुटिकं ददौ ॥१२॥
[illegible] श्रीनारयो[illegible] गुर्वा मन्त्राऽऽकृष्टो गतो न्यवेदयत् । स च नंस्कारकान् प्रपीन्, मया तेऽभिहितास्तदा ॥ १३ ॥ कृतेऽधुना-
ऽस्याः संस्कारे, न गतो न न वः शुभम् । गतेषु तेषु स्वस्थानमारक्षकमहं जगौ ॥ १४ ॥ भवान् भवेत् महागर्भेत्ताद्विद्यां साध-
यान्यहम् । तेनैव तन्मनो नन्वोत्पाद्य नीतः शवो बहिः ॥ १५ ॥ मण्डलं मण्डयित्वोच्चैरर्चित्वाऽऽरक्षकं ततः । दिक्पूजाछमना
प्रेष्य, त्वांचो गुटिकयाऽन्यया ॥१६॥ कृत्वा सचेतनां स्वं च, ज्ञापयित्वा निवार्य च । रुदतीं तां तातमित्रदेवशर्मगृहेऽमुचम् ॥ १७ ॥
पुत्रम् ॥ अन्यदागामिनो दिष्ट्या, त्वमन्वं पुण्यगाजिरन् । तत्पृष्टश्च स्ववृत्तान्तं, कुमारोऽपि न्यवेदयत् ॥ १८ ॥ दीर्घातङ्कं पुनः
शृण्वा, तौ कौशाम्बीं समीयतुः । तत्र सागरदत्तस्य, श्रेष्ठिनो बुद्धिलस्य च ॥१९॥ उद्यानेऽपश्यतां लक्षं. पणन्तौ कुक्कुटाहवम् । तत्र
सागरोऽप्यजात्येन. भग्नः सागरकुक्कुटः ॥ २० ॥ मन्त्रिभूः सागरं प्राहाजात्यं त्वजात्यभङ्गदम् । पश्यामि त्वदनुज्ञातोऽहं तं बुद्धि-
लकुक्कुटम् ॥२१॥ तत्पुक्तो व्योमवल्लीपूर्णाङ्घ्रि कुक्कुटं विदन् । निषिद्धो बुद्धिलेनार्धलक्षदानस्य संज्ञया ॥ २२ ॥ मित्रसङ्केततो
मन्त्र[illegible]मुखितः पदैः । आकृष्यायोध्यपत्नीं तां, भग्नो बुद्धिलकुक्कुटः ॥ २३ ॥ सागरो रथमारोप्यानयत्तौ सुहृदौ गृहे ।
[illegible]ननानभोगास्तत्र तौ तस्थतुः सुखम्॥२४॥अन्यदा किञ्चिदागत्य, गते बुद्धिलकिङ्करे । मन्त्री लक्षार्धलक्षाया, लब्धं हारम-
[illegible]गत ॥ २५ ॥ कुमारे निजनामांकं, लेखं तत्र च पश्यति । मूर्तं वानिकमभ्येत्य, तावत् सा न्यास्यतां मुदा ॥ २६ ॥ मन्त्रिणे
[illegible]दागत्य, गताऽस्तोऽन्यथ मन्त्रिभूः । ततः कुमाराय लेखमतिलेखार्थमैदर्शो ॥ २७ ॥ मयोक्ता ब्रह्मदत्तस्य, कस्य लेखोऽथ

साऽवदत्। धनप्रवरपुत्र्यस्मि, रत्नवत्यत्र सादरा ॥ २८ ॥ अथैतया वरार्थिन्याऽऽराद्धो यक्षो वरं ददौ । चक्रिणं ब्रह्मदत्ताख्यं, श्रीवत्साङ्कं सुलक्षणम् ॥ २९ ॥ आख्यत्तु यक्षः स ज्ञेयः, स्वभ्रात्रोः कुक्कुटाहवे । त्वया समित्रोऽप्यायातस्तेन सार्धं च सङ्गमः ॥ ३० ॥ पूर्वं मन्मन्दिराऽऽसन्ने, भावि तद्यक्षभाषितम् । ध्यायन्त्या रत्नवत्याऽसौ, कुक्कुटाजौ विलोकितः ॥३१॥ प्रैषि बुद्धिलदासस्य, हस्ते लेखश्च तत्कृते । तत्तस्य ब्रह्मदत्तस्य, प्रतिलेखं ममार्पय ॥ ३२ ॥ प्रतिलेखं त्वदीयं चार्पयित्वा प्रैषि सा मया । कुमारः सानुरागोऽभूद्रत्नवत्यां तदाद्यपि ॥३३॥ अष्टभिः कुलकम् ॥ दीर्घोपरोधात् कौशाम्बीभूपतौ शोधयत्यलम् । सागरो भूगृहान्तस्तौ, क्षिप्त्वाऽरक्षन्निधानवत् ॥ ३४ ॥ तौ निर्जिगमिषू रात्रौ, रथमारोह्य सागरः । कियन्तमपि पंथानं, नीत्वाऽथाचालयत् स्वयम् ॥ ३५ ॥ तौ गच्छन्तौ च यक्षस्योद्याने नारीमपश्यताम् । अस्त्रपूर्णरथारूढां, तयाऽऽहूतौ च नामतः ॥ ३६ ॥ गत्वा द्रुतं शुभे ! का त्वं?, साऽऽह या कथिता पुरा । तापस्या भवतोः साऽस्मि, रत्नवत्याख्यया शुभौ ॥ ३७ ॥ कुमारोऽथ समारोहत्तद्वचः- श्रवणोन्मदः । मनोरथं रथं चाग्रे, स्थिते धनुसुते सति ॥ ३८ ॥ क्व गम्यामिति तेनोक्ता, सोचेऽस्ति मगधे पुरे । धनावहः पितृव्यो मे, प्रेर्यतां वाजिनौ ततः ॥ ३९ ॥ नम्रां गुणवतीं तन्वीं, स तां शार्ङ्गलतामिव । आकृष्यारोह्य चोत्सङ्गे, मित्रेणावाहयत् हयान् ॥ ४० ॥ रथेनास्याटतोऽटव्यां, कण्टकश्च सुकण्टकः । चौरसेनापती सेनायुतौ तं रोद्धुमुद्यतौ ॥ ४१ ॥ तौ दूरापातिना शीघ्रवेधिना ब्रह्मसूनुना । मधुकैटभवद् दूरीकृतौ निर्जित्य जिष्णुना ॥ ४२ ॥ रणश्रान्तो रथे सुप्तोऽनुज्ञया मन्त्रिजन्मनः । प्रेयस्या सह तौ रथ्यौ, तस्थतुस्तटिनीतटे ॥ ४३ ॥ जागर्ति ब्रह्मभूर्यावत्, तावन्नैवास्ति सारथिः । तत्पदं वीक्ष्य रक्ताक्तं, मूर्च्छितो न्यपतद्रथे ॥ ४४ ॥ स्वाञ्चलेन चलेनायं, रत्नवत्याऽथ वीजितः । ससंज्ञः क्वासि मित्रेति, विललाप स बालवत् ॥४५॥ विलपन् रत्न-

कन्याऽऽगो, योगिनो नाथ ! कानने । यह्रापदि तव स्थातुं, शोचितुं चापि नोचितम् ॥ ४६ ॥ गत्वाऽथ वसतिग्रामे, शुद्धिः कार्या स्वामिन्निजः । अविघ्नमस्तु ध्रुवं धन्य !, त्वत्प्रतापेन रक्षितः ॥४७॥ तयेत्युक्तस्तुदन्वेष, रथ्यौ ग्रामं समासदत् । ग्रामेशेन निजावासे, नीत्वा पृष्टो च कारणम् ॥४८॥ कथिते तेन संप्रेष्य, नरान् संशोध्य चाटवीम् । शरं सरक्तं तैर्लब्धं, कुमारस्य पुरोऽमुचत् ॥ ४९ ॥ मृतं विदं विनिश्चित्य, कुमारः शयितो निशि । यामयुग्मेऽपतन् ग्रामे, चौरास्तेन विजिग्यिरे ॥५०॥ ग्रामेशश्चानुगो निन्ये, प्रातस्तं मगधेश्वरे । तन्नाथमे प्रियां मुक्त्वा, कुमारोऽविशदन्तरं ॥ ५१ ॥ वीक्ष्य हर्म्यगवाक्षस्थस्त्रीयुग्मेनेति भाषितः । प्रेमभाजं जनं त्यक्त्वा, गन्तुं ते युज्यते कथम् ? ॥५२॥ कोऽहं? के वा युवां? त्यागः, क? चेति ब्रह्मभूदिते । ते प्राहतुः प्रसीदेहि, विश्राम्य प्राणनायक! ॥५३॥ हर्म्यं केऽन्तः प्रविश्य, कृतस्नानाशनस्य च । ब्रह्मदत्तस्य ते स्वाख्यानिकामित्याख्यतां मुदा ॥ ५४ ॥ वैताढ्यदक्षिणश्रेण्या, नगरे शिवमन्दिरे । विद्याधरेन्द्रज्वलनशिखविद्युच्छिखासुते ॥ ५५ ॥ नाट्योन्मत्तानुजे आवां, नाम्ना खण्डाविशाखिके । तातोऽस्ति नान्यदा गत्याऽग्निशिखेन समन्वितः ॥ ५६ ॥ गच्छतोऽष्टापदे वीक्ष्य, सुरान् यात्रार्थमुद्यतः । आवां चाग्निशिखं चैव, मित्रं तात ! सहानयत् ॥ ५७ ॥ मानवर्णान्वितां रत्नीं, चतुर्विंशतिमर्हताम् । अर्चयित्वा च वन्दित्वा, वावन्दामहि चारणौ ॥ ५८ ॥ देशनान्ते मुनी तातः, पप्रच्छाग्निशिखोऽनयोः । कन्ययोः को वरो ? भ्रातृघातीति प्राहतुश्च तौ ॥ ५९ ॥ तातश्चावां च तदा म. [illegible] तातां विशतः । गत्वा सहोदरे यत्नं, कुर्वीमहि तदाद्यपि ॥ ६० ॥ स नौ भ्राताऽन्यदा पुष्पचूलपुत्रीं जहार यत् । [illegible] परं [illegible] स्वयं हि तत् ॥ ६१ ॥ तदा च पुष्पवत्यावां, सम्बोध्यावोचदुच्चकैः । ब्रह्मदत्तो युवां भर्त्ता, भवतु [illegible] ॥ ६२ ॥ मनेऽपि नौ तयोत्सुक्यात्क्षुब्धाऽचालि पताकिका । गते त्वय्यनुयान्त्यौ त्वां, ग्रामं ग्राममिहागते ॥६३॥

गतिस्त्वमेको नौ पुण्यैराकृष्टोऽसि समागतः । उद्वहावां ततो ब्रह्मदत्तस्ते परिणीतवान् ॥ ६४ ॥ रंत्वाऽऽनिशं समं ताभ्यां, पुष्पवत्यान्तिकेऽथ ते । आराज्यलाभं सम्प्रेष्यान्विष्यद् रत्नवतीं स्वयम् ॥६५॥ अदृष्ट्वा तां रजन्नेवापृष्टो ह्यूचे न वेद्म्यहम् । दृष्ट्वा स्त्री कापि दिव्यांगी, कुमारं स्वगृहेऽनयत् ॥ ६६ ॥ रत्नवत्याः पितृव्येन, कारितोपयमोत्सवः । ब्रह्मसूनुस्तया सार्द्धं, भेजे विषयजं सुखम् ॥६७॥ मृतकार्येऽन्यदाऽऽरब्धे, मन्त्रिसूनोर्द्विजन्मसु । घसत्सु विप्रवेषो द्रागेत्य प्रोचे स मंत्रिसूः॥६८॥ मद्दत्ते भोजने तृप्तिः, साक्षाद्वरधनोर्भवेत्। तच्छ्रुत्वा ब्रह्मभूरेनमाश्लिषत् साश्रुलोचनः॥६९॥ नीत्वाऽतः स्नपयित्वा च, भोजयित्वा च मंत्रिभूः । पृष्टोऽवोचत्तदा सुप्ते, त्वयि रुद्धोऽस्मि तस्करैः॥७०॥ हतोऽहं पत्रिणैकेन, दस्युना पतितो भुवि । लतान्तरे तिरोधाय, गतेष्वेषु च निःसृतः ॥ ७१ ॥ ग्रामे ग्रामेशतः शुद्धिं, ज्ञात्वा त्वामागतः प्रभो! । दृष्ट्वा त्वां दृष्टवांश्चन्द्रं, कैरव इव पार्वणम् ॥ ७२ ॥ ब्रह्मदत्तोऽवदत् क्लीबैरिव स्थेयं कियच्चिरम् ? । विना पौरुषमस्माभिर्वसन्तोऽथ तदाऽऽगमत् ॥ ७४ ॥ तदा च राज्ञो मत्तेभः, स्तम्भमुन्मील्य निर्ययौ । कन्यां स्खलद्गतिं कांचित्, कराग्रेणाग्रहीच्च सः ॥७५॥ हाहारवं कुमारश्च, श्रुत्वाऽभीस्तं प्रधावितः । तां विमोच्य वशीकृत्य, नागं स्तम्भेऽनयत् क्षणात् ॥ ७६ ॥ राजाऽपृच्छत्तदाकारविक्रमाचारविस्मितः । कोऽयं कुतस्त्यस्तं चाख्याद्रत्नवत्याः पितृव्यकः ॥ ७७ ॥ राज्ञा कन्यास्ततो दत्ता, ब्रह्मदत्तः प्रतीष्टवान् । परिणीय च तास्ताभिः, समं रेमे चिरं सुखम् ॥ ७८ ॥ अन्यदैत्य जरत्येका, तं प्रोचे भ्रामितांचला। अस्ति वैश्रवणेभ्यस्य, श्यामेत्याख्या सुता त्वया ॥७९॥ पीलोः करग्रहात् त्राता, सेच्छति त्वत्करग्रहम् । एतावद्रूपसद्रूपजितकामावकामतः ॥ ८० ॥ तयेत्युक्तः कुमारस्तं, परिणिन्ये शुभे दिने । सुबुद्धिमन्त्रिणः पुत्रीं, नन्दाख्यां मन्त्रिभूः पुनः॥८१॥ ब्रह्मदत्तस्ततो वाराणस्यां कटकभूपतेः । पुत्रीं कटकवत्याख्यां, लेभे स्वंगां चमूमपि ॥ ८२ ॥

गजैर्न्यैः सहितः सैन्यैर्नृपश्चानुमन्त्रियुक्। दीर्घं दीर्घपथे नेतुं, प्रस्थितो ब्रह्मराजभूः ॥८३॥ ब्रह्मदत्तोऽवदन्नैत्य, कटके कटकं नृपम् । मैत्री ते दीर्घराजेन, सार्द्धं व्यक्तुं न युज्यते ॥ ८४ ॥ कटकः प्राह कर्णेऽभिशपनं यस्य दुर्जनम् । मैत्रीकालुष्यकृत्तेन, सार्द्धं गच्छेति नं तद् ॥ ८५ ॥ काम्पील्यं ब्रह्मभूर्गत्वा, सदीर्घं रुरुधे ततः । दीर्घः सर्वाभिसारेण, निःससार रणोन्मुखः ॥ ८६ ॥ पापदुर्नोऽपि मा पूर्णा, सर्वभिन्नविनिर्जिते यतिः । चुलनी दुस्तपं तप्त्वा, तपः सिद्धिं क्रमादगात् ॥ ८७ ॥ ततो नासीरवीराणां, संगरः कृतसंगरः । ब्राह्मोऽभूत्तयोर्द्वन्द्वं, दीर्घश्रीब्रह्मदत्तयोः ॥ ८८ ॥ संगरे चतुरंगेण, निजाङ्गेन, तयोरथ । ब्रह्मदत्तकरं चक्रमाक्रामत् प्रकम्पं ततः ॥ ८९ ॥ प्रातं स तेन दीर्घस्य, दीर्घरज्जोरिवाकरोत् । स्तुवन्तः पुष्पवृष्टिं च, ब्रह्मदत्ते व्यधुः सुराः ॥ ९० ॥ प्रविश्य स्वपुरं पश्चात्, सर्वाङ्गानीव सर्वतः । स्त्रीरत्नं कुरुमत्याख्यां, चिल्लातं प्रत्यतिष्ठिपत् ॥९१॥ चक्री चक्रानुगो गत्वा, साधयित्वा स भारतम् । काम्पिल्यपुरमन्येद्युः, प्रविवेश महिश्वरम् ॥ ९२ ॥ सच्चतुर्दशरत्नाधीशितुर्नवनिधीशितुः । राजभिर्निदधे तस्याभिषेको द्वादशाब्दिकः ॥ ९३ ॥ तपोवने गता तस्य, द्विजः सोऽथ समागतः । विधायोपानहां मालां, वंशाग्रध्वजकारकः ॥ ९४ ॥ तं दृष्ट्वा वेत्रिणं राजाऽपृच्छत्कोऽयं? स चावदत् । द्वारस्थो द्वादशाब्दानि, देव! सेवामयं व्यधात् ॥ ९५ ॥ राजाऽथ प्राह किमेतत् ?, सोऽप्याह भवता समम् । आगतो मेऽथ संगृह्य, एतावत्य उपानहः ॥ ९६ ॥ तथापि न प्रसन्नस्त्वं, प्रत्यभिज्ञाय तं नृपः । इतस्ततालिङ्गनं चक्रे, सेवायामन्वदाऽवदत् ॥ ९७ ॥ तुभ्यं ददामि राजार्यं, किमित्युक्ते द्विजोऽवदत् । राज्येऽपि भोजनं मार्ग, सदा ज्ञातं प्रसन्न तत् ॥ ९८ ॥ अहं हि राज्यराजानां, मंदिरेषु ततोऽखिले । भुक्त्वा च भरतेऽभ्येत्य, भोक्ष्ये तव गेहे पुनः ॥ ९९ ॥ एवमस्त्विति राज्ञोक्ते, तथा कुर्वन्नवाप सः । मृत्युं न चक्रिभोज्यं तु, दुर्लभं मर्त्यजन्मवत् ॥ १०० ॥

१ मनुजदुर्लभतायां चोल्लकदृष्टान्तः

अपि नाम लभेतासौ, पुनश्चक्रिगृहेऽशनम् । न तु मानुष्यकभ्रष्टो, मानुष्यं लभते पुनः ॥ १ ॥ इति नृत्वदुरापत्वे, दृष्टान्तोऽयं निवेदितः । प्रसङ्गादागतं चक्रिकथाशेषं तु कथ्यते ॥२॥ अन्यदा नाट्यसंगीते, प्रपश्यन् पुष्पगेन्दुकम् । मूर्च्छां गतः स्मरन् जातिं, प्राग् भवान् पञ्च सोऽस्मरत् ॥ ३ ॥ ज्ञातुं प्राक्सोदरं श्लोकस्यार्द्धं स प्रथितं व्यधात् । आस्व दासौ मृगौ हंसौ, मातङ्गावमरौ तथा ॥४॥ अघोपयच्च यः कोऽपि, श्लोकार्द्धं पूरयिष्यति । राज्यार्द्धं तस्य दास्यामि, न चापूरि कश्चन ॥५॥ एतच्चाबालगोपालं, कण्ठस्थं पठ्यते जनैः । चित्रजीवोऽन्यदा तत्राऽऽगादेको विहरन् व्रती ॥ ६ ॥ तं चारघटिकात् श्रुत्वोद्याने श्लोकमपूरयत् । यथा नौ षष्ठिका जातिरन्योऽन्याभ्यां वियुक्तयोः ॥ ७ ॥ तत् पठित्वा मुनेः पार्श्वे, स राज्ञोऽग्रे पपाठ च । पृष्टश्च चक्रिणा तस्य, कविं व्यज्ञपयन्मुनिम् ॥ ८ ॥ तुष्टिदानं स दत्त्वाऽस्मै, सोत्कण्ठो मुनिमभ्यगात् । वन्दित्वा साश्रुदृक् पूर्वस्नेहात् पार्श्वे उपाविशत् ॥ ९ ॥ धर्म्मलाभं मुनिर्दत्त्वा, कारुण्यक्षीरसागरः । देशनामित्युपाक्रंस्त, चक्र्यनुग्रहकाम्यया ॥ १० ॥ राजन्नसारे संसारे, सारो धर्म्मो जिनोदितः । शरीरलक्ष्मीस्वाम्यादि, सर्वमेव चलाचलम् ॥ ११ ॥ षट्खण्डं भरतं धीर !, त्वयाऽसाधि यथा श्रिये । षड्जीवकायरक्षां त्वं, तथा साधय सिद्धये ॥ १२ ॥ ब्रह्मदत्तोऽवदद्राज्यं, भुङ्क्ष्वैतत्तपसः फलम् । सिद्धां हित्वा क्वापि नव्यां, कर्त्तुं हन्यपि नेच्छति ॥ १३ ॥ मुनिः प्रोवाच सत्योऽपि, मया त्यक्ताः श्रियः स्त्रियः । तन्नाशे वा स्वनाशे वा, तत्सम्बन्धो हि न स्थिरः ॥ १४ ॥ दासत्वे दंदशूकस्य, दशनान्मरणं स्मरन् । मृगत्वे व्याधवेधाच्च, हंसत्वे कण्ठमोटनात् ॥ १५ ॥ मातङ्गत्वे स्मर चक्रिन् !, लोष्टयष्ट्यादिताडनम् । इयत्यामपि सामग्र्यां, प्राप्तायां किमु मुह्यसि? ॥ १६ ॥ इत्थमुक्तोऽपि नैवायमबुध्यत ततो मुनिः । तमसाध्यतमं ज्ञात्वा, हित्वाऽगात् क्रमतः शिवम् ॥१७॥ भूशक्र इव चक्री तु, चक्रितां पालयत्यलम् । जवज्ञेनान्यदा तस्य, प्राभृते प्रहितो

दुतः ॥ १८ ॥ विज्ञातुमन्यदा वेगं स, तमारूढोऽश्वमेनवा । समं पुराद्बहिर्यातः, कशया तमताडयत् ॥ १९ ॥ निजित्य निजवाजेन,
रथ्यगादितिवादिनम् । गत्वैवाश्वो द्रुतोत्पत्य, स विवेश महाटवीम् ॥२०॥ श्रान्तादश्वात् समुत्तीर्योत्तार्य पर्याणमार्यधीः । पाय-
यित्वा तमश्वमश्वज्ञाचार्यो नृपः ॥ २१ ॥ स्वयं स्नात्वा पयः पीत्वा, तीर्त्वा तीरमुपागतः । अद्भुतरूपलावण्यां, लुलोके नाग-
कन्यकाम् ॥ २२ ॥ यावता वीक्षते तावदुत्तीर्णो गोनसो नगात् । सा भूत्वा नागिनी तेन, सह प्राप रहो रतिम् ॥ २३ ॥ अहो
नीचे रतिः स्त्रीणां, नोचेत्स्यां वर्णसंकरः । ध्यात्वेत्याहत्य कशया, शान्तरोषोऽमुचत् स ताम् ॥ २४ ॥ काकं पिक्या समं नाहं,
सह शक्नोऽपि सोऽवदत् । चक्रिणे ब्रह्मदत्तोऽयं, तत्तादृक् सहते कथम् ? ॥ २५ ॥ चक्री चाथ समायाते, पदपङ्क्त्यनुसारतः ।
सैन्ये स्वे शनैः स्वश्रीभृत् तेन समं ययौ ॥२६॥ गत्वा च नागकन्याऽऽख्यद्रुदती नागमीदृशम् । स्त्रीलोलो ब्रह्मदत्तो मामटव्यां
स्वां नगीभूताम् ॥२७॥ स्नानोत्तीर्णां निरैक्षिष्ट, रत्यैवात्यर्थमार्थयत् । अनिच्छन्तीं च तेनाहं, कशाभिस्ताडिताऽस्मि च ॥ २८ ॥
गतो नागकुमारोऽसौ, नृपं सोपितुं रयात् । आययौ वासवेश्मान्तः, स्त्रीनीकारो हि दुःसहः ॥ २९ ॥ तदानीं ब्रह्मदत्तं च, पट्ट-
गर्भेरमृच्छ्री । यदशापदनः स्वामिन् !, भवद्भिः किञ्चिदैक्ष्यत ? ॥ ३० ॥ नागनारीदुराचारचारणां कथयत्यथ । राज्ञि नागकुमा-
रस्तत्र, सोऽभिनन्दितोऽशृणोत् ॥ ३१ ॥ विज्ञाय स्वप्रियादोषं, शान्तरोषोऽथ सोऽभवत् । आगाच्छरीरचिन्तार्थं, बहिर्वासगृहान्नृपः
॥ ३२ ॥ नागस्तत्र सोऽशंसत्, ब्रह्मदत्तो जयत्वयम् । पातालेऽपि दुराचाररक्षिता ब्रह्मनन्दनः ॥३३॥ तद्गिरा कुपितो दग्धुकाम-
स्तमहमागमम् । श्रुत्वा च राज्ञः शान्तस्तुष्टस्तेऽस्मि वरं वृणु ॥ ३४ ॥ राज्ञोचे मम राज्ये कोऽप्यन्यायी मा स्म भूदिति ।
नागः प्राह पुनस्तुष्टः, स्वार्थं याचस्व सम्प्रति ॥ ३५ ॥ विश्वस्य राजाऽयाचिष्ट, सर्वप्राणिगिरो मम । विदिताः सन्तु नागोऽथ,

१ मनुजदुर्लभतायां चोल्लकदृष्टान्तः

प्रोचे संपत्स्यते हादः ॥ ३६ ॥ परं कथयतोऽन्यस्मै, शिरस्ते भावि सप्तधा । गते नागे महिष्याऽसौ, समं वासगृहं स्थितः ॥३७॥ शुश्राव चैकदा पल्लीं, पत्युरित्यूचुर्षीं पुरः । राजांगरागाच्छ्रीखण्डं, देहि दोहदपूर्त्तये ॥ ३८ ॥ गृहोलः प्राह मे कार्यं, जीवितव्येन नास्ति किम् ? । राजा ज्ञात्वा तयोर्भाषां, हसन्नुक्तः स्वभार्यया ॥ ३९ ॥ हासस्य कारणं किं ? ते, कथितं मृत्युदायकम् । तेनेत्युक्ते पुनः प्राहः, तद्वाक्याप्रत्यया प्रिया ॥ ४० ॥ ममापि गोप्यमित्यात्थ, मृत्योरपि च दुस्सहम् । तदावयोः समं मृत्युरस्तु प्रेमप्रपन्नयोः ॥४१॥ ततः सान्तःपुरो वेलावित्तगौरावितैः सह । स्त्रीग्रहेऽपि ततो राजा, श्मशाने मृत्यवेऽचलत् ॥ ४२ ॥ सवल्लभस्य तस्याथ, गजारुढस्य गच्छतः । आजके सम्मुखे छागी, छागं प्रोचे स्वभाषया ॥ ४३ ॥ जवपूलमितो राशेर्दोहदं देहि मे प्रिय ! । छागोऽवादीद्यवादाने, मृत्युर्मे चक्रिपत्तितः ॥ ४४ ॥ छागी प्रोचे त्यजत्येप, भार्यार्थे जीवितं नृपः । सस्नेहस्त्वं तु निःस्नेहः, पशुर्मूर्खश्च वर्त्तते ॥ ४५ ॥ छागोऽवदन्न मूर्खोऽहं, मूर्खोऽयं पशुरप्ययम् । अनेकस्त्रीपतिः प्राणांस्त्यजत्येकस्त्रियः कृते ॥ ४६ ॥ चक्री तद्वाक्यमाकर्ण्य, तं चानाय्यान्तिके छगम् । कण्ठेऽस्य न्यस्य सौवर्णमालां वेश्म निजं ययौ ॥ ४७ ॥ सशब्दोऽताडशती षोडशानामि ( यत्तां स, स्थिता शान्ते ) त्यगान्नृपः । पालयँश्चक्रवर्तित्वपदं प्राच्यानिदानतः ॥ ४८ ॥ अन्यदा मित्रविप्रेण, प्रार्थितः स्वान्नभोजनम् । ब्रह्मदत्तोऽवदद्विप्रोन्मादकृद् दुर्जरं हि तत् ॥ ४९ ॥ कृपणोऽस्यन्नदानेऽपि, वावदूकमिति द्विजम् । रसवत्या स्वया चक्री, सकुटुम्बमभोजयत् ॥५०॥ ततस्तस्य सपुत्रस्य, तीव्रकामादभून्निशि । अज्ञातज्ञातिसम्बन्धः, पशुधर्म्मः पशोरिव ॥ ५१ ॥ ह्रियोपेतः कुटुम्बस्य, नास्यं दर्शयितुं क्षमः । अचिन्तयद् द्विजो राज्ञा, पापेनाहं विगोपितः ॥ ५२ ॥ द्विजो बहिर्भ्रमन्नेकं, पशुपालमलोकत । कर्करैस्तरुपत्राणि, काणयन्तं यथेहितम् ॥ ५३ ॥ उपचर्य च तं प्रोचे, द्विजः प्रक्षिप्य

१ मनुजदुर्लभतायां चोल्लकदृष्टान्तः

गोलके । कृत्वाक्षिके नाऽऽक्रुष्टे, गतः सोऽपि तथा स्वधाम् ॥ ५४ ॥ प्राप्तोऽक्षरक्षैराहन्यमानो विप्रं स चाख्यत । तत्तु ज्ञात्वा क्रुद्धो चक्री, तद्बन्धूनप्यनायत् ॥ ५५ ॥ सोऽपि तदाऽन्वयः, पुरोधःप्रभृतीनपि । अघातयद् द्विजानित्थमादिदेश च मन्त्रिणम् ॥ ५६ ॥ नित्यं स्थालमापूर्य, विप्रनेत्रैर्ममाग्रतः । श्लेष्मातकफलैर्भृत्वा, तं तस्याग्रे मुमोच सः ॥ ५७ ॥ ब्रह्मदत्तः स्पृशन्नेत्र-बुद्ध्या तन्मृदुं हृदि । यथा नेत्र तथा प्रीतः, स्त्रीरत्नस्पर्शतोऽपि हि ॥ ५८ ॥ विप्रनेत्रधिया श्लेष्मातकान्येतस्य मृद्नतः । वपुः षोडश वर्षाणि, रौद्रध्यानानुबन्धिनः ॥ ५९ ॥ कौमारेऽष्टाविंशतिर्मण्डलित्वे, षट्पञ्चाशद् दिग्जये षोडशैव । जज्ञेऽब्दानां षट्शती चक्रिभावे, सप्ताब्दीन सप्तशतायुरेतत् ॥ ६० ॥ समयेष्वनीमित्थमतिक्रम्य स संगभाक् । रौद्रध्यानी ययौ मृत्वा, सप्तमीं नरकावनिम् ॥ इति ब्रह्मदत्तकथा । उक्तश्चोल्लकदृष्टान्तः ॥

अधुना पाशकदृष्टान्तः ॥ तथाहि गोल्लदेशेऽस्ति, ग्रामश्चणकनामकः । वेदविद्यानिधिस्तत्र, ब्राह्मणश्चणिसंज्ञया ॥ १ ॥ चणेश्वरी गृहिण्यस्ति, तस्य पुण्यगुणाश्रया । तयोश्च देवगुर्वादिनतयोर्यान्ति वासराः ॥ २ ॥ अन्यदा तस्य सुश्राद्धस्याश्रमे साधवः स्थिताः । पर्यूपास्ते स तान्नित्यं नित्यकृत्यपरायणः ॥ ३ ॥ तदा चन्द्रकान्तिस्त्वमसूचितोऽस्य सुतोऽजनि । दन्तैः समं स साधूनां, पदयोस्तेन पातितः ॥ ४ ॥ तत्पृष्टैर्मुनिभिर्भावी, नृपोऽयमिति जल्पिते । स तस्य दन्तान् घर्षित्वा, पुनराख्यन्मुनीशितुः ॥ ५ ॥ गुरवोऽपि स्म बिम्बेनान्तरितो भविता नृपः । अथास्य जनको नाम, चाणक्य इति निर्ममे ॥ ६ ॥ स बाल्यातिक्रमे जज्ञे, चतुर्वेदी षडङ्गवित् । मीमांसान्वीक्षिकीनीती, धर्मशास्त्रपुराणवित् ॥ ७ ॥ स च सुश्रावकत्वेन, सन्तोषगुणपोषवान् । परिणि-न्येऽनघां कन्या, सुब्राह्मणकुलोद्भवाम् ॥ ८ ॥ जीर्णकौसुमसंव्यानाऽपमानास्पदमागमत् । स्वस्वसुस्वाल्पदत्तासु, सुवर्णकल्प-

१ मनुजदुर्लभतायां पाशकदृष्टान्तः

चारुषु ॥१०॥ खेदमेदस्विनीं दृष्ट्वा, पृष्टा खेदनिबन्धनम् । न किंचिदपि सा प्राह, बाष्पाविलविलोचना ॥ ११ ॥ सा निःश्वास-
वती पत्युर्निबन्धेनातिपृच्छतः । आख्यद्दरिद्रतोद्भूतमपमानं पितुर्गेहे ॥ १२ ॥ स दध्यौ धिगिदं नैःस्व्यं, स्वकुलेऽप्यपमानदम् ।
मानदं धनवत्त्वं स्यादपवादविवर्जितम् ॥ १३ ॥ धनिना हि जनो गर्जत्यसत्येनापि सर्वदा । सत्येनापि च निःस्वेन, सज्जलज्जः
प्रजायते ॥ १४ ॥ किंच कार्यं विना स्नेहमर्थहीने च गौरवम् । प्रतिपन्ने च निर्वाहं, विरलाः केऽपि कुर्वते ॥ १५ ॥ ध्यात्वेति
लिप्सया सोऽगात्, पाटलीपुत्रपत्तने । प्रागन्यस्तेष्वासनेष्वाद्यासने च विनिविष्टवान् ॥ १६ ॥ आद्यमाचक्रमे तेन, चाणक्येन
यदासनम् । तदलंकुरुते नन्द, एव भद्रासनं यतः ॥ १७ ॥ नन्देन सममायातः, सिद्धपुत्रोऽवदत्तदा । वाडवो निपसादैष,
च्छायामाक्रम्य भूभुजः ॥१८॥ उक्तो नृपस्य दास्याऽथ, चाणक्यः शमवाक्यतः । द्वितीयस्मिन्निषीदास्मिन्नासने द्विजसत्तम! ॥१९॥
इत्युक्तः स तया प्राह, स्थास्यत्यत्र कमण्डलुः । न्यास्थच्च तत्र तत्पूर्वं, नात्यजच्च नृपासनम् ॥ २० ॥ इत्थमुत्थाप्यमानोऽयमा-
सनान्यपराण्यपि । दण्डयज्ञोपवीताक्षमालाद्यैररुधद् बुधः ॥ २१ ॥ दासी प्राह त्यजत्येष, न शठः पीठमादिमम् । रुणद्धि दुष्ट-
बुद्धिश्च, विष्टराण्यपराण्यपि ॥ २२ ॥ तत् किं वाताकिनैतेन, धृष्टेनेति भुजिष्यया । चिप्र उत्थापयांचक्रे, क्रमघातेन विष्टरात् ॥२३॥
तत्क्षणं चणिनः सूनुर्दारुणः प्रतिघारुणः । प्रतिज्ञामकरोदित्थं, सर्वलोकस्य पश्यतः ॥ २४ ॥ कोशभृत्यमहामूलं, मित्रपुत्रशिफा-
कुलम् । नन्दमुन्मूलयिष्यामि, ययुर्दृढ इव द्रुमम् ॥ २५ ॥ बिम्बान्तरितमात्मानं, स जानन् भाविनं नृपम् । निर्गत्य मार्ग-
यामास, नरं राज्यधरं चिरम् ॥ २६ ॥ अन्यदा यत्र नन्दस्य, मयूरपरिपोषकः । तद्ग्रामे गतवानेष, परिव्राजकवेषभृत् ॥ २७ ॥
तन्महत्तरपुत्र्याश्च, तत्र गर्भानुभावतः । दोहदश्चन्द्रपानेऽस्ति, भिक्षार्थी प्राविशत् स तु ॥ २८ ॥ तत्पृष्टः प्रोचिवान् पुत्रं, यदि मे

[illegible] निश्चिनम् । तद्दं दोहदं पूर्त्वा, दोहदं पूरयाम्यहो ॥ २९ ॥ पुत्री च पुत्रीगर्भश्चानेशतां मेति चिंतयन् । उक्तं चाणक्यवाक्यं [illegible] ॥ ३० ॥ अथ राकारजन्यन्तर्निवरान्नरसंयुतम् । चाणक्यो विदधे बुद्धिप्रकटः पटमण्डपम् ॥ ३१ ॥ तस्याः [illegible] पात्रमाजनम् । सविम्बितेन्दुविम्बं सोऽदीदृशत् तन्मृगीदृशः ॥ ३२ ॥ उक्ता पिबेन्दुविम्बं तत्, साऽपिबच्च यथा यथा । तथा तथा नरः पूर्वं, मैक्षाद्विवरं पिधान् ॥ ३३ ॥ चाणक्येऽथ गते पूर्णश्रद्धा सुतमसूत सा । स दत्तचन्द्रगुप्ताख्यः, [illegible] वर्धते ॥ ३४ ॥ चाणक्यो धातुवादेन, कृत्वा किंचन कांचनम् । तत्रैतो राजरीत्या तं, रममाणमलोकयत् ॥ ३५ ॥ [illegible], ग्रामं क्षेत्रं च कस्यचित् । ददतं तं द्विजः प्रेक्ष्य, प्रोचे किंचिद्ददस्व मे ॥ ३६ ॥ गां गृहाणेति चालोक्ते, [illegible] माम् । बालः प्रोवाच भूरेषा, वीरभोज्या गृहाण तत् ॥ ३७ ॥ तुष्टस्तद्युक्तिविज्ञानाद्गां गृहाणेति तद्वचः । [illegible], शकुनग्रन्थिमादधे ॥ ३८ ॥ कस्यायमिति तत्पृष्टे, परिव्राजकपुत्रकम् । तमाख्यद्बालकाः सोऽथमाह [illegible] ॥ ३९ ॥ ऊचे च चन्द्रगुप्तं त्वां, तत्पभूपं करोम्यहम् । स तेन सह यातश्च, चाणक्योऽमेलयच्चमूम् ॥ ४० ॥ [illegible], नन्देनाभाजि सोऽन्यदः । सचन्द्रगुप्तश्चाणक्यः, प्राणेशात् त्राणवर्जितः ॥ ४१ ॥ पृष्ठे च सादिन्यायाति, मौर्ये [illegible] । [illegible] पृष्टस्तेनाज्ञत्तं सरःस्थितम् ॥ ५० ॥ तत्रस्थं वीक्ष्य तं सादी, चाणक्यायाश्वमार्पयत् । [illegible] मज्जन, चाणक्येनासिना हतः ॥ ५१ ॥ तमाहूयाश्वमारोप्य, स्वेनारुह्यानशच्च सः । तमपृच्छत् किमध्यायि, [illegible] त्वया ? ॥ ५२ ॥ स प्राह भणिता भव्यमित्थं वेत्यार्य एव तत् । चाणक्योऽचिन्तयद्योग्योऽयं न विप्रतिपत्स्यते ॥ ५३ ॥ क्षुधितं चन्द्रगुप्तं च, मुक्त्वाऽन्नार्थोऽविशत्पुरं । तत्कालभुक्तदध्यन्नद्विजोदरमदारयत् ॥ ५४ ॥ करम्भं स गृहीत्वाऽस्य,

१ मनुजदुर्लभतायां पाशकदृष्टान्तः

॥ १९ ॥

जठरात्पिठरादिव । अभोजयदिमं बालं, कालज्ञश्चणिनन्दनः ॥ ५५ ॥ निशायां स गतो ग्रामे, भिक्षार्थी स्थविरागृहे । पर्यवेपि तयाऽर्भाणां, तदा चोष्णा विलेपिका ॥५६॥ एकश्च क्षिप्तहस्तोऽन्तः, प्लुष्टः क्रोशंस्तयोदितः । मूढ ! त्वमपि चाणक्यतुल्यो भोक्तुं न वेत्सि रे ॥ ५७ ॥ तत्पृष्टा साऽवदत्पूर्वं, सर्वं गृह्णेत पार्श्वतः । तद्विचार्य गतो बालं, भिक्षया तमभोजयत् ॥ ५८ ॥ गत्वाऽथ हिमवत्याह, मैत्र्या पर्वतकं नृपम् । राज्यं विभज्य सौन्दर्यरीत्या नन्दस्य गृह्यताम् ॥ ५९ ॥ तन्मतः पार्श्वतो देशं, क्रमेणादातुमुद्यतः । पुर्येकस्यां त्वभंगायां, त्रिदण्डीभूय सोऽविशत् ॥ ६० ॥ मत्वा तदिन्द्रकन्यानां, माहात्म्यं लोकनोदितः । मायया ताः समुत्थाप्य, तत्पुरं स्वकरेऽकरोत् ॥ ६१ ॥ इति देशं वशीकृत्य, पुष्टोऽर्थेन बलेन च । सोऽरौत्सीत् पाटलीपुत्रं, सर्वतः सह पार्वतैः ॥६२॥ नन्दो मन्दाक्षमन्दोऽथ, धर्म्मद्वारं विमार्गयन् । गच्छैकेन रथेनार्थं, गृहीत्वेत्युदितस्ततः ॥ ६३ ॥ भार्याद्वयं च कन्यां चार्थं व्यावृत्य रथेन सः । निर्यान्मौर्यं प्रपश्यंतीमपश्यत्तनुजां भृशम् ॥ ६४ ॥ नन्देन सा व्रजेत्युक्ता, यदारोहद्रथे तदा । भग्ना नवारकाश्चन्द्रगुप्तश्चैतां न्यवारयत् ॥ ६५ ॥ त्वद्वंश्या भाविनो भूपा, नवेति चाणिसूनुना । प्रोक्तेऽन्यरथमारोप्य, तां शस्ये न्यविशत् पुरे ॥ ६६ ॥ अन्तः पर्वतकेऽप्येते, द्विभागं सर्वमाहितम् । तत्र नन्दप्रयुक्ताऽऽसीत्, कन्या च विषवासिता ॥६७॥ तदिच्छुः पर्वतस्तस्याः, पाणिग्रहमकार्यत । भ्रमन्नभ्यग्नि मूर्च्छावांश्चन्द्रगुप्तमुवाच तत् ॥ ६८ ॥ वयस्य ! म्रियते सोऽथ, तत्प्रतीकारकारकः । विकटां भृकुटिं कृत्वा, चाणक्येन निषेधितः ॥ ६९ ॥ यदुक्तं तुल्यसामर्थ्यं, मर्मज्ञं व्यवसायिनम् । अर्द्धराज्यहरं भृत्यं, यो न हन्यात् स हन्यते ॥ ७० ॥ चन्द्रगुप्तः स्थितो तूष्णीं, संस्थितः पर्वतस्ततः । अभूतां चंद्रगुप्तस्य, राज्यभागावुभावपि ॥ ७१ ॥ अन्यदा नंदगृह्येषु, देशोपद्रवकारिषु । चाणक्योऽमार्गयच्चौरग्राहमुग्रतरं नरम् ॥ ७२ ॥ गतः पुराद्बहि-

१ मनुजदुर्लभतायां पाशकदृष्टान्तः

पातिनौ। प्राप्यैकं पुरुषं विष्णुगुप्तो दक्षमशिक्षयत् ॥ ९१ ॥ स जगौ यो विजेता मे, स्थालं गृह्णातु सोऽखिलम् । जये तु मम दीनार, एको देय इति स्फुटम् ॥ ९२ ॥ पणेन तेन दीव्यन्तस्तेनान्ये जिग्यिरे जनाः । स तु तैर्नेत्थमप्यर्थं, चाणक्योऽमेलयद्बहुम् ॥ ९३ ॥ अपि नाम स जीयेत, कदाचिदपरैर्नरैः । मानुष्यकात् परिभ्रष्टो, मानुष्यं लभते न तु ॥ ९४ ॥ उक्तः पाशकदृष्टांतः ॥

अधुना धान्यदृष्टान्तः,–धान्यानि यवगोधूमव्रीहिषाष्टिकशालयः । कोद्रवाणुककंगुन्यो, मुद्गमाषौ वरालकः ॥ १ ॥ तिलातसीक्षुनिष्पावा, हरिमन्थत्रिपुण्ड्रकौ । मसूरधान्यकाढक्यः, कलायश्च कुलत्थकाः ॥ २ ॥ भरतक्षेत्रसम्भूतान्येतानि निखिलान्यपि । संपिण्ड्य सर्षपप्रस्थस्तन्मध्ये च निवेश्यते ॥ ३ ॥ धान्यैः करम्बितं तं च, वृद्धाऽवचयकारिणी । सूर्पेण सर्षपप्रस्थं, पुनः पूरयते कथम् ? ॥ ४ ॥ अपि सा भृशमाराद्धदेवतायाः प्रभावतः । पूरयेन् न तु मानुष्यं, तद्भ्रष्टैर्लभ्यते परम् ॥ ५ ॥ इति ॥

अथ द्यूतदृष्टान्तः,–कांचनपुरे कनकरथो राजा पुराऽजनि । तस्यापि भूपतेः साष्टशतस्तम्भाश्रया सभा ॥ १ ॥ एकैकस्तम्भके कोणाश्चाष्टोत्तरसहस्रशः । नित्यं निविशते तत्र, स जराजर्जरांगकः ॥ २ ॥ तत्पुत्रो राज्यलोभेन, तं जिघांसति मूढधीः । तं चेंगितादिभिर्मत्वाऽमात्यो राज्ञे न्यवेदयत् ॥४॥ राज्ञाऽथ चिन्तितं लिप्सोर्नाकृत्यं किञ्चिदस्ति हि । नापेक्षते कुलं जातिं, पुण्यं प्रेम यशोऽपि हि ॥ ५ ॥ लोभाविष्टः प्रभुं मित्रं, हन्ति वन्धुमपि ध्रुवम् । ध्यात्वेत्यूचे स तं योऽनुक्रमं न सहते हि नः ॥ ६ ॥ (पूर्वराज्यासनस्थेन, द्यूतं स रमते ननु।) जयिनो द्यूतखेलासु, तस्य राज्यं प्रदीयते॥७॥ कथं जेतव्यमित्युक्ते, तेन प्राह महीपतिः। (तवैक एव) दायस्तु, दाया मे सकला अपि ॥८॥ एकैकः कोणको जेयो, वारानष्टोत्तरं शतम् । तत्सङ्ख्येषु जितेष्वेषु, स्तम्भ एको

इतश्च पाटलीपुत्रे, पवित्रक्षत्रगोत्रजः । मूलदेवः कलाचैत्यमूलदेव इवाभवत् ॥ ९ ॥ विज्ञानभूमिः कुशलः, सकलासु कलासु
च । उदारचित्तः कृत्यज्ञः, प्रतिज्ञातार्थसाधकः ॥ १० ॥ कृतज्ञो गुणरागी च, दक्षः शूरः प्रियंवदः । रूपलावण्यतारुण्यपुण्यका-
रुण्यमन्दिरम् ॥ ११ ॥ त्रिभिर्विशेषकम् ॥ नेत्रानन्दप्रदस्यापि, कणस्यापि कलानिधेः । व्यसनं तत्र तन्याज, मित्रमत्या(पत्न्या)
दिवारितः ॥१३॥ अन्यदा जनकेनैष, सरुपा परुषाक्षरम् । उक्तस्तदपमानेन, निरगान्नगरात् ततः ॥ १४ ॥ पृथ्वीं पृथ्वीं क्रमेणैष
क्रामन् चङ्क्रमणक्रमात् । उज्जयिन्यां समागच्छदतुच्छगुणसेवधिः ॥ १५ ॥ गुटिकायाः प्रयोगेण, तत्र वामनरूपभृत् । निन्दन्
बलिमनो याञ्चादैन्यं चक्रे कदापि न॥१६॥कथाप्रबन्धगन्धर्वकलाप्रवरकौतुकैः । विस्मापयन्न कस्यैष,वामनो वा मनोऽहरत्॥१७॥
स कलाकुशलां श्रुत्वा, देवतावत् पणाङ्गियम् । सामान्यनररुच्यासु, दूरमात्माभिमानिनीम् ॥ १८ ॥ तत्क्षोभाय तदासन्नं, देवस-
द्माश्रयं त्रयम् । अन्यान्यपर्णसम्बन्धरम्यं गान्धर्वमादधे ॥ १९ ॥ युग्मम् ॥ सा तदप्रतिमं श्रुत्वा, पीयूषप्रतिमं श्रुतेः । विषयं
नयदा(ना)दीनां, नैव स्वविषयं व्यधात् ॥ २० ॥ माधुर्यधुर्यमेतस्याविगीतं गीतमुच्चकैः । श्रुतिद्वारा प्रविश्यास्याश्चित्तरत्नमचो-
रयत् ॥ २१ ॥ गीतस्य विश्रमस्थानं, तस्य चित्तापहारिणः । जिज्ञासुरथ सा दक्षं, प्रैषीत् प्रेष्याजनं निजम् ॥ २२ ॥ तेन विज्ञेन
विज्ञाय, गत्वाऽऽचख्ये यथातथम् ॥ यदयं वामनः कोऽपि, गीतं गायत्यवामनम् ॥२३॥ मन्ये वामनमूर्त्ति तं, माधवं देवदत्तया ।
विचिन्त्य माधवी प्रेष्या, प्रैष्यस्याह्वानहेतवे ॥ २४ ॥ कुब्जा सा सहजेनेयं, भूत्वा विनयवामना । मधुवत् मधुरेणोच्चैर्वचसा तं
वचस्विनम् ॥२५॥ देव! त्वदीयगीतेन, स्वामिनी मे विमोहिता । देवदत्ताभिधा वेश्या, मृगवन्मृगलोचना ॥ २६ ॥ श्रुतगीतश्रुते-
स्तस्या, रञ्जिते यद्वद्धश्रुते । वद्धदृष्टे ततो दृष्टी, द्रष्टुं त्वामुत्सुके प्रभो! ॥२७॥ स्वरेण ते शरेणेव, मुखचापाच्चरिष्णुना । विद्धं तस्य

वेश !, प्रवेशमपि नो लभे ॥ ४६ ॥ तद्विभायार्य! किङ्कर्यां, दयामय ! दयां मयि । प्रसद्याथ समागत्य, मां प्रवेशय वेश्मनि ॥ ४७ ॥ निर्बन्धेन तयेत्युक्तो, न्यस्तबाहुः सुबाहुना । गृहीत्वा स गृहं नीतः, पुरोभूय प्रवेशितः ॥ ४८ ॥ तां वीक्ष्य विस्मिता देवदत्ता प्राह हलेऽसि का ? । साऽथ वामनवृत्तान्तमाख्यान्ती सर्वमाख्यत ॥ ४९ ॥ अगण्यपुण्यलावण्यं, वामनं वीक्ष्य तं मुदा । तद्याकर्ण्य सकर्णा साऽदापयच्चारु विष्टरम् ॥ ५० ॥ निविष्टो विष्टरे तस्मिन्नयं सुस्मितया तया । उक्तस्तां मधुरालापैर्हृतहृदं व्यधात् ॥ ५१ ॥ तदा वैणिक एकोऽत्रागत्य वीणामवादयत् । तुष्टा तुष्टाव तं देवदत्ता त्वं साधु साधु भोः ॥ ५२ ॥ मूलदेवोऽवददहो, जानात्युज्जयिनीजनः । अतीवपुण्यनैपुण्यः, सुन्दरासुन्दरांतरम् ॥ ५३ ॥ देवदत्ताऽऽह किं क्षूणमत्र ? प्रोवाच वामनः । वंशेऽशुद्धे सगर्भायां, तंत्र्यां क्षुण्णं स्त्रियामिव ॥ ५४ ॥ कथं ज्ञायत इत्युक्ते, तया स प्राह दर्शये । वीणामथार्पयद्वीणावादकस्तस्य विस्मितः ॥५५॥ वंशान्तः कर्करं तन्त्रीमध्यात् केशं च सोऽकृषत् । ततः समारचय्यैषोऽवीणयच्च प्रवीणधीः ५६॥ देवदत्ता तदायत्तचित्ताऽभूत् सपरिच्छदा । करिणीव सदाऽऽरावस्वभावा मौनमाश्रयत्॥५७॥ तद् वीक्ष्य स्तब्धकर्णौ च, घूर्णमानौ च विस्मितौ । गणिकावैणिकौ विश्वकर्म्माऽयमिति दध्यतुः ॥ ५८ ॥ गणिका वैणिकं प्रीता, सम्पूज्य व्यसृजत् ततः । भोजनावसरेऽभ्यर्णेऽभ्यधाच्च निजचेटिकाम् ॥५९॥ हलेऽङ्गमर्द्दमाहूय, समे स्नावाशुभावपि । शरीरसज्जनं सख्यो, मज्जनं कुर्वहे यथा॥६०॥ अनुमन्यस्व मामेव, यथाऽभ्यंगं करोम्यहम् । इत्युक्ते मूलदेवेन, सोचे जानास्यदोऽपि किम्? ॥६१॥ स प्राह नैतज्जानेऽहं, जानानान्ते स्थितः पुनः । अथ चम्पकतैलेनाभ्यंगमभ्यंगमादधे ॥ ६१ ॥ सुखयन्नयमंगे तां, छविमांसास्थिरोमसु । चक्रे हृतहृदं चित्तं, हृदन्तः सा त्वचिन्तयत् ॥ ६२ ॥ विजानाति शयोऽस्याहो, करयोर्मृदुताऽप्यहो । छन्नवेषस्तदेकः स्यात्, कोऽपि सिद्धः पुमान्

ग्राम ॥६३॥ भवानेवं गुणैर्नवं, नवे कान्तामनम् । ध्यायन्तीति देवदत्ताऽस्य, देवस्येवापतत् पदोः ॥६४॥ अवोचं न महाभाग!,
गुणैरन्यैर्दाक्षिण्यैः । आनोऽहमनुरागमवर्धन्यं, प्रतिपन्ने न वन्मनः ॥ ६५ ॥ दाक्षिण्यावारपारस्य, तदात्मानं प्रदर्शय । रूपे तवाह-
मुत्काऽस्मि, गौणीनीव परात्मनि ॥६६॥ तस्मिन्वचनामित्राम्यस्थामाकृष्य गुटिकामथ । मूलरूपधरो मूलदेवो देवोपमोऽभवत् ॥६७॥
मायावी [illegible] स्मारन्ती, तं भावन्तं न तेजसा । दर्शनदर्शनीयं सा, प्राग्मान्यममन्यत ॥ ६८ ॥ तं यथाकामरूपं च, कामरूपं
च [illegible] । [illegible] वदनोः पुनः ॥६९॥ महाप्रसाद इत्युक्त्वा, स्वयमभ्यज्य तं ततः । समं स्नात्वा च भुक्त्वा
च, दृश्ये सर्वमपाचत ॥ ७० ॥ अजल्पच्च विवेकं त्वां, नापरेण नरेण मे । केनाप्यगञ्जि दुर्जयं, मानसं मानसंभृतम् ॥ ७१ ॥
तत् सत्यं [illegible] केनैव नाक न संकथा ? । विरलं मानुषं चित्तस्यामंदानन्दकृत् पुनः ॥ ७२ ॥ त्वयोपरोधशीलेन, तत्
[illegible] । रम्यं हर्म्यं समागम्य, विश्रम्याथिह सर्वदा ॥ ७३ ॥ मूलदेवोऽवदद् गुण्ये, गुणज्ञे गुणरागिणि ! । विदेशे निर्द्धने
[illegible] मैत्री हि न स्थिरः ॥ ७४ ॥ प्रायः कार्यवशादेव, स्नेहः सर्वस्य जायते । कार्यं सर्वं धनेन स्यान्निर्धनेन न
किंचन ॥ ७५ ॥ [illegible] देशः परः स्यो वा, मनुष्याणां नैव कारणम् । न मुञ्चत्यम्बुधिस्त्यक्तं, पाञ्चजन्यं हरिः करात् ॥ ७६ ॥
[illegible], न रागः स्याद् गुणेषु तु । सद्भावः सज्जनानां हि, कोटिकोटिमुपैति यत् ॥७७॥ प्रार्थनां सर्वथाऽप्ये-
नामनुमन्यत्र से ततः । तत्रतेऽथ तयोर्जज्ञे, संयोगः स्नेहनिर्भरः ॥ ७८ ॥ देवदत्ताऽन्यदा रंगभूमौ नृत्या नृपाग्रतः । पटहं
[illegible] पार्श्वे मूलदेवादवादयत् ॥ ७९ ॥ [illegible], विनारमयन्तो नृपः । अदत्त देवदत्तायै, वरं न्यस्तस्तयाऽथ सः ॥८०॥
मूलदेवः पुन[illegible] । [illegible] प्रियया ताना, प्रोचे सानुनयं तया ॥ ८१ ॥ तव राकाशशाङ्कस्याङ्क इव व्यसनं

मनुष्य-दुर्लभतायां स्वप्न-दृष्टान्तः

प्रिय ! । निधानं बहुदोषाणां, परित्यक्तुं हि युज्यते ॥ ८२ ॥ इदं हि विघ्नो धर्म्मस्य, शौचलज्जार्थनाशनम् । सत्यशत्रुः पितृभ्रातृमातृमित्रादिमोषकृत् ॥ ८३ ॥ न देवो न गुरुर्यत्र, विवेको न मनागपि । लोकद्वयप्रणाशश्च, तद् द्यूतं देव ! मा वह ॥ ८४ ॥ इत्युक्तोऽपि न स त्यक्तुं, शक्तस्तदभवद्रसात् । व्यसने सूपदेशो न, मन्त्रो विष इवोद्भटे ॥ ८५ ॥ इतश्च निश्चलप्रेमा, तस्यामचलसार्थपः । मूलदेवोपरि द्वेषं, वहँश्छिद्राणि मार्गति ॥ ८६ ॥ तदीयशंकया मूलदेवस्त्ववसरं विना । नायाति सदने तस्याः, परायत्ता हि तेन सा ॥ ८७ ॥ जनन्याऽथ निजन्यायसदृशं शिक्षिता सुता । अचलं श्रीदमादस्त्व, मुञ्चामुं चार्थवर्जितम् ॥ ८८ ॥ सा प्राह नाहमेकान्तादम्ब ! द्रव्यानुरागिणी । गुणानुरागिणी त्वस्मि, सोचे के कितवे गुणाः ? ॥ ८९ ॥ देवदत्ताऽवदद्धीरो, दाक्षिण्याब्धिः कलानिधिः । प्रियभाषी विशेषज्ञः, कृतज्ञो गुणरागवान् ॥ ९० ॥ अतोऽहं न त्यजाम्येनमथाप्येनामबोधयत् । अनेकविधदृष्टान्तैर्गुरुः शिष्यमिवोत्कटः ॥ ९१ ॥ निर्यासं यावके प्रान्तभिक्षौ पुण्ड्रे च कृत्तकाम् । सा कदम्बा कदम्बं च, चन्दने याचिते ददौ ॥ ९२ ॥ प्रत्यूषे प्रेरिता धूपवेला देवानुमानतः । (श्रेष्ठो त्तमः प्रियतमस्तव त्वं तं तु नोज्झसि ॥ ९३ ॥ दध्यौ च देवदत्तेयं, वृद्धा गृद्धा ध्रुवं धने । स्पष्टांस्तानिति दृष्टान्तान्, दत्ते मत्येव मूढधीः ॥ ९४ ॥ अन्यदा सा तयेत्युक्ता, याचस्वेक्षुं किलाचलम् । तदाख्याते च स प्रैषीदिक्षुभिः शकटं भृतम् ॥ ९५ ॥ यत् प्रैषीक्षुभरस्तेन, तदहं करणी कथम् ? । सुतःयोक्ते जगादाम्बा !, स ह्युदारमनाः सदा ॥ ९६ ॥ सर्वस्य परिवारस्यावारितप्रसरं हि सा । दास्यतीति धिया तेन, सुधियाप्रैष्यनो भृतम् ॥ ९७ ॥ ततश्च माधवीमूचे, देवदत्ता हले ! वच । मूलदेवाग्रतः श्रद्धा, मदीयामिक्षुभक्षणे ॥ ९८ ॥ तयाऽऽख्याते गृहीत्वक्षुयष्टी द्वे तक्षति स्म सः । कृत्वा द्व्यंगुलखण्डानि, पर्वाणि प्रोज्झ्य सर्वथा ॥ ९९ ॥ चातुर्जातकवर्णेन, मिश्री-

दत्तायास्तत्राशुण्यत्तदाऽद्भुतम् ॥ ११७ ॥ अधःस्थे मूलदेवेऽथ, भृतेऽखिलमलांभसा । कुट्टिनी संज्ञयाऽभ्येयुर्भटाः प्रकटहेतयः
॥ ११८ ॥ मूलदेवं गृहीत्वा च, व्यालैर्व्याल इव द्विपः । गर्जन्नुवाच पश्यास्ति, कश्चित्ते शरणं यदि ॥ ११९ ॥ सोऽथ स्वं
वेष्टितं मत्वा, वैरिभिर्नष्टचेतनः । निरायुधं च प्रोचे तं, कुरु स्वरुचितं ननु ॥१२०॥ अचलोऽचिन्तयत् कश्चिदयं हि पुरुषोत्तमः ।
आकृत्या ज्ञायते कस्य. स्खलितं न भवे भवेत्? ॥१२१॥ उक्तञ्च कः सुखी नित्यं?, कस्य लक्ष्मीश्च निश्चला? । स्खलितं कस्य न
स्यात्? कः, खण्ड्यते नैव दैवतः? ॥१२२॥ ध्यात्वेत्यूचे भवानेवंविधाऽवस्थास्थितो मया । अमोच्यहं त्वया मोच्यस्तद्दैवाद् व्यसने
सति ॥ १२३ ॥ द्विधाऽप्युत्तीर्णनीरोऽसौ, निर्गतो मन्दिराद् द्विधा । सस्नौ स्पृष्टांत्यजेनेव, सचेलः सरसोऽन्तरे ॥ १२४ ॥
दध्यौ च मान्ययं मानम्लान्या प्रग्लानमानसः । गत्वोपायं क्वचित् कुर्वेऽमुं प्रति प्रतिविप्रियं ॥ १२५ ॥ मित्रेषु नोपकुर्वंति, नाप-
कुर्वंति शत्रुषु । ये नराः केन राजन्ते, ते मानं मानशालिषु ? ॥ १२६ ॥ ध्यात्वेति समयज्ञोऽयं, भिक्षया प्राणवृत्तिकृत् । दुःख-
वार्द्धितटं बेन्नातटं प्रत्यचलत्ततः ॥ १२७ ॥ पर्यटंश्चाटवीमेकां, प्राप द्वादशयोजनीम् । विशान्निःशम्बलो निःसहायश्चास्यां व्यचि-
न्तयत् ॥१२८॥ यदि कश्चित् द्वितीयः स्यात्, सहायो वचनेऽपि हि । सुखादुत्तीर्यते तेन, सार्द्धं विपदं चाटवीम् ॥ १२९ ॥
इति ध्यायति तत्रागाद्दर्शनीयाकृतिः क्षणात् । ब्राह्मणट्टक्कजातीयः, शबलस्थगिकां दधत् ॥ १३० ॥ पृष्टस्तेन क्व याताऽसि ?,
द्विजः प्रोचेऽटवेस्तटे । परे वीरनिधानारव्यं, ग्रामं गन्ताऽस्मि सुन्दर ! ॥ १३१ ॥ त्वं क्व गंताऽसीति पृष्टेऽपरो बेन्नातटं जगौ ।
द्विजो जगाद तर्ह्येहि, यावोऽथ चलितावुभौ ॥ १३२ ॥ अह्नो यामयुगं यद्धव्यां, ताभ्यां दृष्टं सरोवरम् । क्षणं विश्रम्य ते मार्गे,
च्छायायां गतभान्तिके ॥१३३॥ मृष्ट्वा करक्रमं छायाशालिपालिद्रुमाश्रिते । अपरेऽच्छोटयट्टक्कवाडवः शम्बलस्थगीम् ॥ १३४ ॥

साऽनन्तफलं लोकद्वये भवेत् ॥ १५२ ॥ मासोपवास्ययं मेऽद्योपवासत्रयपारणे । पारणायापतत् भाविकल्याणमणिभिद् ध्रुवम् ॥ १५३ ॥ माषान् ददे तदेतस्मै, ग्रामो ह्ययमदायकः । कतिष्वपि गृहेष्वेष, महात्मा हि यतो व्रजेत् ॥ १५४ ॥ अहं पुनर्भ्रमिष्येऽस्मिन्, ग्रामोऽस्त्यन्योऽप्यदूरतः । तत्र लप्स्येऽर्पयाम्यस्मिस्तत् कुल्माषानकल्मषे ॥ १५५ ॥ ध्यात्वेति दर्शितास्तेन, ते नतेन मुनिं प्रति । साधुर्द्रव्यादिसंशुद्धिं, ध्यात्वा दध्रे च पात्रकम् ॥ १५६ ॥ प्रवर्द्धमानभावस्तानदादित्यपठत्तथा । धन्यानां पुरुषाणां स्युः, कुल्माषाः साधुपारणे ॥ १५७ ॥ तदा नभःस्थिता साधुभक्त्या देवीत्युवाच तम् । मूलदेव ! त्वया साधु, कारितं साधुपारणम् ॥ १५८ ॥ प्रार्थयस्व ततः श्लोकार्द्धेन यत्तव रोचते । सोऽयाचद्देवदत्तां च, राज्यं चेभसहस्रभृत् ॥ १५९ ॥ देव्यूचे वत्स ! निश्चितस्तिष्ठावश्यं भविष्यति । तवेदमचिरादेव, मुनिपादप्रसादतः ॥ १६० ॥ मूलदेवस्तथेत्युक्त्वा, नत्वा च मुनिपुंगवम् । निवृत्तोऽथ मुनिर्गत्वोद्याने पारणकं व्यधात् ॥ १६१ ॥ मुनौ सर्वस्वदानेन, तदाऽनेन समोऽस्तु कः ? । मुनिनाऽपि च यो भिक्षामादायादात् महीशताम् ॥ १६२ ॥ भ्रमन्नन्यस्तु लब्ध्वाऽन्यभिक्षां विक्षोभवर्जितः । भुक्त्वा वेन्नातटं प्राप्तः, सुप्तो देश्यकुटौ स्फुटम् ॥ १६३ ॥ चरमे यामिनीयामे, स्वप्नेऽपश्यन्मुखे विशत् । यामिनीकामिनीस्वर्णकुण्डलं चन्द्रमण्डलम् ॥ १६४ ॥ कोऽपि कार्पटिकः स्वप्ने, तद्वीक्ष्यान्योऽन्यमाख्यत । ते व्याख्यन् घृतखण्डाभ्यां, मण्डकं लप्स्यसेऽद्य यत् ॥ १६५ ॥ परमार्थं न जानन्ति, स्वप्नस्यैतेऽल्पमेधसः । ध्यात्वेति मूलदेवेन, न स्वस्वप्नो निवेदितः ॥ १६६ ॥ द्रमकस्तु स भिक्षायां, सग्रच्छादनपर्वाणि । लब्धवान् घृतखण्डाभ्यां, मण्डितं प्रौढमण्डकम् ॥ १६७ ॥ मूलदेवः पुनर्गत्वाऽऽरामं चारामनायकम् । कुसुमोच्चयसाहाय्यादार्यधीः पर्यतोषयत् ॥ १६८ ॥ तस्माद्दास्यति ( दादाय ) पुष्पाणि, फलानि च शुचित्वभाक् । स्वप्नाध्येतुः सुधीर्धाम, जगाम च ननाम च

दैवप्रभावभाक् ॥१८७॥ दुष्टानां शासकस्यास्य, शासने यो न वर्त्तते । तस्याहं न क्षमामीति, प्रोच्य देवी तिरोदधे ॥ १८८ ॥ युग्मम् ॥ ततश्च मन्त्रिसामन्तपुरोधःप्रमुखो जनः । सर्वोऽप्याज्ञाविधेयोऽस्याभिषेकं प्रवणो व्यधात् ॥ १८९ ॥ दानेन गृहिरत्नेन, सद्योऽप्युप्तं फलेग्रहि । राज्यं सेभसहस्रं स, भुनक्ति व्यक्तशक्तियुग् ॥ १९० ॥ सत्यां पाणिगृहीत्यां स, राज्ये प्राज्ये च सत्यपि । नाभून्मोचयितुं शक्तो, देवदत्ताधृतं मनः ॥१९१॥ विचारधवलाभिख्येनावन्तिपतिना ततः । व्यधादुज्जागरं प्रेमसागरं प्राभृतेन्दुना ॥१९२॥इतश्च तादृशीं दृष्ट्वा, मूलदेवविडम्बनाम् । देवदत्ताऽचलेऽतीवोत्तीर्णचित्ता जगाद ताम् ॥१९३॥ वेश्याऽहं न तु पत्नी ते, तथापि हि गृहे मम । यदेवं कुरुषे तन्न, धार्यः खेदो मदर्थिना ॥ १५४ ॥ उक्त्वेति गत्वा नत्वा च, विज्ञा व्यज्ञपयन्नृपम् । वरेण तेन मे नाथ !, प्रसादः क्रियतामिति ॥ १९५ ॥ याचस्वेति नृपेणोक्ते, देवदत्ताऽवदत्ततः । मूलदेवं विना नान्य, आयोज्यः पुरुषो मम ॥ १९६ ॥ अचलो गृहमागच्छन्निषेध्यश्च नृपोऽवदत् । भवत्वेवं पुनः कोऽयं, वृत्तान्तः ? कथयस्व मे ॥ १९७ ॥ ऋजुत्वजनकस्याथ, मूलदेवस्य वैरतः । अचलद्वेषिणी सर्वं, वृत्तान्तं माधवी जगौ ॥ १९८ ॥ क्रुद्धो नृपः समाकार्यावदद्रत्ने इमे हि मे । यत् खलीकुरुषे तत् त्वं, नृपः ? किं वस्तुनिष्कृप ! ॥ १९९ ॥ अधुना शरणं कस्ते, मयि प्राणप्रणाशके ? । वेश्याऽऽह किं शुनाऽनेन, हतेनैनं विमुञ्चत ॥२००॥ नृपः प्राह गिराऽमुष्या, मुक्तोऽस्यानीय तं त्वया । प्रवेष्टव्यमिहेत्येष, प्रणम्य निरगात् पुरः ॥ २०१ ॥ अप्राप्तमूलदेवोऽयं, स्वया न्यूनतया तया । गतः पारसकूलं स, पोतं भृत्वा क्रयाणकैः ॥ २०२ ॥ वृत्तान्तं मूलदेवस्तं, चरैर्मत्वा सुसञ्चरैः । प्रेयस्यै प्रेषयल्लेखं, प्राभृतं च नृपं प्रति ॥ २०३ ॥ स्वस्ति वेन्नातटान्मूलदेवः सर्वसहाऽधिपः । प्राप्तविक्रमराजाख्यो, देवतायाः प्रसादतः ॥२०४॥ उज्जयिन्यां देवदत्तां, प्राणेभ्योऽपि प्रियां प्रियाम् । स्तनोपपीडमाश्लिष्य, समादिशति

मनुष्य- दुर्लभतायां स्वप्न- दृष्टान्तः

नाटकम् ॥२०५॥ कुरुते मे [illegible] त्रिजगत् कौतुकं प्रिये! । कार्ये नाहं पात्रदानाद्धेऽन्यत्र नृपोऽभवम् ॥२०६॥ यत्र दानं मुनीन्द्रेण, [illegible] देवता मम । तुष्टा वरं वृणु प्राह, नाभिला न मनेति मा ॥२०७॥ इभकुम्भस्तनी त्वं च, राज्यं चेभसहस्रयुक् । [illegible] यथा [illegible] विना [illegible] ॥ २०८ ॥ मत्वेति नृपमापृच्छ्यागत्य राज्यं मनोयथ । त्वत्पतिज्ञातनिर्वाहायैव [illegible]कूदिति ॥ २०९ ॥ [illegible] विलोकमाना क्षणे क्षणे । न तृप्यति स्म मद्रूपं, साक्षात् प्रियममागतम् ॥ २१० ॥ [illegible] जितकन्दर्पसुन्दरम् । तमाननानननग्रीतिन्नं मन्मानयति स्म न ॥२११॥ सोऽथ गत्वा नरेन्द्रस्याप्युपायनमुपा-[illegible] । [illegible] हस्तिसहस्रं च, हर्षेति स्म तदेव तम् ॥२१२॥ देव! श्रीमूलदेवस्त्वां, नृपीभूतो वदत्यदः । देव! प्रसद्य मे देवदत्तां [illegible] ॥ २१३ ॥ नरेशं राज्यमप्येतद्दास्येति किं नृपः ( पुनः )। इत्युक्त्वाऽऽह्वाय्य तामाकृष्य, दूतमद्भुतभाषितम् ॥२१४॥ [illegible] कर्णा । तां नृपः प्रमनाः प्रेषीद्दास्या परिवृतां ततः ॥२१५॥ वेन्नातटं समागाता, [illegible] । तथापि न [illegible] जीवितं च सा ॥२१६॥ तयोर्नरेन्द्रयोः प्रीत्या, राज्यमेकमिवाभवत् । निर्भरं च [illegible] ॥२१७॥ मूलदेवनृपः नार्देन, तया सुखनिमग्नधीः । बभूव चैत्यबिम्बादिविभानार्चनतत्परः ॥ २१८ ॥ [illegible] । वेन्नातटं तटं प्रायोऽगच्छत् पृथ्वीशनाम सः ॥ २१९ ॥ राजा विक्रमराजोऽत्र, [illegible] । प्राप्तोऽति भाजनं रत्नसम्पूर्णं प्राभृतं न्यधात् ॥ २२० ॥ नत्वा नृपं निविष्टोऽयं, विष्टरे तेन दापिते । [illegible] नानन्देनान्तरात्मतिः ॥ २२१ ॥ नृपोऽपृच्छत् कुतः श्रेष्ठिन्!, सोने पारसकूलतः । अथ ताम्बूलवरार्गैनृपस्तं [illegible] ॥ २२२ ॥ स प्राह प्रेष्यतां देव!, कोऽपि पर्णं निरूप्यते । स्वयमायामि राजोक्ते, प्रसाद इति सोऽवदत् ॥ २२३ ॥

विद्वेषिकुलकालोऽयं, तत्र पंचकुलान्वितः । गूढकोपो ययौ गोपोऽन्तरप्राप्ताशुशुक्षणिः ॥२२४॥ चन्दनागुरुमञ्जिष्ठाशंखपूगफलादि-
कम् । तेन पञ्चकुलाध्यक्षं, दर्शितं स्वक्रयाणकम् ॥ २२५ ॥ एतदेतावदेवेति ?, राज्ञोक्ते सोऽवदद्ध्रुवम् । राज्ञा पञ्चकुलं प्रोचेऽर्द्ध-
दानीक्रियतामयम् ॥२२६॥ समक्षं मम सर्वं तत्तुलायां तोल्यतां पुनः । तस्यान्तश्चाल्पमूल्यं च, बहुमूल्यं विभाव्यताम् ॥ २२७ ॥
पदप्रहारतद्भारशल्यवेधैश्च लक्षितम् । मञ्जिष्ठास्थानमध्यस्थं, रूप्यरैविद्रुमादिकम् ॥२२८॥ तत्पाटने च तद् दृष्टं, रुष्टोऽथ नृपति-
र्जगौ । निजान्निबध्यतां बाढमेष प्रत्यक्षतस्करः ॥ २२९ ॥ वेपमानवपुर्बद्धो, भटैरथ मदोत्कटैः । शिक्षामारक्षकेभ्योऽथ, दत्त्वा
सौधमगान्नृपः ॥ २३० ॥ अन्तश्चतुष्पथं सोऽथारक्षकेण नियन्त्रितः । अनुत्तरीयश्चानीतश्चौरवद्वीक्षितो जनैः ॥ २३१ ॥ गाढबद्धं
च तं वीक्ष्य, बन्धहीनं विधाप्य च । अवोचदचलानाथस्त्वं मां जानासि वा नवा ? ॥ २३२ ॥ स प्राह पृथिवीनाथं, को न
वेद? नृपोऽवदत् । ओघेनालं पटु ब्रूहि, सोचे सम्यग् न वेद्म्यहम् ॥ २३३ ॥ संज्ञया ज्ञापिता राज्ञा, देवदत्ताऽथ चाययौ । सर्वा-
ङ्गभूषणज्योतिरुद्योतितदिगन्तरा ॥ २३४ ॥ सत्रपस्तत्र पश्यंस्तामभवन्न्यग्मुखोऽचलः । नाम्नाऽपि क्रियया चापि, देवदत्ताऽथ
तां जगौ ॥ २३५ ॥ स श्रीमान् मूलदेवोऽयं, यस्त्वया भणितस्तदा । व्यसने पतितो देवोन्मोच्यः शोच्योऽप्ययं त्वया ॥ २३६ ॥
तदेष प्राणसन्देहापन्नं त्वां दीनवत्सलः । राजाऽमुञ्चदिति श्रुत्वा, स विलक्षो ननाम तौ ॥ २३७ ॥ ऊचे च यत्तदा ग्रस्तः, शुचिः
स्वामी कलानिधिः । तमसेव मया तद्धि, सर्वं क्षन्तव्यमेव मे ॥ २३८ ॥ सुधाकरकरस्पर्शसरसेऽकरवश्च यत् । देव ! चन्द्रमणौ
हन्त, हन्ताहं तापपीडनम् ॥२३९॥ यन्मूलदेव ! देवस्त्वं, मूलदेवस्तदर्थ्यसे । तत्त्वाज्ञस्तत्त्वतस्त्वां तु, न वेद निजखेदतः ॥२४०॥
देवनामांकितं नाम, प्रत्यक्षं स्वं दधत्यपि । देवी मया न विज्ञाताऽस्मि यदश्ममयोऽचलः ॥ २४१ ॥ तेनागसा प्रवेशं मेऽवन्ती-

मनुष्य- दुर्लभतायां स्वप्न- दृष्टान्तः

शोऽपि ददाति न । तन्ममागतिकस्येव, भ्रमतः स्थानदो भव ॥२४२॥ इत्युक्त्वा भूतलन्यस्तमस्तकः सोऽभवत् पुनः । पृष्ठे हस्तप्रदानेन, ताभ्यां चक्रेऽथ निर्भयः ॥ २४३ ॥ पंचभिः कुलकम् ॥ अथ संस्नप्य सानन्दं, भोजयित्वा च सादरम् । स देवदत्तया देवदूष्याणि परिधापितः ॥ २४४ ॥ नृपेण मुक्तशुल्कश्च, गतोऽवन्त्यां स तद्गिरा । विचारधवलेनापि, सत्कृतः स्वगृहे स्थितः ॥ २४५ ॥ अथ निर्घृणशर्म्मापि, श्रुत्वा तं नृपमागतः । दत्तः स एव च ग्रामो, राज्ञाऽस्यादृष्टसेवया ॥ २४६ ॥ अथ कार्प्पटिकोऽश्रौषीत्, मूलदेवं जनश्रुतेः । राजस्वप्नेन राजानं, जातं चारुविचारतः ॥ २४७ ॥ स दध्यौ तत्र गच्छामि, लभ्यते यत्र गोरसः । तं पीत्वा स्वपिमि स्वप्नं, येन पश्याम्यहं पुनः ॥ २४८ ॥ कदाऽपि प्रेक्षते स्वप्नं, सोऽपि दैवनियोगतः । न तु जन्तुर्मनुष्यत्वभ्रष्टो मानुष्यकं पुनः ॥ २४९ ॥ इति स्वप्नदृष्टान्तः ॥ अथ चक्रदृष्टान्तः–स च "राहावेहविणिम्मिय" त्ति गाथायां उपरि भणिष्यते।

अथ चर्म्मदृष्टान्तः, ह्रद एकोऽस्ति विस्तीर्णो, योजनानां सहस्रकम् । चर्म्मणेव समन्तात्तु, शैवलेन परावृतः ॥ १ ॥ कूर्मग्रीवाप्रवेशानुमानेन च्छिद्रमत्र च । प्रसारयति स ग्रीवां, हायनानां शते शते ॥२॥ एकदा कौमुदीरात्रौ, तेन ग्रीवा प्रसारिता । छिद्रेण निःसृता तेन, ज्योतिश्चक्रं स दृष्टवान् ॥३॥ स वीक्ष्य कौमुदीवल्लेस्तत्पुष्पफलसन्निभम् । दध्यौ च स्वकुटुम्बस्य, निखिलं दर्शयाम्यदः ॥ ४ ॥ ध्यात्वेति स्वकुटुम्बेन, स सार्द्धं यावदाययौ । तावत्तद् विवरं नैव, विलुलोके कथंचन ॥ ५ ॥ कदापि सोऽपि तच्छिद्रं, पुनरेव निरीक्षते । न तु मानुष्यतो भ्रष्टो, मानुष्यं लभते पुनः ॥ ६ ॥

१ नृत्वदौर्लभ्ये स्वप्नचर्मदृष्टान्तौ

॥ ३७ ॥

अथ युगदृष्टान्तः—देवः कोऽपि युगं प्राच्यां, प्रतीच्यां समिलां पुनः । स्थापयेदथ सा भ्रष्टा, जले तत्रातलस्पृशि ॥१॥ स्थारे वा भटारेव ( अस्थिरे च तटादेव ) परितोऽपि चलाचला । युगे चलाचले योगं, लभते न कथंचन ॥ २ ॥ युग्मम् ॥ प्रचण्डवातवीचीभिः, प्रेरिता सा कथंचन । युगे प्रविशेन् न तु दैवान्, नृत्वाद्भ्रष्टाः पुनर्नृताम् ॥ ३ ॥

अथ परमाणुदृष्टान्तः-तथाहि त्रिदशः कश्चिदारसेन दृषन्मयम् । स्तम्भं महान्तमुच्चूर्य, दृग्निक्षेपनिभं व्यधात् ॥ १ ॥ तच्चूर्णं स समादाय, तूर्णं गत्वा सुराचले । चूलिकायां चटित्वा च, नलिकां स्वकरेऽकरोत् ॥ २ ॥ तच्चूर्णं परितो लोकं, [द्राक्] ककुप्सु चतसृष्वपि। फूत्कृत्य पातितं वाति, महावाते सुपर्वणा ॥ ३ ॥ सुपर्वपर्वतभ्रष्टैस्तैरेव परमाणुभिः । स सुपर्वापि नो कर्तुं, समर्थस्तं पुनर्यथा ॥ ४ ॥ दुष्कर्म्मवशतो भ्रष्टस्तथा मानुषजन्मतः । निस्तुषं मानुषं जन्म, जन्मी न लभते पुनः ॥ ५ ॥ इति मनुष्यभवस्य दुरापता, बहुनिदर्शनदर्शनतः कृता । समधिगम्य च सम्यगिदं बुधाः !, सफलताकलितं कलयन्तु तम् ॥ ६ ॥ इत्थस्यां विवृतौ श्रीमत्प्रद्युम्नस्य कवेः कृतौ। नृत्वदुर्लभताद्वारं, प्रथमं पर्यपूर्यत॥७॥ ग्रन्थाग्रं ६७८ ॥ इति मनुजत्व-दुर्लभतानाम प्रथमं द्वारं समाप्तम् ॥

---

अथ बोधिदुष्प्रापता नाम द्वितीयं द्वारं गाथाप्रथमार्द्धेन तृतीयं प्रव्रज्यादुरापत्वद्वारं चोत्तरार्द्धेन सूत्रकर्ता प्रथयति—

तत्थावि बोही जिणदेसियंमि धम्मंमि निक्कलंकम्मि । पव्वज्जापरिणामो सुकयप्पुन्नस्स जइ होइ ॥ २ ॥

तत्रापि—मनुजत्वे प्राप्ते आर्यदेशशुभजातिसकलेन्द्रियपाटवजीवितव्यस्तमनोवासनावासाधु(श्रमणोपासकावासादि) सामग्री—साधुसन्निधिश्रवणेष्वपि सत्सु बोधिर्जिनदेशित-विजितरागद्वेषदेवताप्ररूपिते धर्म्मे—दुर्गतिपतज्जन्तुजातसमुद्धरणसमर्थे निष्कलंके-सकलमलकलंकविकले, दुर्लभेति गम्यते, प्रव्रज्यापरिणामस्तत्र बोधिप्राप्तावपि सुकृतपुण्यस्य यदि स्यादिति गाथार्थः ॥ तत्र बोधिद्वारं प्रथमं विव्रियते–इह हि भरतपञ्चके एरवतपञ्चके चोत्सर्प्पिण्यवसर्प्पिणीरूपकालद्वये दशदशसागरोपमकोटिकोटिप्रमाणे एकमेव सागरोपमकोटाकोटिप्रमाणं किञ्चिदूनं यावज्जिनधर्म्मः प्रवर्त्तते, प्रथमे आरकत्रये युग्मधर्म्मित्वात्, षष्ठे बिलवासित्वात्, तृतीयारप्रान्तात्तुर्यारकं पञ्चमारकं च यावज्जिनधर्म्मप्राप्तिरित्यत्यंतदुर्लभत्वमस्य भरतक्षेत्रापेक्षया, स च जिनधर्म्मः प्रथममस्यामवसर्प्पिण्यां प्रथमतीर्थकृता श्रीऋषभेण प्ररूपितः, ततस्तच्चरितं लेशतः प्रोच्यते,-आस्तेऽपरविदेहोर्व्वीविभूषणनिभं पुरम् । क्षितिप्रतिष्ठितं तत्र, धनो नाम्ना महाधनः ॥ १ ॥ सार्थवाहोऽर्थिनां बन्धुः, स वसन्तपुरं प्रति । वणिज्यार्थं प्रभूतार्थं, सार्थं कृत्वाऽन्यदाऽचलत् ॥ २ ॥ बहिरावासितायास्मै, समेत्य स्वं सहागमम् । सूरयो धर्म्मघोषाख्या, आख्यन् सोऽप्यन्वमंस्त तान् ॥ ३ ॥ तदा तस्योपदां पक्काऽऽम्राणि कश्चिदुपानयत् । स चोपनिन्ये सूरिभ्यस्तेऽभ्यधुस्तामिति स्फुटम् ॥ ४ ॥ संसिद्धमन्नं निर्बीजं, फलं च प्रासुकं जलम् । अकृताकारिताक्रीतमप्यन्नं परिकल्पते ॥ ५ ॥ सार्थवाहस्ततः प्राह, मध्येसभमिदं वचः । अहो निर्लोभताऽमीषामहो दुष्करकारिता ॥ ६ ॥ प्रशस्यैवं च दास्ये वः, कल्प्यमेवेत्युदीर्य सः । प्रणम्य प्रेष्य तान् प्रातः, प्रयाणमकरोद्धनः ॥ ७ ॥ वृषभैः करभैर्यानैरश्वैरश्वतरैर्नरैः । ऊढा तस्य क्रयाणाली, घनवातैरिवावनिः ॥ ८ ॥ सूरिश्रीधर्म्मघोषश्च, व्रजन् साधुव्रजान्वितः । रुरुचे रुचिमालीव, स्वकरैः संहरंस्तमः ॥ ९ ॥ तदा ग्रीष्मार्कतापेन. शरीराणि शरीरिणाम् । चित्तं चन्द्रादिता-

पेन, तापमापुरनर्गलम् ॥ १० ॥ तमेव ग्रीष्मजं हृत्वा, कर्तुं स्वामिव सर्वतः । विश्वंभरां नवाम्भोदपयः पूरैरपूरयत् ॥ ११ ॥ रथ-पादैश्च पादैश्च, क्षुण्णा क्ष्मा यानमानवैः । पुरा तान् समयं प्राप्यापातयत् पंकसंकटे ॥१२॥ ससार्थः सार्थपो रुद्धपथः पाथोदपाथसा । कार्यं विचार्यारण्येऽपि, शरण्यः शरणं व्यधात् ॥ १३ ॥ कुटीरे माणिभद्रेण, तृणच्छन्ने निजेऽर्पिते । शुद्धायां सूरयोऽप्यूर्व्यामवात्सुः सपरिच्छदाः ॥ १४ ॥ सार्थेऽथ क्षीणपाथेये, सार्थदोःस्थ्यं पुनः स्मरन् । तं प्रासुकाम्बरं सूरिं, स्मरघस्मरमस्मरत् ॥१५॥ततोऽथ माणिभद्रेण, समं सूरीन् मुनीनपि । ननाम धर्मलाभाशीर्लाभेऽपि स्वं निनिंद च ॥१६॥ बोधितः सूरिभिर्दत्तबोधिः शोधितमानसः । तानामन्त्र्य मुदाऽऽज्येन, प्राज्येन प्रत्यलाभयत् ॥१७॥ घृतेन तेन संसिक्तं, बोधिबीजं तथा यथा । यथाः प्रस्वन-माङ्गल्यं, फलं तस्य भविष्यति ॥ १८ ॥ अन्वहं सूरिपार्श्वस्थः, सोऽथ सुश्रावकोऽभवत् । तच्चित्तवृत्तिवत्कर्मशुचाऽथ शरदाऽऽगमत् ॥ १९ ॥ प्रास्थितोऽथ ससूरीशः, श्रीवसन्तपुरं गतः । विक्रीतक्रीतभाण्डः सन्, धनः पश्चात्ततोऽवलत् ॥ २० ॥ क्षितिप्रतिष्ठितं प्राप्य, प्राप्तविश्वप्रतिष्ठितः । सफलं दानभोगाभ्यां, विधत्ते स्म धनं धनः ॥ २१ ॥ पूर्णायुः कालतो युग्मधर्मोत्तरकुरुष्वभूत् । स्वच्छबुद्धिरसौ धर्मी, सौधर्मेऽतः सुरोऽजनि ॥ २२ ॥ अथापरविदेहेऽस्ति, विजयो गन्धिलावती । तद्वैताढ्यस्थगान्धारदेशे गन्धसमृद्धके ॥ २३ ॥ विद्याधरपुरे राजश्चन्द्रकान्तांगभूरभूत् । च्युत्वा शतबलस्यैष, पुत्रो नाम्ना महाबलः ॥ २४ ॥ युग्मम् ॥ तमधीतकलं लब्धयौवनं च पिता न्यधात् । राज्ये प्राज्येन भावेन, स्वयं तु व्रतमग्रहीत् ॥ २५ ॥ महाबलं नृपं भोगासक्तं संगीतकेऽन्यदा । निविष्टं न्यगदन्मन्त्री, स्वयंबुद्धोऽस्य बोधकृत् ॥ २६ ॥ देवार्य नृभवो दिव्यो, यदि संगीतकादिभिः । हार्यते हार्यतेऽकस्माद्, भवः कल्याणमुत्तमम् ॥ २७ ॥ राज्ञोचे समयो नायं, मन्त्र्याह समयो ह्ययम् । तवायुर्मासमात्रं यन्मत्स्पृष्ट-

ज्ञानिनाऽऽख्यत ॥२८॥ अन्यच्च राजा स्वप्ने स्वं, क्षिप्तं कूपेऽन्यमन्त्रिभिः । त्वयोद्धृतमपश्यच्च, तत् त्वं यात्वा प्रबोधय ॥२९॥ युग्मम् ॥ जातप्रतीतिस्तद्वाक्ये, कृताष्टाह्नमहोत्सवः । द्वाविंशतिदिनं भूपो, व्रती भूत्वाऽनशन्यभूत् ॥ ३० ॥ ईशाने ललिताङ्गाख्यो, देवो देवी स्वयंप्रभा । तस्यासीत् प्रेमबद्धाऽपि, सा च्युता तत्सुखैः सह ॥ ३१ ॥ स्वयम्बुद्धोऽप्यनशनाद्, दृढधर्म्माभिधः सुरः । तत्र तं दुःखिनं मत्वाऽस्याः कथां तत्पुरोऽवदत् ॥ ३२ ॥ जज्ञे सा धातकीखण्डप्राग्विदेहैकमण्डने । नन्दिग्रामे दरिद्रस्य, नागिलश्रेष्ठिनः सुता ॥३३॥ अग्रेऽपि पुत्र्यस्तस्यासन्, सप्त तस्यास्तु जन्मनि । नाम्न्यकृतेऽभिधाहीना, सोक्ता निर्नामिका जनैः ॥ ३४ ॥ प्रौढापि नोढा केनापि, दुर्भगा सा गताऽन्यदा । आनेतुं समिधां भारं, नभस्तिलकपर्वते ॥३५॥ युगन्धरर्षिं वीक्ष्यात्र, नत्वा स्वं दुःखमूचुषी । चतुर्गतिजदुःखानि, जल्पता तेन बोधिता ॥३६॥ गृहीतानशना साऽस्ति, मुनेस्तस्य पुरोऽधुना । तस्यास्त्वं दर्शयात्मानं, यथा सा स्यात् स्वयंप्रभा ॥ ३७ ॥ इत्युक्ते दृढधर्म्मेण, ललितांगस्तथाऽकरोत् । साऽपि तद्गतचित्ताऽभूत्, पुनरेव स्वयंप्रभा ॥ ३८ ॥ भूयस्तया समं भोगैर्गते भूयस्यनेहसि । तस्य च्यवनचिह्नानि, ललितांगस्य जज्ञिरे ॥ ३९ ॥ तदेशानेन्द्रनिर्देशं, यात्रां नन्दीश्वरादिषु । दृढधर्म्मोऽवदत्तस्य, तथा कुर्वंश्च्युतश्च सः ॥ ४० ॥ जम्बूद्वीपविदेहेषु, शीतानद्युत्तरे तटे । विजये पुष्कलावत्यां, लोहार्गलपुरेशितुः ॥ ४१ ॥ सुवर्णजंघभूपस्य, लक्ष्मीकुक्षिभवोऽभवत् । वज्रजंघाख्यया पुत्रः, क्रमात् प्राप्तश्च यौवनम् ॥ ४२ ॥ युग्मम् ॥ स्वयंप्रभाऽपि तत्रैव, विजये पुण्डरीकिणी । पुरी तस्यां वज्रसेनतीर्थकृच्चक्रवर्तिनः ॥ ४३ ॥ सुताऽभूच्छ्रीमती नाम्ना, जज्ञे चान्यूनयौवना । तत्स्वयंवरणे पित्राऽऽहूता दूतैर्नृपात्मजाः ॥ ४४ ॥ युग्मम् ॥ श्रीमत्या च पुरोपान्ते, केवल्यन्तिकमागतान् । देवान् वीक्ष्य स्मृता जातिः, स्मृताः पूर्वभवा निजाः ॥४५॥ सखीमुखेन विज्ञप्तं, राज्ञः स्वच-

रितं तथा । ललितांगात् परो नैव, वरो मे चिन्त्य इत्यपि ॥ ४६ ॥ ततो निर्नामिकाद्यन्तवृत्तं चित्रपटस्थितम् । च्यवनान्तं समं धात्र्या, स्थापितं राजवर्त्मनि ॥४७॥ कुमारैर्बहुभिर्दृष्टं, निर्व्यूढास्ते तु तत्र न । वज्रजंघस्तु तद् दृष्ट्वा, मूर्च्छया न्यपतद् भुवि ॥४८॥ चन्दनव्यजनाद्यैः स, स्वस्थो जातिस्मरोऽजनि । श्रीमतीसाक्षिकं पृष्टो, धात्र्या किमिदमब्रवीत् ॥ ४९ ॥ नभस्तिलकनामायं, गिरिरित्यादिकं वदन् । श्रीमत्या स वृतो वृत्तविवाहः स्वपुरं ययौ ॥ ५० ॥ पिता प्रमुदितश्चक्रे, क्रमाद्राज्यश्रिया वधूम् । सपत्नीसहितां सा तु, समुता नमिता तया ॥५१॥ अन्यदाऽऽत्तव्रते वज्रसेनार्हत्येतदंगजः । राजा पुष्कलपालोऽस्य, सामन्तैः सह विग्रहे ॥ ५२ ॥ साहाय्यं श्रीमतीजानिः, कर्तुं सदयितो व्रजन् । दृग्विषोऽत्राहिरित्यन्यवर्त्मनाऽनायि मन्त्रिभिः ॥५३॥ युग्मम् ॥ तं च प्रणतसामन्तमापृच्छ्य पुनरापतन् । विज्ञप्तो मन्त्रिभिर्देवो, देवाः केवलिनोर्महे ॥ ५४ ॥ आजग्मुस्तत्तनूद्योतात्, प्रहतं दृग्विषे विषम् । तौ च स्तस्तत्र तद्भ्रातु, ऋजुनैव पथा प्रभुः ॥ ५५ ॥ युग्मम् ॥ तत्रैत्य तौ प्रणम्याथ, तयोराकर्ण्य देशनाम् । सुतं राज्ये निधास्यामीति ध्यायन् स्वपुरं गतः ॥५६॥ राज्यलोभात्तनूजेन, विषधूमाद्विनाशितः । रात्रौ सुप्तः सभार्योऽपि, युग्मीभूत्वा गुरोऽभवत् ॥ ५७ ॥ वज्रजंघस्य जीवोऽथ, जम्बूद्वीपविदेहजे । क्षितिप्रतिष्ठितपुरे, च्युत्वा सौधर्मकल्पतः ॥५८॥ वैद्यस्य सुविधेः पुत्रो, जीवानन्दाभिधोऽजनि । बभूव श्रीमतीजीवः, श्रेष्ठिपुत्रस्तु केशवः ॥ ५९ ॥ तत्र चेशानचन्द्रस्य, राज्ञः सूनुर्महीधरः । गुणाकरः सुबुद्धिश्च, श्रेष्ठिमन्त्रिसुतावुभौ ॥ ६० ॥ सार्थवाहसुतः पूर्णभद्राख्यः षट् च ते युताः । रेजुः परोपकाराय, रसा इव रसातले ॥६१॥ विशेषकम् ॥ सर्वेष्वप्युपविष्टेषु, जीवानन्दगृहेऽन्यदा । गुणाकराभिधो भिक्षाकृते राजर्षिरागमत् ॥ ६२ ॥ दृष्ट्वा सकृमिकुष्ठं तं, भिषजं प्रत्यवोचत । कलाभृत्त्वं मुनीशेऽस्मिन्नियोजय निजां कलाम् ॥ ६३ ॥ स प्राह चिन्ते गोशी-

शीर्षचन्दनं रत्नकम्बलः । लक्षपाकं चिकित्सार्थमस्य तैलं गृहेऽस्ति मे ॥६४॥ ते श्रुत्वेति द्वयं क्रेतुं, महेभ्यविपणौ ययुः । तत्पृष्टो भूपभूः प्राह, कार्यं मुनिचिकित्सितम् ॥६५॥ महेभ्योऽचिन्तयल्लाभो, यः पात्राभयदानयोः । ततोऽनन्तगुणः साधुनीरोगत्वप्रदानतः ॥ ६६ ॥ ध्यात्वेति स ददौ तेषां, गोशीर्षं रत्नकम्बलम् । निःसंगश्च तयोर्मूल्यं, परं पदमुपाददे ॥६७॥ तेऽप्यागत्य समं जीवानन्देन मुनिमभ्ययुः । अनुज्ञाप्य च तं तस्यारेभिरे ते प्रतिक्रियाम् ॥ ६८ ॥ जीवानन्दः स्वयं लक्षपाकेनाभ्यज्य तं मुनिम् । यत्नादाच्छादयद्रत्नकम्बलेन समंततः ॥ ६९ ॥ तैलतापेन निःसृत्य, निलीनांस्तत्र शीतले । कृमीन् कृती प्रचिक्षेप, कृपालुर्गोशवे शनैः ॥ ७० ॥ तैलतापाकुलं साधुशरीरं चन्दनद्रवैः । विलिप्य शीतलं चक्रे, करैरिव सुधाकरः ॥ ७१ ॥ त्रिर्भेषजत्रयेणैवं, त्वग्मांसास्थिगतान् कृमीन् । आकृष्य मुनिमुल्लाघं, विधायाक्षमयन्नमी ॥ ७२ ॥ वितीर्णधर्म्मलाभेऽस्मिन्नन्यत्र विहृते मुनौ । मिलितेन धनेनैते, चैत्यं चक्रुः समुन्नतम् ॥ ७३ ॥ पडप्यंते परिव्रज्य, तपस्तप्त्वा सुदुस्तपम् । जज्ञिरे पूरयित्वाऽऽयुः, सुरा युगच्युतश्रियः ॥ ७४ ॥ प्राग्द्वीपप्राग्विदेहेषु, पंच तेष्वच्युताच्च्युताः । विजये पुष्कलावत्यां, पुण्डरीकिण्यधीशितुः ॥ ७५ ॥ धारिण्यां वज्रसेनस्य, तीर्थकृद्भूपतेः सुताः । जाताः केशवजीवस्तु, सुयशा राजपुत्रकः ॥ ७६ ॥ युग्मम् ॥ तेभ्यश्चतुर्दशख्यातस्वप्नसूचितचक्रितः । जीवानन्दस्य जीवोऽभूद्वज्रनाभाभिधोऽग्रजः ॥ ७७ ॥ जीवाः पुनर्नृपामात्यश्रेष्ठिसार्थेशजन्मनाम् । बाहुः सुबाहुः पीठश्च, महापीठोऽभवन् क्रमात् ॥ ७८ ॥ सुयशा वज्रनाभेन, संश्रितः सारथिः कृतः । प्राग्भवस्नेहतः सोऽपि, सहोदर इवाजनि ॥ ७९ ॥ वज्रसेनोऽन्यदा राज्ये, नियोज्य ज्येष्ठनन्दनम् । बोधितस्त्रिदशैर्दानं, दत्त्वाऽब्दं व्रतमाददे ॥ ८० ॥ राज्यं पालयतो वज्रनाभस्य सहजैः सह । चक्रमायुधशालायामभूद्वप्तुश्च केवलम् ॥ ८१ ॥ स्वामिनो महिमानं स, कृत्वा दिग्विजयोद्यतः । विजयं

साधयांचक्रे, चक्री चक्रानुगो व्रजन् ॥ ८२ ॥ चतुर्दशलसद्रत्नस्वामी नवनिधीश्वरः । साम्राज्यं स व्यधात् साधुचिकित्सावयवं समम् ॥ ८३ ॥ श्रीवज्रसेनतीर्थेशं, नन्तुं चक्री गतोऽन्यदा । विभोर्वैराग्यसंवेगमयीं शुश्राव देशनाम् ॥ ८४ ॥ प्रबुद्धस्तनयं राज्ये, न्यस्य सभ्रातृसारथिः । आत्तव्रतोऽभवद्वज्रनाभर्षिः श्रुतकेवली ॥ ८५ ॥ एकादशांगिनः शेषा, वज्रनाभस्तदाऽऽर्जयत् । विंशत्या स्थानकैः कर्म्म, तीर्थकृन्नामनामकम् ॥ ८६ ॥ वैयावृत्त्येन साधूनां, बाहुश्चक्रित्वमार्जयत् । बाहोर्बलं सुबाहुस्तु, तद्विश्रामणया मुदा ॥ ८७ ॥ तयोर्गुरुकृतां श्लाघां, श्रुत्वा त्वीर्ष्यालघू लघू । अनालोचनया कर्म्म, स्त्रीत्वहेतुं बबन्धतुः ॥ ८८ ॥ पालयित्वा व्रतं षद् ते, पूर्वलक्षांश्चतुर्दश । सर्वार्थसाधकाः सर्वार्थसिद्धे मरुतोऽभवन् ॥ ८९ ॥ इतोऽस्ति जम्बूद्वीपस्य, विदेहेऽपरपूर्वके । ईशानचन्द्रक्ष्माचन्द्रत्राता पूरपराजिता ॥ ९० ॥ तस्यां चन्दनदासस्य, श्रेष्ठिनस्तनयोऽशठः । नाम्ना सागरचन्द्रोऽस्त्यशोकदत्तश्च तत्सखा ॥ ९१ ॥ समित्रेणान्यदोद्याने, तनया तेन मोचिता । चौरेभ्यः पूर्णभद्रेभ्यकन्यका प्रियदर्शना ॥ ९२॥ मिथस्तन्मिथुनं हृद्यं, सद्यो हृद्योगमागतम् । अंगेनैवांगयोगेषु, स्वं स्वं सदनमागमत् ॥ ९३ ॥ तज्ज्ञात्वा सागरः पित्रा, रहस्येवमशिष्यत । युज्यते वणिजां वत्स !, न क्वचिद्विक्रमक्रमः ॥ ९४ ॥ मैत्री चाशोकदत्तेन, धूर्त्तेनानेन नोचिता । पितरं क्षमयामास, स्वमागः सागरस्ततः ॥९५॥ पिता सागरचन्द्रं द्राग्, भावज्ञः कन्ययाऽनया । व्यवाहयत् तयोः प्रीत्या, मिथः कालोऽत्यगाद् बहुः ॥ ९६ ॥ अशोकेनान्यदैकान्ते, प्रार्थिता प्रियदर्शना । आक्रोशन्ती सती सा तु, तं गृहान्निरवासयत् ॥ ९७ ॥ दृष्टः स दुर्मनाः पृष्टः, सागरेण च कारणम् । त्वत्पत्न्या प्रार्थितो नंष्ट्वा, निर्गतोऽस्मीति सोऽवदत् ॥ ९८ ॥ सागरस्तं ततः प्राह, विषादं मा कृथा वृथा । स्त्रियो हि चलचित्ताः स्युर्वयस्य ! त्वं तु निर्म्मलः ॥ ९९ ॥ प्राग्वत्तौ स्तः श्लथस्नेहः, सागरोऽभूत् प्रियां प्रति ।

मा भूद्भेदोऽनयोर्मत्तः, सेति भर्त्रे शशंस नो ॥ १०० ॥ कालेन सागरो मृत्वा, प्रियदर्शनया सह । तृतीयारेऽवसर्पिण्याः, शेष-पल्याष्टभागके ॥ १०१ ॥ जम्बूद्वीपस्य भरतक्षेत्रार्द्धे दक्षिणेऽजनि । सिन्धुगंगान्तरावन्यां, युग्मी तपनतुल्यरुक् ॥ १०२ ॥ माय-याऽशोकदत्तोऽपि, तत्रैवेभः सुरेभरुक् । अभूदन्योऽन्यवीक्षातो, जाता जातिस्मृतिस्तयोः ॥ १०३ ॥ अनिच्छन्नपि तेनैप, निज-स्कन्धेऽधिरोपितः । भ्रमन् मुच्छालिभिर्गीतो, नाम्ना विमलवाहनः ॥१०४॥ तथा यत् स्वल्पदुष्कृते, कृते विवदतां मिथः । युग्मिनां कथितस्तेन, राजधर्म्मस्ततश्च तैः ॥ १०५ ॥ स एव विहितो राजा, हा त्वया दुष्कृतं कृतम् ? । ब्रूत्वा नयाद् ऋजुत्वेन, तान्य-न्यायात् न्यपेधयत् ॥ १०६ ॥ तस्य चन्द्रयशोनाम्नी, पत्नी युग्ममजीजनत् । चक्षुष्मांश्चन्द्रकान्ता च, ताभ्यां नाम कृतं तयोः ॥ १०७ ॥ युग्मं प्रपाल्य षण्मासानभूद्विमलवाहनः । सुपर्णेष्वथ नागेषु, तत्पत्नी हस्तिना समम् ॥ १०८ ॥ चन्द्रका-न्ताऽथ चक्षुष्मत्कान्ता युग्ममसूयत । यशस्वी च सुरूपा च, तयोर्नाम विनिर्ममे॥१०९॥ सुपर्णनागयोर्जातौ,पिताऽम्बा च यथाक्रमम् । यशस्विराज्ये माकारनीतिर्जाता द्वितीयका ॥ ११० ॥ अभिचन्द्रः प्रियंगुश्च, तयोर्युग्ममजायत । यशस्व्युदधिषु प्रान्ते, जज्ञे नागेषु तत्प्रिया ॥ १११ ॥ अभिचन्द्रादभूद्युग्मं, चक्षुष्कान्ता प्रसेनजित् । धिक्कारनीतिस्तद्राज्ये, तत्पित्रोः पितृवद्गतिः ॥११२॥ श्रीकान्तं मरुदेवं च, प्रसेनजिदजीजनत् । स्वयं द्वीपकुमारेषु, कान्ता नागेषु चाभवत् ॥ ११३ ॥ मरुदेवादभून्नाभिर्मरुदेवी च युग्मकम् । सोऽपि द्वीपकुमारेषु, जज्ञे नागेषु तत्प्रिया ॥ ११४ ॥ नाभिः स्वर्णसनाभिश्च, मरुदेवाऽश्मगर्भरुक् । ऊर्म्मिकेयं नवा-दित्या,(दीप्ता)तस्य कालस्य मण्डनम्॥११५॥अथ प्रभुत्वं बिभ्राणे, श्रीनाभौ युगधर्म्मिणाम् । सपञ्चाशीतिपक्षेषु, तृतीयारकवर्त्तिषु ॥ ११६ ॥ चतुःसमन्विताशीतिपूर्वलक्षेष्वशेषतः । शेषेष्वापाढतुर्येऽह्नि, श्यामां वैश्र्वीं गते विधौ ॥ ११७ ॥ जीवः श्रीवज्रना-

वृषभसिंहश्रीदामेन्दुर्कध्वजघटान् सरः ।
भस्य, च्युत्वा सर्वार्थसिद्धितः । कुक्षौ श्रीमरुदेवायाः, स्वामिन्याः समवातरत् ॥ ११८ ॥
अब्धिं विमानरत्नौघवह्नीन् स्वप्नानवैक्षत ॥ ११९ ॥ सुखमस्यावतारेऽभून्नारकाणामपि क्षणम् । प्रबुद्धा नाभये स्वप्नान् , मरुदेवा
न्यवेदयत् ॥ १२० ॥ तद्विचारप्रवृत्तस्य, नाभेः शक्रादयस्तदा । एत्य नत्वा जिनोत्पत्तिमाख्याय च दिवं ययुः ॥ १२१ ॥ काले
चैत्रासिताष्टम्यामुत्तराषाढया युते । विधौ युगलधर्म्माणां, देवी सुतमसूत सा ॥ १२२ ॥ अभूद् दुन्दुभिनिर्घोषो, मुदितं नारकैरपि ।
आसीद्विश्वत्रयोद्योतो, वातो वाति स्म शीतलः ॥ १२३ ॥ अथासनप्रकम्पेन, प्रयुक्तावधयस्तदा । षट्पंचाशद्दिक्कुमार्यः, सूति-
कर्म्मार्थमभ्ययुः ॥ १२४ ॥ अष्टाधोलोकवासिन्यः, संमार्जनकपाणयः । अष्टोर्ध्वलोकवासिन्यो, जलवृष्टिपरायणाः ॥ १२५ ॥
पौरस्त्यरुचकादायुरष्टौ दर्प्पणपाणयः । अपाच्यरुचकादष्टौ, भृङ्गारैरुपशोभिताः ॥ १२६ ॥ प्रतीच्यरुचकादष्टौ, तालवृन्तस्फुर-
त्कराः । उदीच्यरुचकादष्ट, प्रोल्लसच्चामरैः करैः ॥ १२७ ॥ विदिग्भ्यो दीपिकाहस्ताश्चतस्रो दिक्कुमारिकाः । रुचकद्वीपतश्चेयु-
श्चतस्रः शस्त्रपाणयः ॥ १२८ ॥ एताश्च मिलिताः सर्वाः, सूतिकासदनान्तरे । याम्यपूर्वोत्तरस्थेषु, रम्भागेहेषु कुर्वते ॥ १२९ ॥
अभ्यङ्गं स्नपनं रक्षां, जिनस्य जननीयुजः । पश्चात्तिष्ठन्ति गायन्त्यस्तद्गुणान् गणनातिगान् ॥ १३० ॥ युग्मम् ॥ अथासनप्र-
कम्पात्तु, घण्टानादादनाहतात् । शक्रादयो जिनोत्पत्तिमवधेश्च विजानते ॥१३१॥ अथ प्रथमकल्पेन्द्रशक्रासिंहासनासनः । विमुच्य
पादुके दत्त्वा, सप्ताष्टानि पदानि च ॥ १३२ ॥ सन्मुखान्यर्हतो भक्त्या, पञ्चांगस्पृष्टभूतलः । योजयित्वा करौ शीर्षे, स्तुत्वा शक्र-
स्तवेन च ॥ १३३ ॥ लक्षयोजनमानेऽथ, विमाने पालकाभिधे । आरुह्य सपरीवारो, गत्वा नन्दीश्वरेऽत्र च ॥ १३४ ॥ संक्षिप्य
तद्विमानं द्राग्, जिनजन्मगृहादथ । ईशानकोणे संस्थाप्योत्तीर्य चानमति प्रभुम् ॥ १३५ ॥ कलापकं ॥ ततः प्रदक्षिणीकृत्य,

भगवंतं समातरम् । मूर्ध्नि बद्धाञ्जलि स्तौति, जिनस्य जननीमिति ॥ १३६ ॥ अज्ञानध्वान्तविध्वंसध्वान्ताराातिसमाकृतिम् । जिनं जनयितुं देवि !, पूर्वाशासन्निभे जय ॥ १३७ ॥ इति स्तुत्वा प्रतिच्छन्दं, देवीपार्श्वे विमुच्य च । अवस्वापनिकां दत्त्वा, पंचरूपधरोऽभवत् ॥ १३८ ॥ जिनमेकेन रूपेण, बिभ्रत् छत्रं परेण च । द्वाभ्यां च चामरे गृह्णन्, पञ्चमेन पविं धरन् ॥ १३९ ॥ गत्वा मेरुं ततः स्नात्रशिलायां पाण्डुके वने । सिंहासनमलंचक्रे, शक्रोऽङ्कस्थापितप्रभुः ॥१४०॥ युग्मम् ॥ अन्येऽपि नव सूर्येन्दू, विंशतिर्भुवनाधिपाः । द्वात्रिंशद् व्यन्तरेन्द्राश्च, चतुःषष्टिः पुरन्दराः ॥ १४१ ॥ सौवर्णै राजतै रत्नैः, स्वर्णरूप्यमयैरपि । स्वर्णरत्नरूप्यमयै, रूप्यरत्नमयैरपि ॥ १४२ ॥ स्वर्णरत्नमयैरित्थं, कलशैर्मृन्मयैरपि । तेऽष्टोत्तरसहस्रेण, प्रत्येकं स्नपयन्ति च ॥१४३॥ विशेषकम् ॥ आरणाच्युतकल्पेन्द्रः, पूर्वं स्नात्रं विलेपनम् । आरात्रिकं च कुरुते, द्वाषष्टिर्वामवास्ततः ॥ १४४ ॥ सौधर्मेन्द्रस्ततश्चेशानेन्द्रोत्संगस्थितं प्रभुम् । चतुर्वृषभशृंगैस्तत्क्षरत्पयोभिरष्टाभिः ॥ १४५ ॥ कृत्वा स्नात्रं चिरं गात्रं, प्रमार्ज्य च विलिप्य च । वस्त्राद्यैः पूजयित्वाऽऽरात्रिकं कृत्वा च तुष्टुवे ॥ १४६ ॥ युग्मम् ॥ परमात्मन्! नमस्तुभ्यं, परमज्योतिषे नमः । नमोऽस्तु ब्रह्मरूपाय, नमोऽस्तु परमेष्ठिने ॥ १४७ ॥ सर्वार्थसिद्धं पृथ्वीं च, तुलायां विधृते हृदा । आया लघूभूचरन्याधो, गुरुस्त्वदवतारतः ॥ १४८ ॥ दोषत्रयमुषे तुभ्यं, ज्ञानत्रयजुषे नमः । विश्वैकविदुषे नित्यं, रत्नत्रयपुषे नमः ॥ १४९ ॥ चिन्तामणिरनश्माऽसि, कल्पशाखीव जंगमः । अपशुः कामधेनुस्त्वं, कामकुम्भः सचेतनः ॥ १५० ॥ द्युम्नसंचयसंकाशं, गतप्रद्युम्नमर्थये । सदैव देव ! मे भूयादतुष्टेयः ( नमः शुभ ) रति त्वयि ॥ १५१ ॥ स्तुत्वैवं पञ्चरूपः सन्, प्रभुमातुरुपानयत् । अवस्वापनिकां हृत्वा, प्रतिच्छन्दमपानयत् ॥ १५२ ॥ विमुच्योच्छीर्षके क्षौमयुगलं रत्नकुण्डले । प्रभोर्दृष्टिविनोदायोपर्यधाद्रत्नगेन्दुकम् ॥ १५३ ॥ स्वर्णरत्ना-

दिक्कं सारं, वस्तु श्रीदो न्यधाद् गृहे । सुधां सुधांधसां नाथोऽस्तन्यपस्यांगुले प्रभोः ॥ १५४ ॥ जिनस्य जिनमातुश्च, योऽवमं चिन्तयिष्यति । तस्यार्यमञ्जरीवाशु, सप्तधा भेत्स्यते शिरः ॥ १५५ ॥ इत्युक्त्वाऽप्सरसः पञ्च, धात्रीत्वे न्यस्य सोऽगमत् । सर्वे नन्दीश्वरे यात्रां, कृत्वा जग्मुर्यथाऽऽगतम् ॥ १५६ ॥ तमिन्द्राद्यागमं नाभेर्मरुदेवा न्यवेदयत् । प्रातश्च मुदितो नाभिर्नृपो जन्मोत्सवं व्यधात् ॥ १५७ ॥ पूर्वं दृष्टो वृषः स्वप्ने, प्रभूर्वोर्लाञ्छने च सः । ध्यात्वेति वृषभो नाम, पितृभ्यां विदधे प्रभोः ॥ १५८ ॥ सुमंगलेति कन्याया, युग्मजायास्तु निर्म्मितम् । न्यूनवर्षे विभाविक्षुपाणिः शक्रोऽन्यदाऽऽगमत् ॥ १५९ ॥ शैत्यमेतद्रसः कर्त्ता, तपस्तप्तस्य मे तदा । ध्यात्वाऽर्थं च त्रिकालज्ञः, स्वामीक्षुं स्वकरेऽकरोत् ॥ १६० ॥ वंशेऽस्येक्ष्वाकुरित्याख्यां, कृत्वा शक्रो दिवं ययौ । पीडिता अपि यद्वंश्या, मधुरत्वेऽधिकाधिकाः ॥ १६१ ॥ उत्तरेभ्यः कुरुभ्यश्च, प्रत्यहं स्वामिनः कृते । फलानि क्षीरवार्द्धेश्च, जलान्यानिन्यिरे सुराः ॥ १६२ ॥ रूपेणाप्रतिरूपस्य, प्रतिरूपं प्रभोरभूत् । दर्प्पणस्य जगन्नय्या, दर्प्पणेनापरत्र तु ॥१६३॥ अकाले चान्यदा तालफलपातहते नरे । अन्ययुग्मैः सुनन्दाख्या, तन्नारी नाभयेऽर्प्पिता ॥ १६४ ॥ ज्ञात्वा भोगफलं स्वस्य, कर्म्म शक्रकृतोत्सवः । सुमंगलासुनंदे ते, पर्यणैषीज्जिनस्ततः ॥ १६५ ॥ न्यूनषट्पूर्वलक्षाऽधात्, गर्भे देवी सुमंगला । सर्वार्थसिद्धितः प्राप्तौ, जीवौ तौ बाहुपीठयोः ॥१६६॥ सुनन्दाऽपि च सानन्दा, तत एवागतौ दधौ। तौ सुबाहुमहापीठजीवावुदरकन्दरे ॥१६७॥ आद्या चतुर्दश स्वप्नान्, प्रेक्ष्य स्वाम्युक्तचक्रितम् । भरताख्यं सुतं ब्राह्मीं, पुत्रीं युग्ममसूयत ॥ १६८ ॥ सुनन्दा बाहुबलिनं, सुन्दरीं च सुमंगला । पुनरेकोनपञ्चाशत्सुतयुग्मान्यसूयत ॥ १६९ ॥ अथ कल्पद्रुमाभावात्, युग्मैः कलहनैर्मिथः । स्वामी व्यज्ञपि स प्राह, राजा शास्ति प्रजां ननु ॥ १७० ॥ स याचतां च श्रीनाभेस्तानि गत्वैत्य तं जगुः । दत्तो देव ! नृदेवस्त्वमेव

सेवकवत्सलः ॥ १७१ ॥ तदाज्ञयाऽभिषेकार्थं, युग्मानि पयसे ययुः । शक्रोऽप्यासनकम्पेन, तज्ज्ञात्वा प्रभुमभ्यगात् ॥ १७२ ॥ तस्य सिंहासने कृत्वाऽभिषेकं तीर्थवारिभिः । विभुं व्यभूषयद्वस्त्रैर्भूषणैश्च ऋभुप्रभुः ॥ १७३ ॥ युग्मान्यपि विचार्याम्बु, स्वामिनः पदयोर्न्यधुः । शक्रेण तद्विनीतत्वात्, पूर्विनीतेति कारिता ॥ १७४ ॥ नवयोजनविस्तारा, दैर्घ्ये द्वादशयोजना । धनदेन विधायैषा, धनैर्धान्यैश्च पूरिता ॥ १७५ ॥ विंशतौ पूर्वलक्षाणां, जातायां जन्मतः प्रभुः । अयोध्येत्यपराख्यायां, तस्यां पुर्यभवन्नृपः ॥१७६॥ कालस्य स्निग्धरूक्षत्वाद्, द्रुमेष्वग्नौ समुत्थिते । कारवः कुम्भकाराद्याः, स्वामिना चक्रिरे ततः ॥ १७७ ॥ भरतस्य कला बाहुबलेरश्वादिलक्षणम् । लिपीर्ब्राह्म्याश्च सुन्दर्या, गणितं चादिशद्विभुः ॥ १७८ ॥ तथा चारक्षकानुग्रान्, भोगान्मन्त्रिनियोगिनः । राजन्यान् स्वामि ( देश ) खण्डेशान्, क्षत्रियान् पत्तिमात्रकान् ॥ १७९ ॥ चतुर्धेवं विधायैतान्, कृत्वाऽश्वेभादिसंग्रहम् । त्रिपष्टिं पूर्वलक्षाणि, राज्यं प्रभुरपालयत् ॥ १८० ॥ एकदा च वसन्तर्तावुद्यानं गतवान् विभुः । जनं प्रमादिनं वीक्ष्य निजचेतस्यचिन्तयत् ॥१८१॥ विषयेषु कषायेषु, निद्रासु विकथास्वपि । मद्ये च निरतो लोको, माद्यत्युच्चैः प्रमाद्यति ॥१८२॥ अर्थेष्टसंगतारुण्यजीवितादि चलाचलम् । जानन्नपि न जानाति, जनो मोहविमोहितः ॥ १८३ ॥ व्यवहारः स्फुटीचक्रे, यथा मोहमयो मया । मोहद्रोहकरं तद्वत्, परमार्थं प्रकाशये ॥ १८४ ॥ ध्यायन्नेवं च विज्ञप्तो, विभुर्लोकान्तिकामरैः । अयोध्यानायकं चक्रेऽनिच्छंतं भरतं बलात् ॥ १८५ ॥ देहलीदिशमातक्षशिलं बाहुबलेरदात् । शेषाणामप्यशेषाणां, सुतानां नीवृतः प्रभुः ॥ १८६ ॥ आवर्षं प्रातरारभ्य, प्रातराशादद्दौ विभुः । कोटीमेकां सुवर्णानां, लक्षाण्यष्टौ च नित्यशः ॥१८७॥ जन्मर्क्षदिनयोः स्वामी, वनंगामी व्रताय सः । याप्ययानाधिरूढः सन्, स्तुतः सुरनरेश्वरैः ॥१८८॥ दिव्यातोद्यरवैः सिंहनादि-

र्जयजयस्वनैः । शब्दाद्वैतेऽप्सरःशक्रनृदत्तेनक्षणः क्षणम् ॥ १८९ ॥ भरतादिगुरू सिद्धार्थवनेऽशोकतरोरधः । विमुच्य शिबिकां वस्त्रभूषणाद्यमुचद्विभुः ॥ १९० ॥ विशेषकम् ॥ शक्रो दूष्यं निधायांशे, लूने मुष्टिचतुष्टये । केशानां पंचमीं मुष्टिं, प्रभुपार्श्वे व्यमोचयत् ॥ १९१ ॥ प्रतीक्ष्य देवदूष्येण, तच्च मुष्टिचतुष्टयम् । क्षिप्त्वा क्षीरार्णवेऽभ्येत्य, तुमुलं च न्यवारयत् ॥ १९२ ॥ कृतसिद्धनमस्कारः, कृतषष्ठतपाः प्रभुः । सावद्यं व्युत्सृजन् सर्वं, चारित्रं प्रतिपन्नवान् ॥ १९३ ॥ नारकाणामपि मनः, प्रीतिरंगतरंगितम् । कुर्वन्नादिजिनो ज्ञानं, मनःपर्ययमासदत् ॥ १९४ ॥ तदा कच्छमहाकच्छमुख्यया स्वामिना सह । चतुःसहस्त्र्या भूपानां, व्रतमग्राहि साग्रहम् ॥ १९५ ॥ नत्वा गते सुतस्वर्गिव्राते विहरता वने । पारणे प्रापि नो लोकाद्, भिक्षा भिक्षानभिज्ञतः ॥ १९६ ॥ श्रमे तथाप्यनार्त्तेन, प्रभुणा क्षुत्तृपातुराः । प्रभोरनुचरास्ते तु, गंगान्तेऽस्थुः फलाशनाः ॥ १९७ ॥ अथ कच्छमहाकच्छात्मजौ प्राग वि( क क्वापि )निर्गतौ । तदा नमिविनम्याख्यौ, पित्रोरन्तिकमागतौ ॥ १९८ ॥ कथयित्वाऽखिलं ताभ्यां, प्रहितौ भरतं प्रति · तावूचतुर्न नाभेयादपरं कुर्वहे प्रभुम् ॥ १९९ ॥ इत्युदित्वा च गत्वा च, नत्वा स्वामिनमूचतुः । धरित्री क्षेत्रमात्राऽपि, नाथ! दत्ता कथं न नौ? ॥ २०० ॥ विज्ञप्येति भुवं नीरैः, सिक्त्वा पुष्पैः प्रपूज्य च । कृष्टासियष्टी तौ देवदेवसेवां वितेनतुः ॥२०१॥ कलापकम् ॥ स केवलिसमुद्घातद्विःसप्तसमयक्रियाम् । संशयेवादिशन् रेजे, मध्यस्थस्ततकृपाणयोः ॥२०२॥ धरणोऽथान्यदाऽऽयातो, विभुं नत्वा जगाद तौ । कौ युवां ? हेतुना केन जिनं निष्किंचनं श्रितौ ? ॥ २०३ ॥ तावूचतुरये! स्वामिभृत्यावावां ससंगरम् । सेव्योऽयमेव नान्योऽत्र, जन्मन्यस्यांगभूरपि ॥ २०४ ॥ हृक्कर्णेशस्तदाकर्ण्य, तत्प्रतिज्ञां प्रशस्य च । स्वामिसेवाफलं विद्याधरेन्द्रत्वं तयोरदात् ॥ २०५ ॥ रोहिण्याद्यष्टचत्वारिंशत्सहस्रमवाप्य तौ । विद्यानां पाठसिद्धानां, वैताढ्ये

धरणेन्द्रतः ॥ २०६ ॥ कृत्वाऽथ दक्षिणश्रेण्यां, पुरीः पंचाशतं नमिः । विनमिश्चोत्तरश्रेण्यां, षष्टिं राज्यं प्रचक्रतुः ॥ २०७ ॥ युग्मम् ॥ पारणार्थी प्रभुर्भ्राम्यन्नयाद्गजपुरेऽन्यदा । यत्र बाहुबलेः पुत्रो, राजा सोमप्रभाभिधः ॥२०८॥ श्रेयांसेनास्य पुत्रेण, प्रातः स्वप्ने विलोकितः । मेरुः श्यामः सुधाकुंभैः, प्रक्षाल्य प्रोज्ज्वलीकृतः ॥ २०९ ॥ प्रातः स्वप्ने सहस्रांशोर्गोसहस्रं परिच्युतम् । सुबुद्धिश्रेष्ठिनाऽद्रैक्षि, श्रेयांसेनात्र योजितम् ॥ २१० ॥ दृष्टः सोमप्रभेणापि, स्वप्ने रुद्धो महाभटः । शत्रुभिस्तान् विजिग्येऽसौ, साहाय्यान् मत्तनूभुवः ॥ २११ ॥ श्रीसोमप्रभुराजस्य, सौधे ते मिलितास्त्रयः । व्यचारयंश्चिरं चारु, श्रेयांसस्यास्ति किञ्चन ॥ २१२ ॥ अथ स्वस्वाश्रयस्थेषु, तेषु श्रेयांसवेश्मनि । आयन्नुपायनस्येक्षुरसकुम्भाः सहस्रशः ॥ २१३ ॥ तानालोकयता तेन, दूरात् स्वामी पुरो भ्रमन् । अगृह्णन् स्वर्णरत्नादिदानादिज्ञैर्जनैर्वृतः ॥ २१४ ॥ श्रेयांसेन गवाक्षस्थेनेक्षितो निष्परिग्रहः । तन्मुद्रां ध्यायतश्चास्य, जातिस्मृतिरजायत ॥ २१५ ॥ युग्मम् ॥ तदुत्थावधिना सोऽथ, पश्यन् पूर्वभवान्निजान् । वज्रसेनजिनेशाभमेनं निरचिनोज्जिनम् ॥ २१६ ॥ ततः परिहृतच्छत्रोपानहः स पितामहम् । अभ्येत्याभ्यासमानम्यान यद्वित्तवदोकसि ॥२१७॥ ततः पूर्वभवज्ञातकल्पाकल्पविचारवित् । प्रमोदरसपूर्णात्मा, रसकुम्भं करेऽभृत ॥ २१८ ॥ पाणिपात्रे सुपात्रेणामुना च निभृते सुधीः । उपर्युपर्ययं तत्र, कुम्भं कुम्भानलोठयत् ॥ २१९ ॥ प्रभोः स्नात्र इवामुत्र, पारणे पुण्यकारणे । देवाश्च मानवाश्चेयुः, कुम्भस्त्वन्यस्य नो करे ॥२२०॥ रसस्य बिन्दुरेकोऽपि, नापतत् प्रभुपाणितः । श्रेयांसस्यापतन् श्रेण्या, दृग्भ्यां त्वानन्दबिन्दवः ॥२२१॥ श्रेयांसमेव श्रेयांसं, मन्महेऽस्मिन्ननेहासि । यदुपज्ञमभूद्दानधर्म्मो धर्म्मोत्तरः स्फुरन् ॥२२२॥ श्रेयांसं किं ममस्तं यः, पुरो विश्वगुरोरपि । दानधर्म्मोपदेशेन, गुरुः श्रद्धावतामभूत् ॥ २२३ ॥ आद्यार्हतः प्रपौत्रोऽयं, पौत्रश्चास्य मानिनः । पुत्रिण्वाग्र्यं व्यधात् सोमं, स्वं

चार्धं पात्रदानेषु ॥ २२४ ॥ पितृतत्पर्णकृत् सत्यमपत्यमयमेव हि । पूर्वजोऽतर्पि येनाद्यभिक्षुरिक्षुरसैरसौ ॥ २२५ ॥ गृहि-
ण्येव भवेद्भर्तुर्भाविनी भोजनक्षणे । तत् प्राग्भवप्रिया मन्ये, श्रेयांसस्तमभोजयत् ॥ २२६ ॥ तदा पुष्पोत्करश्चेलोत्क्षेपो दुन्दुभिनिः
स्वनः । गन्धाम्बु च वसुवृष्टिः, पञ्च दिव्यानि जज्ञिरे ॥ २२७ ॥ वर्षान्ते पारणं यस्यां, तिथौ वैशाखमास्यभूत् । पर्वाक्षयतृती-
येति, साऽद्यापि प्रथिता भुवि ॥२२८॥ कथं ज्ञातं जनैः पृष्टः, श्रेयांसः प्राग्भवान्नव । स्वस्याख्यत् स्वामिना सार्द्धं, तेभ्यो दान-
विधिं च सः ॥ २२९ ॥ मेरुः श्यामः कुशःस्वामी, क्षालनं चास्य पारणम् । प्रभुः शिष्यैर्युतो भावी, सहस्रांशुरिवांशुभिः ॥२३०॥
स्वामी पारणकाद्वीरोऽरीन् जेता च परीषहान् । स्वप्नार्थमित्थं श्रेयांसः, सर्वेषामग्रतोऽगृणात् ॥ २३१ ॥ युग्मम् ॥ विधाय पारणं
याते, विभौ तत्र व्यधादयम् । आदिक्रन्मण्डलाभिख्यं, स्तूपं भूपतिनन्दनः ॥२३२॥ विभुस्तु विहरन् देशे, बहलीनामकेऽव्रजत् ।
तत्र तक्षशिलापुर्यां, बहिः प्रतिमया स्थितः ॥ २३३ ॥ निशि ज्ञातागमस्तक्षशिलां तक्षशिलापतिः । तेने बाहुबलिर्मञ्चातिमञ्च-
चयरोचिताम् ॥२३४॥ प्रभुः प्रातः पुरीमेत्यातक्षच्छीलां विधास्यति । इति बुद्ध्या मनःशुद्ध्या, तस्थौ बाहुबलिर्निशि ॥२३५॥
निःससार च सर्वर्द्ध्या, प्रभातेऽभिमुखः प्रभोः । प्रभुस्तु विहृतोऽन्यत्र, न लिप्यन्ते हि तादृशः ॥ २३६ ॥ अथ बाहुबलिः खेद-
मेदस्विहृदयोऽधिकम् । अश्रुपूर्णेक्षणो वाचमित्युवाच सगद्गदम् ॥ २३७ ॥ हा हा मे मन्दभाग्यस्य, पादशुद्धिं प्रकुर्वतः । विमूढ-
मनसो बाढमगच्छद् ग्रहणक्षणः ॥ २३८ ॥ हा हा वैवाहिकातिथ्यव्याकुलस्य ममाधिका । न पाणिपीडनकृतिः, स्मृतिगोचरता-
मगात् ॥ २३९ ॥ यदहं पितरं तीर्थकरं स्वपुरमागतम् । हट्टशोभादिषु व्यग्रो, नानमं ध्यानमन्दिरम् ॥ २४० ॥ बहली बहुली-
भूतं, खेदं वितनुतेऽधुना । अदादक्षस्य मे तक्षशिला मनसि लाघवम् ॥ २४१ ॥ स शोचन्नित्यमात्येन, प्रत्यबोधित सादरम् ।

यद्देव ! देवदेवः स, नैकत्र क्वापि तिष्ठति ॥ २४२ ॥ घातिनां कर्म्मणामेष, घातकानामविश्वसन् । यतते तद्विघाताय, स्वसंघाताय न त्वयम् ॥ २४३ ॥ तदमुद्रां प्रभोः पादमुद्रां प्रभुमिव प्रभो! । अभिवन्दस्व नन्दस्व, समृद्ध्योज्झितखेदितः ॥२४४॥ तेनेत्युक्तः स्वयं चैष, विचारचतुरो नृपः । ननाम क्रममुद्रां तामभुद्रां भक्तिमादधत् ॥२४५॥ प्रभुक्रमप्रतिच्छन्दाक्रमं त्रातुं मणीमयम् । चक्रे चक्रं सहस्रारं, सहस्रांशुमिवापरम् ॥ २४६ ॥ विहृत्य नानादेशेषु, मौनवान् भगवानपि । मोहादिभिरयोध्योऽयमयोध्यायां समागमत् ॥ २४७ ॥ तत्र च पुरिमतालोद्यानेऽशोकतरोरधः । कृताष्टमतपाः स्वामी, प्रतिमायामत्रास्थितः ॥ २४८ ॥ तत्रास्य फाल्गुनश्यामैकादश्यामुत्तरर्क्षगे । विधौ केवलमुत्पेदे, घातिकर्म्मक्षये विभोः ॥ २४९ ॥ तत्र पर्वाणि सर्वेऽपि, सुपर्वेशाः समाययुः । जज्ञे समवसरणं च, वप्रत्रितयबन्धुरम् ॥ २५० ॥ एकयोजनमाना भूर्मृष्टा वायुकुमारकैः । सिक्ता मेघकुमारैः सा, सलिलैश्च सुगन्धिभिः ॥ २५१ ॥ व्यन्तरैः कुट्टिमं चक्रे, स्वर्णरत्नमणीमयम् । तैः पुष्पप्रकरैः सोऽधोमुखवृन्तो विनिर्ममे ॥ २५२॥ कल्पज्योतिर्भवनत्रिदशा मणिरत्नकनककपिशीर्षैः । रत्नस्वर्णश्वेतैः ससृजुर्वप्रत्रयीं मध्यात् ॥ २५३ ॥ अन्तस्त्रिकोशचैत्यद्रोरधः सिंहासनानि च । देवच्छन्दो द्वितीयस्य, वप्रस्याभ्यन्तरे तथा ॥ २५४ ॥ बहिश्चक्रं च पत्रस्थं. विचक्रुर्व्यन्तरामराः । द्वाःस्थाः स्वर्गिवनज्योतिर्भवनाः प्राक्क्रमात् स्थिताः ॥ २५५ ॥ यतिस्वःस्त्रीयतिन्योऽग्नौ, त्रिधा देवास्त्वरक्षसः । तन्नार्यो मरुतोऽस्रेऽस्थुरीशाने स्वर्गिणः स्त्रियः ॥ २५६ ॥ वसुपत्रेषु नवसु, न्यसन्नंघ्री ततः प्रभुः । चतुर्देवनिकायानां, कोटीभिः परितो वृतः ॥ २५७ ॥ प्रविश्य पूर्वद्वारेण, चैत्यवृक्षप्रदक्षिणाम् । कृत्वा च प्राङ्मुखः सिंहासने स समुपाविशत् ॥ २५८ ॥ व्यन्तराः प्रतिरूपाणि, दिक्त्रये त्रीणि च व्यधुः । प्रातिहार्याणि सर्वाणि, प्रकाशानि च जज्ञिरे ॥ २५९ ॥ सौधर्म्मेन्द्रः समेत्याथ, स्तुत्वा शक्रस्तवेन च ।

प्रणम्य च नृदेवानां, पुरतः समुपाविशत् ॥ २६० ॥ इतोऽपि च विनीतायां, विनीतो भरतो नृपः । प्रातरेव समायातः, प्रणन्तुं स्वां पितामहीम् ॥२६१॥ तां पुत्रविरहात् श्रान्तां, प्रोद्भूतेक्षणनीलिकाम् । ज्येष्ठः पौत्रः प्रणमतीत्युक्त्वाऽग्रे समुपाविशत् ॥२६२॥ मरुदेवी प्रयुज्याथ, श्वासमाशिषमूचुषी । तरङ्गितोऽतिनिर्वेदैर्दुःखैः क्वचितस्तथा ॥ २६३ ॥ अतुच्छाभिश्च मूर्च्छाभिर्युतोऽरतिविपश्चितः । अन्तर्दाहशतैर्मिश्रश्रान्तकैः कलुषीकृतः ॥२६४॥ प्रव्रज्य व्रजिते पुत्रे, ममान्धतमसाश्रयः । एकोऽपि वासरोऽतुच्छवत्स ! मे वत्सरोपमः ॥ २६५ ॥ एवं वदन्त्यां स्वामिन्यां, यमकः शमकः समम् । समेतौ पुरुषौ दण्डप्रणामेन नतौ नृपम् ॥ २६६ ॥ कलापकम् ॥ आद्येन केवलोत्पत्तिर्जिनेन्द्रस्य निवेदिता । द्वितीयेनात्र शालायां, चक्रोत्पत्तिः प्रमोदतः ॥ २६७ ॥ तौ पारितोषिकं दत्त्वा, प्रेष्याथ स्वामिनीं जगौ । दिष्ट्या संवर्ध्यसे देवि !, सूनोः केवलवैभवात् ॥ २६८ ॥ हृद्याऽपि चिन्तनीया या, वचनानामगोचरा । कापालिकोत्तरा सिद्धिरभूत्त्वत्तनुजन्मनः ॥ २६९ ॥ उक्त्वेति तां गजं राजवाह्यमारोह्य चोत्सुकः । सर्वद्धर्या चलितो नन्तुं, जिनेशं भरताधिपः ॥२७०॥ वीक्ष्य रत्नध्वजं दूरादेष प्राह पितामहीम् । श्रूयते त्वत्सुतस्याग्रे, देवदेवीजयध्वनिः ॥२७१॥ देवदुन्दुभिनादश्च, गीतगन्धर्वनिर्म्मितः । स एष च विमानानां, किंकिणीगणनिक्कणः ॥ २७२ ॥ तत्तदित्यादि शृण्वत्या, दिव्यहर्षाश्रुसम्प्लवैः । विलीना नीलिका शोकाश्रुजा किल निरोधतः॥२७३॥विशेषकम् ॥ यथा क्षाराम्बुजो जीवः, स्वादुनीरे न जीवति । तथा शोकाश्रुजा नीली, नानन्दहर्षबाष्पतः ॥ २७४ ॥ अर्हल्लक्ष्मीं ततः स्पष्टं, दृष्ट्वा स्वतनुजन्मनः । अत्यन्तत्यक्तमोहाग्रे, सुते मोहं मुमोच च ॥ २७५ ॥ पश्यंती चार्हतीं लक्ष्मीं, तन्मयत्वमवाप सा । आरूढा क्षपकश्रेणिं, गजारूढाऽपि भावतः ॥ २७६ ॥ क्रुद्धाऽम्बा त्रिजगद्भर्तुर्दर्शनावृतिमंतुना । दुष्टान्यष्टापि कर्म्माणि, मन्ये युगपदच्छिनत् ॥ २७७ ॥ अन्तकृत्केवलीभूय, भूयःसुख-

मयं पदम् । जगाम प्रथमः सिद्धावसर्पिण्यामभूदयम् ॥२७८॥ भ्रान्त्वा वर्षसहस्रेणार्जितं क्लेशेन केवलम् । भक्त्यैव वृषभो मातुर्निर्भृतं प्राभृतं व्यधात् ॥२७९॥ कृतां केवलसूदेन, सिद्धिं रसवतीं पराम् । अम्बामभोजयद् वृद्धां, प्रथमं प्रथमो जिनः ॥२८०॥ सर्वसंगपरित्यागं, मत्पुत्रो यत्कृतेऽकरोत् । सा सिद्धिः कीदृगस्तीति, द्रष्टुं साऽग्रे गता किल ॥ २८१ ॥ सम्पूज्य च वपुस्तस्याः, क्षिप्तं क्षीरार्णवे सुरैः । पूजा ततःप्रभृत्येव, प्रवृत्ता मृतवर्ष्मणः ॥ २८२ ॥ तद्भक्तिलीनस्तत्सिद्धिगतेश्च भरतो नृपः । खेदेन प्रमोदेनापि, व्यानशे मानसे समम् ॥२८३॥ अथ सन्त्यज्य राज्यस्य. चिह्नान्यह्नाय भूपतिः । मध्येसमवसरणं, स द्वारोत्तरयाऽविशत् ॥२८४॥ प्रदाक्षिणात्रय दत्त्वा, स्तुत्वा नत्वाऽपि च प्रभुम् । निषसाद स शक्रस्य, पृष्ठे शक्र इवापरः ॥२८५॥ पंचत्रिंशदतिशयजुषा बोधपुषा व्यधात् । सर्वभाषानुगामिन्या, भारत्या देशनां प्रभुः ॥ २८६ ॥ पुरा न प्रापि न प्राप्यो. भवे भाविनि यो जनैः । स कर्म्मविवराद्धर्म्मः, प्राप्तः किं न विधीयते? ॥ २८७ ॥ स च धर्म्मो द्विधा सर्वसंयमो देशसंयमः । सम्यक्त्वमूल एवायं, द्वेधाऽपि सफलो भवेत् ॥ २८८ ॥ देवेऽर्हति गुरौ साधौ, धर्म्मे सर्वज्ञदेशिते । या बुद्धिर्निश्चिता तद्धि, सम्यक्त्वमभिधीयते ॥ २८९ ॥ द्रुमस्येव दृढं मूलं, धाम्नो द्वारमिवामलम् । पोतस्येव प्रतिष्ठानं, ज्ञेयं मोक्षस्य दर्शनम् ॥ २९० ॥ सम्यक्त्वस्यास्य कः स्तौतु. महिमानं महीतले । यद्विनाऽल्पफलं ज्ञानं, चारित्रं चातिदुष्करम्? ॥ २९१ ॥ सम्यक्त्वमूलं तत् सर्वसंयमं देशसंयमम् । भव्या! गृह्णीत नृत्वस्य, फलमेतन्मयोदितम् ॥२९२॥ युग्मम् ॥ साधवः पुण्डरीकाद्याः, साध्व्यो ब्राह्मीपुरस्सराः । श्रावका भरताद्याश्च, श्राविकाः सुन्दरीमुखाः ॥२९३॥ तदा (संघो) यः स्थापितः सोऽयं, तथैवाद्यापि विद्यते । पुण्डरीकादिसाधूनामादिदेश पदत्रयीम् ॥ २९४ ॥ त्रिपदीमपि गामेतां, द्वादशांगीं जिनेशितुः । नवामदंडा आरुह्य, सूत्रयामासुराशु ते ॥ २९५ ॥ तेषां च स्वामिनोत्थाय, वासस्था-

लकरे हरौ। अर्थसूत्रतदुभयैः, सद्रव्यगुणपर्ययैः ॥ २९६ ॥ दत्तानुयोगानुज्ञा च, गणानुज्ञा च सर्वथा। क्षिप्ताः शक्रादिभिर्वासा, दुन्दुभिध्वनिपूर्वकम् ॥ २९७ ॥ युग्मम् ॥ सम्पूर्णायां च पौरुष्यां, बलिक्षेपादनन्तरम्। देवच्छन्दं श्रिते नाथे, गणेशो देशनां व्यधात् ॥ २९८ ॥ अथ च गोमुखपुण्यजनेन चान्तिकजुषा च सदाऽप्रतिचक्रया। विहरति स्म विभुः सपरिच्छदो, भविकलोकविबोधनहेतवे ॥ २९९ ॥

प्रथमबोधिदश्रीयुगादिजिनचरितमभिधायाभव्यत्वात् सदाऽप्यप्राप्तबोधेरुदायिनृपमारकस्य दृष्टान्तः प्रोच्यते, तथाहि--पुरा राजगृहेशस्य, श्रेणिकस्यांगभूरभूत्। कोणिकः कोणितारातिजातिश्चम्पापुरीपतिः ॥१॥ उदायिनामार्हद्धर्म्माभ्रचण्डांशुरमण्डयत्। तत्पुत्रः प.टलीपुत्रपुरं चैत्यालिमालितम् ॥ २ ॥ जिगीषुः स च जागर्त्ति, राजद्वादशके यथा। व्रतद्वादशकेऽप्येवं, चतुर्दानाद्युपायवित् ॥ ३ ॥ गृह्णन् पर्वतिथिष्वेष, पौषधं दुरितौषधम्। शृणोति सूरीनाकार्य, स्वस्यावासे च देशनाम् ॥ ४ ॥ न स्फुरन्ति च तद्गुप्तसंवासत्रस्तमानसाः। पाप्मानः प्राज्यराज्यस्य, प्रबला भूमिपा इव ॥ ५ ॥ तेन चाच्छिन्नराज्यस्यान्यदा कस्यापि नन्दनः। अवन्तीशं श्रितोऽवोचत्तं सातंकमुदायिनः ॥ ६ ॥ यदि त्वं मम साहाय्यं, विधत्से तत्तव द्विषम्। हन्मि तस्यानुमत्याऽसौ, ययौ पाटलिपुत्रकम् ॥ ७ ॥ उपायान् सुबहूनेप, हननार्थमुदायिनः। पश्यन्नपश्यदायातोऽथातः सूरींस्तदौकसि ॥ ८ ॥ घातायोदायिनो मानी, तमुपायं विचिन्तयन्। सूरीन् साश्रद्दगभ्येत्य, वन्दित्वा याचितं व्रतम् ॥ ९ ॥ मायिको मायिकीं चेष्टां, वाचिकीं च विपंचयन्। सुन्दरां सूरिभिः सोऽथ, दीक्षितः शिक्षितः क्रियाम् ॥ १० ॥ छन्नमन्यपदे शृण्वन्, बाष्पाविलविलोचनः। सूरिव्याख्याक्षणे कस्य, चित्तमार्द्रं न स व्यधात् ? ॥ ११ ॥ इत्थ मायाविनस्तस्य, परिपालयतो व्रतम्। जज्ञिरे द्वादशाब्दानि, न तु

केनापि लक्षितः ॥ १२ ॥ सूरिभिः पर्वसु क्ष्मापगृहे कथयितुं कथाम् । यद्विनीतो विनीतोऽपि, न स द्वादशवत्सरीम् ॥ १३ ॥ अन्यदा चलिते सूरौ, नृपौकासि स दाम्भिकः । उत्थायोपधिमादायावदत् पादौ वधार्यताम् ॥ १४ ॥ प्रा क्रामन् स मायावी, समं राज्ञा च सूरिणा । तयोर्मनोनिवासान्तरात्मानं समवासरत् ॥ १५ ॥ स चोर्ध्वं यामिनीयामात्, सुप्तो दम्भेन दाम्भिकः । क्रमादवापतुर्निद्रां, नृपो नृपगुरुश्च तौ ॥ १६ ॥ अथोत्थाय स निःशंकः, कंकलोहस्य कर्त्तिनीम् । निधायोदायिनो राज्ञः, कण्ठे कुण्ठशठोऽचलत् ॥ १७ ॥ मुक्तो यतिरित्युदायिमारको यामिकैरयम् । रयादयादवन्तीशं, शशंस च यथातथम् ॥ १८ ॥ विश्वस्तं धार्मिकं सुप्तं, द्वादशाब्दव्रती भवान् । नृपं हत्वा समागच्छन्नद्रष्टव्यमुखः शठः ॥ १९ ॥ इत्यवन्त्यधिपेनोक्त, उदायिनृपमारकः । निर्वासितश्च संसारमनन्तं पर्यटिष्यति ॥ २० ॥ युग्मम् ॥ बुद्धा रुधिरसेकाच्च, सूरयोऽदृष्टशैक्षकाः । वीक्ष्य तद्युच्चेष्टितं दत्तालोचनाः सिद्धसाक्षिकीम् ॥ २१ ॥ नान्यः शासनमालिन्यक्षालनोपाय इत्यमी । स्मृतपञ्चनमस्कारास्तां गले कर्त्तिकां ददुः ॥२२॥ युग्मम् ॥ उपदेशसहस्राणि, शृण्वन्नपि स दुष्टधीः । यथा नाबुध्यतान्येऽपि, पापाः केऽपि स्युरीदृशाः ॥ २३ ॥ इति दुर्लभबोधित्वमभव्यस्य प्ररूपितम् । अर्हद्दत्तस्य भव्यस्याप्यथैतत् प्रणिगद्यते ॥ १ ॥ क्षेत्रेऽत्रैवाचलपुरे, जितशत्रुर्नरेश्वरः । पुत्रोऽपराजितस्तस्य, युवराजपदस्थितः ॥२॥ द्वितीयः समरकेतुः, कुमारोऽवन्तिनायकः । अत्यन्तनृप उद्वृत्तोऽन्यदा समरकेशरी ॥ ३ ॥ तं संसाध्य समागच्छन्, युवराजोऽपराजितः । धर्म्मारामनिवेशस्थमाचार्यं राहुमैक्षत ॥ ४ ॥ तं वीक्ष्य जातसंवेगः, साग्रहो व्रतमग्रहीत् । अन्यदा विहरन्नेष, नगरान्नगरीमगात् ॥ ५ ॥ तत्रावन्त्याः समायाताः, पृष्टाश्च मुनयोऽमुना । उपसर्गं विना साधुविहारस्तत्र वर्त्तते ? ॥६॥ प्रोचुस्ते भद्रकौ तत्र, पुत्रौ राजपुरोधसोः । उपसर्गयतः साधून्, श्रुत्वेत्याख्यद् गुरो-

२ बोधिदौर्लभ्ये उदायिमारकवृत्तम्

रयम् ॥ ७ ॥ गतो गुरुगिराऽवन्तीमार्यो राहुगणे स्थितः । भिक्षाकाले व्रजन्नेष, स्थापितस्तैरुवाच च ॥ ८ ॥ अहं स्वलब्धिक-
स्तन्मे, दर्श्यतां स्थापनाकुलम् । प्रेषितः क्षुल्ल एकस्तैः, कुलदर्शनहेतवे ॥ ९ ॥ प्रत्यनीकगृहं गच्छन्निषिद्धः क्षुल्लकेन सः । निवृत्ते
क्षुल्लकेऽविक्षत्, कुमारस्यैव मन्दिरे ॥ १० ॥ शब्देन महता धर्म्मलाभितेऽन्तःपुरीजनः । गच्छेति संज्ञया प्राह, तमवाजगणत्तु
सः ॥ ११ ॥ धर्म्मलाभवचः श्रुत्वा, कुमारौ तु तमागतौ । द्वारं पिधाय वन्दित्वा, प्रोचतुर्नृत्य भिक्षुक! ॥ १२ ॥ स प्राह गीत-
वादित्रे, विना नृत्यं कुतो भवेत् ? । तावूचतुर्गीतवाद्ये, करिष्यावः प्रनृत्यत ॥ १३ ॥ भवत्वेवं मुनिप्रोक्ते, गीतवाद्ये, वितेनतुः ।
ताविपे विपमे क्रुद्ध, इव साधुरभापत ॥ १४ ॥ विज्ञानेनामुना गोपपुत्रौ मां नर्त्तयिष्यतः? । श्रुत्वेति कुपितौ साधुवधायैतावधाव-
ताम् ॥ १५ ॥ नियुद्धकुशलः सोऽथ, साधुस्तौ सर्वसन्धिषु । वियोज्य प्रययौ द्वारमुद्घाट्य ध्यानमास्थितः ॥ १६ ॥ तौ निश्चेष्टौ
द्रवैः सिक्तौ, वह्न्यो वारा न तूचतुः । तत्पित्रोः साधुवृत्तान्ते, कथिते तावुपागतौ ॥ १७ ॥ वीक्ष्य राजा ययौ सूरिमार्यराहुं ननाम
च । ऊचे च भगवन् ! बालापराधः क्षम्यतामयम् ॥ १८ ॥ सूरिणोचे न जानामि, तदेवास्य च साधुभिः । मुनिनाऽऽगन्तुना
स्याच्चेत्, कृतमित्यथ ते जगुः ॥ १९ ॥ तं दर्शयत राज्ञोक्ते, दर्शितो ध्यानवानसौ । राज्ञाऽथ प्रत्यभिज्ञातः, सत्रपेण ततश्च
सः ॥ २० ॥ वितीर्य धर्म्मलाभं स, प्राह श्रावक ! युज्यते । त्वद्राज्ये चेदमक्षीणमुल्लण्ठत्वं कुमारयोः ? ॥२१॥ नृपः प्राह प्रभो !-
ऽनेन, प्रमादेनास्मि सत्रपः । विधायानुग्रहं तौ तु, संयोजयतु सन्धिषु ॥ २२ ॥ मुनिरूचे व्रतं चेत्तौ, गृह्णीतां योजयामि तत् ।
राज्ञोक्तं सम्मतं मेऽदः, प्रष्टव्यौ तु कुमारकौ ॥ २३ ॥ वक्तुं न शक्तौ तौ साधुरूचेऽहं जल्पयामि तौ । गत्वा गीर्मात्रतः सज्जीकृ-
त्योक्तौ मुनिना स्वयम् ॥ २४ ॥ साधुबाधालतापुष्पमेतद्वां दुर्गतिः फलम् । समस्ति पश्चात्तापश्चेत्, तद् गृह्णीतं व्रतं युवाम् ॥२५॥

तावूचतुश्च नौ पश्चात्तापश्चापत्रपाऽस्ति च । प्रतिपत्स्यावहेऽवश्यं, प्रव्रज्यां गुर्वनुज्ञया ॥ २६ ॥ गुरुभ्यस्तावनुज्ञातौ, योजितौ
साधुना ततः । अङ्गैरपि व्रतं दत्तं, चरतो विधिना व्रतम् ॥ २७ ॥ द्विजस्तु ज्ञाततत्त्वोऽपि, बलात् प्रव्राजितोऽस्म्यहम् । इति द्वेषं
गुरौ बिभ्रदनालोच्य दिवं ययौ ॥ २८ ॥ ईशाने भुंजतस्तस्य, भोगांश्चिह्नानि जज्ञिरे । च्यवनस्य विषण्णोऽसौ, देवीपरिव्रजान्वितः
॥ २९ ॥ त्यक्तमोहोऽथ गत्वा द्राक्, स विदेहे जिनेश्वरम् । नत्वाऽपृच्छत् पद्मनाभं, क्वोत्पत्स्येऽहं दिवश्च्युतः? ॥ ३० ॥ सुप्रापबो-
धिर्वा नो वा ?, तर्थिनाथस्ततोऽवदत् । जम्बूभरतकौशाम्ब्यामुत्पत्तिस्ते भविष्यति ॥ ३१ ॥ भावी दुर्लभबोधिश्च, गुरुप्रद्वेषतो
भवान् । तस्य प्राग्भववृत्तान्तं, कथयामास तीर्थकृत् ॥ ३२ ॥ स दध्यावल्पके द्वेषे, विपाको दारुणः पुनः । स्वाम्याह बहुमान्यः
स्यादिहलोकोपकार्यपि ॥ ३३ ॥ गुरुस्तु मिथ्याज्ञानानि, निघ्नन् शुद्धक्रियां दिशन् । भवान् कृन्तन् शिवं यच्छन्, परलोकोपका-
रकः ॥३४॥ तद्द्विषा जनितं कर्म्मानल्पमल्पमपीरितम् । स दध्यौ कर्म्मणः प्रान्तः, कदा मेऽस्य भविष्यति? ॥३५॥ भगवानाह ते
भाविभवे मूकाऽपराभिधात् । बन्धोरशोकदत्ताख्याद्, बोधिलाभो भविष्यति ॥३६॥ सुरः प्राह कुतो हेतोरस्य नामद्वयं ? प्रभो ! ।
भगवानाह कौशाम्ब्यां, श्रेष्ठ्यासीत्तापसाभिधः ॥ ३७ ॥ स सवित्तोऽपि सारम्भः, सदारोऽपि प्रमादवान् । नागदत्तः सुतस्तस्य,
स्नुषा वसुमतीति च ॥ ३८ ॥ स चार्त्तध्यानदोषेण, मृत्वा शूकरतां गतः । पूर्वभुक्तप्रदेशावलोकनाज्जातिमस्मरत् ॥३९॥ अन्यदा
नागदत्तेन, प्रारब्धे दिवसे पितुः । परिवेषणवेलायामोतुनाऽपहृते पले ॥ ४० ॥ सूपकार्या गृहपतेर्वेलातिक्रमभीतया । छन्नं विश-
सितो मृत्वा, क्रुद्धोऽजनि भुजङ्गमः ॥ ४१ ॥ तत्रापि हि भवे तस्य, जातिस्मृतिरजायत । अकपाय्यनुकम्पावान्, कर्म्मवैचित्र्य-
तस्तु सः ॥४२॥ तं निरीक्ष्यान्यदा स्नुषा, सर्पः सर्प इतीरिते । एत्य कर्म्मकरैरात्तमुद्गरैर्विनिपातितः ॥४३॥ अकामनिर्जरायोगात्,

स्नुषा गर्भे सुतोऽभवत् । जातस्य तस्य चाशोकदत्त इत्याह्वयाऽजनि ॥४४॥ तस्य चैकाब्ददेश्यस्य, पश्यतो जनकादिकम् । अचिन्त्यकर्म्मसामर्थ्याज्जाता जातिस्मृतिः पुनः ॥ ४५ ॥ दध्यौ च तनयं तातं, स्नुषामपि च मातरम् । कथं वक्ष्यामि ? मूकत्वमेव श्रेयस्ततो मम ॥ ४६ ॥ ततः स लोकवाक्येन, मूकनाम्नैव पप्रथे । द्वादशाब्देऽथ तत्राऽऽगाच्चतुर्ज्ञानी महामुनिः ॥४७॥ मेघनादाभिधः सैष, नागदत्तगृहे मुनिम् । प्रावाचं प्रेषयांचक्रे, शिक्षा दत्ता गतश्च सः ॥ ४८ ॥ तमूचे कुहनामूकं, कुमारक ! गुरुर्मम । प्रैषीत्तव समीपे मां, मन्मुखेनेति वक्ति च ॥ ४९ ॥ अलं तापस ! मौनेन, ज्ञात्वा धर्म्मं समाचर । मृत्वा कोलश्च सर्प्पश्च, जातः पुत्रस्य पुत्रकः ॥ ५० ॥ नत्वा हित्वा च मूकत्वं, स प्राह क्व नु ते गुरुः ? । शक्रावतारचैत्येऽस्ति, ऋषिणोक्ते सहैदसौ ॥ ५१ ॥ गुरुं नत्वाऽवदद्वार्त्तां, वेत्सि मे भगवन् ! कथम् ? । ज्ञानेनेति गुरुप्रोक्तेऽशोकदत्तो विसिष्मये ॥ ५२ ॥ धर्म्मेऽथ कथिते बुद्धः, पूर्ववासनया तु सः । मूक इत्युच्यते लोकैर्द्वितीयं नामतस्ततः ॥ ५३ ॥ देवो व्यज्ञपयन्नाथमहं भोत्स्ये कथं? प्रभो ! । भगवानाह वैताढ्ये, स्वकुण्डलयुगेक्षणात् ॥ ५४ ॥ देवोऽथ गत्वा कौशाम्बीं, स्वबोधे मूकमार्थयत् । यतिष्येऽहं यथाशक्ति, तेनेति गदिते सति ॥५५॥ वैताढ्यं तं सुरो नीत्वाऽवदद् द्वे एव वल्लभे । सिद्धायतनकूटं च, कुण्डलद्वितयं च मे ॥ ५६ ॥ इदं रत्नावतंसाख्यं, कुण्डलद्वितयं मम । दर्शनीयं तदा नाहं, यदा बुध्ये कथंचन ॥ ५७ ॥ उक्त्वेति तत्र तन्न्यस्य, चिन्तारत्नं समर्प्य च । आख्यद्यदिहलोकस्य, कार्यस्यैकस्य कार्यदः ॥ ५८ ॥ तदेतेन त्वया कार्यं, वैताढ्यगमनं सखे ! । प्रतिपन्नमनेनेदं, कौशाम्बीं च समागतौ ॥ ५९ ॥ दिवं देवो गतश्च्युत्वा, वसुमत्युदरेऽभवत् । बभूव च शरद्यस्याः, सहकारेषु दोहदः ॥ ६० ॥ अप्राप्तौ सा सगर्भाऽपि, व्यथिताऽथ जनोऽवदत् । न जीवाति ततो मूको, मातृस्नेहविमोहितः ॥ ६१ ॥ दध्यौ जिनोक्तेः सत्यत्वादन्यथाऽपि भविष्यति ।

वैताढ्यगमनं मातुर्दोहदं पूरयामि तु ॥ ६२ ॥ ध्यात्वेत्यचिन्तयच्चिन्तारत्नादाम्रफलानि सः । श्रद्धामपूरयच्चास्याः, क्रमेण तन-
योऽजनि ॥ ६३ ॥ नागदत्तपिता तस्यादत्त नाम कृतोत्सवम् । अर्हद्दत्तः स चाशोकदत्तस्यातीव वल्लभः ॥ ६४ ॥ वर्षैकदेश्यं
तं बन्धुर्निन्येऽर्हद्गुरुवेश्मसु । तान्न नाम ननामैष, रुरोद तु हतोदरः ॥ ६५ ॥ अस्य द्विः कथितो धर्म्मो, बन्धुना नात्रुधत्त्वयम् ।
गुरुद्वेपस्फुरत्कर्म्मपरिपाकविपाकतः ॥ ६६ ॥ अग्रजेन ततः प्राच्यभवे संकथिते सति । स प्राह प्रलपत्युच्चैः, किमसंबद्धमीदृशम् ?
॥ ६७ ॥ ज्येष्ठस्तत्कर्म्मसामर्थ्यं, चिन्तयन्नजनि व्रती । अनुजेनेभ्यपुत्र्यस्तु, चतस्रः परिणिन्यिरे ॥ ६८ ॥ अथो विषयग्रस्तस्य,
गते काले कियत्यपि । विपन्नेऽशोकदत्तर्षौ, श्रुते शोकः प्रचुर्यभूत् ॥६९॥ तस्यौर्ध्वदैहिकं चक्रे, स तु ज्येष्ठस्तु पञ्चमे । स्वर्गे स्वर्ग्य-
भवत् तस्य, बोधोपायमचिन्तयत् ॥ ७० ॥ चक्रे जलोदरव्याधिं, ततः सोऽजनि तत्क्षणात् । परिशुष्कभुजः शूनपदः प्रम्लानलो-
चनः॥७१॥ गजजिह्वो विनिद्रश्चारातिमान् गाढवेदनः। प्रत्याख्यातोऽगदंकारैर्विविक्षुर्ज्वलनेऽभवत्॥७२॥ युग्मम् ॥ श्रुत्वेति स्वजना
म्लाना, मूर्च्छिताः प्राणवल्लभाः । खिन्नः परिजनः सर्वो, विलापं विदधेऽधिकम् ॥ ७३ ॥ तदा शबरवैद्यत्वं, वनदेवस्तदौकसः ।
उदघोषयदासन्नं, सर्वव्याधीन् हराम्यहम् ॥७४॥ स्वजनैर्भणितो भद्रापनयास्य महोदरम् । दध्यौ यथेष्ट स प्राह, धर्म्मवैद्योऽस्म्यहं
ननु ॥७५॥ अभ्यधात् कृच्छ्रसाध्योऽस्य, नापयाति यथा तथा । निदानं परिहर्त्तव्यं, सेव्यस्तत्परिपन्थकः ॥७६॥ निदानं द्विविधं
तच्चैहिकामुष्मिकभेदतः । ऐहिकं त्यज्यतेऽपथ्यं, धातुक्षोभस्य कारणम् ॥ ७७ ॥ आमुष्मिके तु मिथ्यात्वं, हेयं सेव्ये च सर्वदा ।
विशुद्धे दर्शनज्ञाने, सौत्रार्थौ पौरुषीद्वये ॥ ७८ ॥ त्रिधाऽथ षड्व्रती पाल्या, वर्जनीयाः क्षुदादयः । अम्यमप्रतिबद्धेन, स्थातव्यं
काननादिषु ॥ ७९ ॥ कुर्वाणस्येति किन्त्वेतद्, यतो भवं (साध्यं तव) जलोदरम् । ततः परिजनेनोचे, मरणाद् रुचिरं ह्यदः ॥८०॥

स मृत्योराधिकं ह्येतत्, ध्यात्वेत्यूचे भवत्विदम्। वैद्यः प्रोचेऽथ शक्तिं मे, पश्य क्लेशापहां क्षणात् ॥ ८१ ॥ निश्चितेन त्वया भाव्यं, मोहो हेयश्च सर्वथा। न कर्त्तव्यः कुसंसर्गो, नाज्ञा खण्ड्या च मे क्वचित् ॥ ८२ ॥ ततो मण्डलमालिख्यार्हद्दत्तं न्यस्य तत्र च। अभिमन्त्र्यौषधं दत्तं, छन्नश्च श्वेतवाससा ॥ ८३ ॥ दिव्यशक्त्याऽथ तस्याङ्गाद्, विमुक्ताक्रन्दभैरवः। अंगयोगमहाभंगपूर्वं रूपेण भीषणः ॥ ८४ ॥ दुर्गन्धोऽश्रव्यगीरात्मतुल्यश्चाष्टशतान्वितः। मूर्त्तो व्याधिः समाकृष्टस्तेन पापविपाकवत् ॥ ८५ ॥ युग्मम् ॥ विस्मितोऽथ जनः सर्वस्तस्य निद्रा समागमत्। प्रबोध्य भिषजा प्रोक्तो, व्याधिस्तेऽपगतो ननु ॥ ८६ ॥ तत्तथा भवता कार्यं, यथा नायं पुनर्भवेत्। क्रमेणाप्राप्तपूर्वं चारोग्यसौख्यमवाप्स्यसि ॥ ८७ ॥ अनेन व्याधिना ग्रस्तोऽहमप्यस्मि भवानिव। काचिन्मात्राऽपनीता च, रोगस्यास्य मयाऽपि हि ॥ ८८ ॥ शेषापनयनोपाया, वक्तुं(कर्त्तुं)मे नाधुनोचिताः। ततस्त्वमुत्तमोपायं, कुर्वीथ मम चेष्टितम् ॥ ८९ ॥ उत्तमः क उपायोऽत्र?, लोकपृष्टो भिषग्जगौ। जैनीदीक्षाग्रहस्तस्माद्, व्याधिः सर्वोऽप्यपैत्ययम् ॥ ९० ॥ मज्जातौ तु न दीक्षा स्यात्, त्वं तु जात्युत्तमान्वितः। दीक्षां गृहाण वा सार्द्धं, मया वा विहरान्वहम् ॥ ९१ ॥ लोकः प्रोवाच ते भ्राता, पूर्वं प्रव्रजितोऽभवत्। तादिदं सुन्दरं कर्त्तुमुचितं च कुरुष्व तत् ॥९२॥ अनिच्छन्नपि चित्तेन, प्रतिपेदे स तद्गिरा। कस्मिन्नप्यागते साधौ, जग्राह द्रव्यतो व्रतम् ॥ ९३ ॥ गते शबरवैद्येऽसौ, समुत्पन्नारतिः पुनः। द्रव्यलिङ्गं परित्यज्य, निजं गृहमुपागतः ॥ ९४ ॥ गतैश्च दिवसैः कैश्चिदवधेरुपयोगतः। ज्ञात्वा देवेन स व्याधिः, कृतो लोकेन निन्दितः ॥ ९५ ॥ तद्बन्धुभिस्तु सोऽन्विष्टो, वैद्यः प्राप्तः कथंचन। उक्ते प्रशमने व्याधेर्व्रतमग्राहयत् पुनः ॥९६॥ पुनस्त्यक्तव्रते तस्मिन्, महाव्याधिं सुरोऽकरोत्। उक्तोऽथ बन्धुभिर्वेत्सि, नात्मानमपि मूढधीः? ॥ ९७ ॥ म्रियस्व तस्य वा वाक्यं, कुरु स प्राह साम्प्रतम्। तं प्रेक्षे यदि तत्तस्य,

वचनं विदधाम्यहम् ॥९८॥ गवेषितोऽथ स दृष्टो, वैद्यः प्रोक्तश्च सत्रपैः । तदेव तव पुत्रेण, कृतं व्याधिर्महानभूत् ॥ ९९ ॥ ततः कोऽप्यस्त्युपायोऽत्र ?, वैद्यः प्राहैष लम्पटः । अपौरुषश्च दौर्गत्ये, बह्वीः प्राप्स्यति वेदनाः ॥ १०० ॥ आयुष्मतां तु युष्माकमुपरोधात्तमेकदा । तच्चिकित्सामि चेत् सार्द्धं, मयैव हि स हिण्डति ॥ १०१ ॥ प्रतिपद्य तदेतैश्चार्हद्दत्ताय निवेदितम् । नान्या गतिरिति ध्यात्वा, प्रत्यपद्यत सोऽप्यदः ॥ १०२ ॥ तैरानीतो भिषक् प्राह, क्वीडेयं पश्चिमा न तु । त्वया भव्येन तद् भाव्यं, तत्कार्यं यत् करोम्यहम् ॥ १०३ ॥ अहं न क्वापि मोक्तव्योऽर्हद्दत्तस्तत् प्रपन्नवान् । चिकित्सितत्रा च स प्रोक्तो, मा भूः कापुरुषोऽधुना ॥१०४॥ देवेन तस्य चागौणं, गौणात्रितयमार्पितम् । नगरीतो विनिर्गत्य, गतौ ग्रामान्तरे ततः ॥ १०५ ॥ देवः स्वमायया ग्रामं, प्रज्वलंतमदर्शयत् । विध्यापनाय तृण्यां च, गृहीत्वा स्वं प्रधावितम्॥१०६॥ अर्हद्दत्तोऽवदद्दीप्तं, विध्याप्येत न तृण्यया । किं वेत्सीदं सुरप्रोक्ते, किं ज्ञेयमिति सोऽवदत् ? ॥१०७॥ देवः प्रोवाच चेद्वेत्सि, तत् क्रोधानलदीपिते । गृहे(व्रतं)गृहीत्वा देहीव, कथं विशसि बालक ! ॥ १०८ ॥ स्थितस्तूर्ष्णी न बुद्धस्तु, ततः कण्टकसंकुले । देवः पथि व्रजन् उक्तस्तेन त्यजसि किं समम् ? ॥ १०९ ॥ देवः प्रोवाच वेत्सीदं, यदि तत् किमिवाधुना । रागादिकण्टकाकीर्णे, भवमार्गे व्रजस्यहो ? ॥ ११० ॥ स्थितस्तूर्ष्णी न सम्बुद्धो, देवेनास्याथ दर्शितः । जनैः प्रपूजितो यक्षः, पुनः पुनरधः पतन् ॥१११॥ निर्भाग्यो यक्ष इत्युक्ते, तेन देवो जगाद तम् । यदीदं वेत्सि तत् किं त्वं, प्रयासि नरकं प्रति ? ॥ ११२ ॥ स्थिते तूष्णीमसम्बुद्धे, तत्र कोलोऽथ दर्शितः । हित्वा धान्यतुषान् स्वादन्तममेध्यममेध्यधीः ॥ ११३ ॥ तेनोक्ते निर्विवेकोऽयं, सुरः प्राहेति वेत्सि चेत् । तत् किं श्रमणतां हित्वा, विषयान् बहु मन्यसे ? ॥ ११४ ॥ स्थिते तूष्णीमसम्बुद्धे, तत्र देवो वृषं व्यधात् । क्षेत्रमध्याविदूरस्थत्यक्तजुञ्जुमचारिकम् ॥ ११५ ॥ शुष्ककूपैकदेश-

स्थदूर्वालेशाभिलाषुकम्। पतितं कूपके चूर्णीभूतांगोपांगदुःस्थितम् ॥११६॥ युग्मम् ॥ अर्हद्दत्तस्तु तं वीक्ष्य, आहाहो अस्य मूढता। देवः प्रोवाच जानाति, यदीदं तत् कथं भवान् ॥ ११७ ॥ हित्वा जुञ्जुमचार्यीमं, क्षेत्रस्थं स्वर्गिणां सुखम्। दूर्वामभ्यर्थमोगेषु, लुब्धः पतति दुर्गतौ ? ॥ ११८ ॥ युग्मम् ॥ श्रुत्वेति विगलत्कर्म्मा, स दध्यौ कोऽप्ययं खलु। अमानुषो वदत्येवं, भ्रातेव मयि वत्सलः ॥ ११९ ॥ ऊचे चाशोकदत्तस्य, तुल्यः कोऽसि भवान् मयि ? । स प्राहाहं स एवास्मि, पर्यायान्तरितः पुनः॥ १२० ॥ कः प्रत्ययोऽत्र तेनोक्ते, देवः प्रोवाच यत्त्वया। भणितोऽहं हि वैताढ्ये, स्थगितं कुण्डलद्वयम् ॥ १२१ ॥ दर्शयित्वा प्रबोध्योऽहं, तस्मात्तद्दर्शयाम्यतः। प्रत्ययेन किमन्येन ?, तच्च प्रत्यभृणोदसौ ॥ १२२ ॥ युग्मम् ॥ दिव्यरूपेण भूत्वाऽथ, नीतो वैताढ्यपर्वते। सिद्धायतनकूटे च, दर्शितं कुण्डलद्वयम् ॥ १२३ ॥ स तद्रत्नावतंसाख्यमीक्षित्वा जातिमस्मरत्। प्रतिबुद्धः प्रपन्नश्च, तत्क्षणं भावतो व्रतम् ॥ १२४ ॥ क्षमयित्वा गते देवेऽर्हद्दत्तो मुनिपुंगवः। प्रपाल्य संयमं शुद्धं, सिद्धिं प्राप क्रमादसौ ॥ १२५ ॥ भव्योऽप्येवं गणपतिपदाभावितोऽप्यत्र जन्मन्यर्हद्दत्तः पुनरपि पुनः संयमं यन्मुमोच। तन्मन्येऽहं त्रिदिवपदवी सापि सुप्रापरूपा, संसारेऽत्र ध्रुवमसुमतां दुर्लभं बोधिरत्नम् ॥ १२६ ॥इत्यस्यां विवृतौ श्रीमत्प्रद्युम्नस्य कवेः कृतौ। बोधिदुर्लभताद्वारं, द्वितीयं पर्यपूर्यत ॥ १२७ ॥

अथोत्तरार्धोक्तप्रव्रज्यादुष्प्रापत्वे जमालिप्रभृत्यष्टनिह्नवदृष्टान्ताः कथ्यन्ते, तेषु जमालिदृष्टान्तः, तथाहि—

किञ्च केचन बोधिं च, प्रव्रज्यां द्रव्यतोऽपि च। प्राप्यापि निह्नवत्वेन, जमाल्याद्या इवाभवन् ॥ १ ॥ श्रीमतो वर्द्धमानस्य, वर्त्तमानेऽपि केवले। चतुर्दशाब्दास्तेष्वाद्यो, जमालिर्निह्नवोऽजनि ॥ २ ॥ तथाहि क्षत्रियकुण्डग्रामाख्ये नगरे विभोः। श्रीवी-

रस्याभवज्ज्येष्ठा, जामिर्नाम्ना सुदर्शना ॥ ३ ॥ तदग्रजन्मा जामेयो, जमालिर्नाम विश्रुतः । उपयेमे विभोः पुत्रीं, जामाताऽपि ततोऽभवत् ॥४॥ सोऽद्वेषाहृदयो द्वेधा, प्रियदर्शनया ततः । क्रीडाभिर्निर्गतान् घस्रान्, बहून् नापि बुधोऽबुधत् ॥५॥ स्वामिन्यन्येद्युरायाति, विज्ञाते नन्तुमागमत् । जमालिर्मोलितः सादिभिरसादी रसादिभिः ॥ ६ ॥ त्रिश्च प्रदक्षिणीकृत्य, प्रणम्य च जगद्गुरुम् । दिशमानं दशविधं, धर्म्मं शुश्राव भावतः ॥ ७ ॥ संवेगसंगतो दीक्षां, जिघृक्षुः प्रियदर्शनाम् । उवाच व्रतमादास्ये, त्वदास्येन मतोऽधुना ॥ ८ सा प्राह प्राणनाथ ! त्वमादास्यसि यदि व्रतम् । तदस्मि प्रियचारित्राऽग्रेऽप्यहं प्रियदर्शना ॥ ९ ॥ श्रुत्वेत्यर्यं पञ्चशत्या, क्षत्रैः सह ललौ व्रतम् । सहस्रेण च नारीभिः, सहिता प्रियदर्शना ॥ १० ॥ एकादशाङ्गीमध्यैष्ट, विशिष्टमतिसंयुतः । अन्यदा स्वाम्यनुज्ञातः, श्रावस्तीनगरीमगात् ॥ ११ ॥ स तत्र तिन्दुकोद्याने, चैत्ये कोष्ठकनामनि । शमवान् समवासार्षीत्, महर्षीणां शतैर्वृतः ॥ १२ ॥ दाहज्वरनिरुत्साहः, सोऽन्यदा नासितुं क्षमः । आदिदेश यतीन् कर्तुं, संस्तरं चारुविस्तरम् ॥ १३ ॥ तेन पृष्टाः परिभ्रष्टपटुत्वेन शिशिरके । संस्तरं क्रियमाणं ते, कृतमाहुर्महर्षयः ॥ १४ ॥ समीपमयमायातः, क्रियमाणं विलोकयन् । दध्यौ नैतत् समीचीनं, क्रियमाणं कृतं वचः ॥ १५ ॥ यच्चलच्चलितं जीर्यज्जीर्णं वक्ति जिनोऽपि हि । तन्मिथ्या क्रियमाणोऽयमकृतः संस्तरो यतः ॥ १६ ॥ यथा संस्तीर्यमाणोऽयमसंस्तीर्णोऽस्ति संस्तरः । तथा चलदचलितं, जीर्यमाणमजीर्णकम् ॥ १७ ॥ निर्ग्रन्थानामथान्येषां, तत्तथाऽकथयच्च सः । क्रियमाणं कृतं न स्यात्, कृतमेव कृतं भवेत् ॥१८॥ तस्येत्थं चक्षमाणस्य, केऽपि श्रद्दधते वचः । केचिन्न मुनयः सा तु, श्रद्धत्ते प्रियदर्शना ॥ १९ ॥ ये श्रद्दधति ते तस्यैवान्तस्तथा विचरन्ति च । ये न श्रद्दधते ते तं, बोधयन्ति तु हेतुभिः ॥ २० ॥ असद्ग्रहाग्रहात् तं चाबुध्यमानं विहाय ते । श्रीवीरपादाना-

२ प्रव्रज्या-
दुरापत्वे
जमालिः

श्रित्य, विहरन्ति हितेच्छवः ॥ २१ ॥ ढङ्कस्य कुम्भकारस्य, सदने प्रियदर्शना । स्थिता जमालिप्रज्ञप्तमार्याणां पुरतो जगौ ॥२२॥
जमालिगदितं ढङ्कस्याग्रतोऽपि वदत्यदः । इयं विप्रतिपन्नेति, ध्यात्वा ढङ्को जगाद ताम् ॥ २३ ॥ एवंविधं विशेषं च, कथ्यमानं
न वेद्म्यहम् । अप्रबुद्धा च मे बुद्धिर्न च बोधामि बोधितम् ॥ २४ ॥ अन्यदा गुणयन्तीं तामभि चिक्षेप कुम्भकृत् । अङ्गारं तेन
तस्यैकदेशे संघाट्यदह्यत ॥ २५ ॥ तयोक्तं मम संघाटी, दग्धा स प्राह मेद्दशम् । वदतस्तव महोत्सूत्रं, संघाटी यददह्यत
॥ २६ ॥ ऋजुसूत्रनयमते, श्रीवीरवचनश्रितम् । दह्यमानं भवेद्दग्धं, वस्त्रं न तु भवन्मते ॥ २७ ॥ तथेति प्रतिश्रुत्यैषा, सत्यमित्य·
भिधाय च । प्रज्ञा प्रज्ञापयामास, जमालिं बहुभङ्गिभिः ॥ २८ ॥ जमालिवचनं तस्या, न जग्राह निजाग्रहात् । यदा तदा शेष-
साधुसाध्वीयुक् सा ययौ प्रभुम् ॥ २९ ॥ जमालिरपि चम्पायामागत्य स्वामिनं जगौ । छद्मस्था बहवः शिष्या, अपक्रान्ताः
पुरा तव ॥ ३० ॥ अहं तूत्पन्नसज्ज्ञानदर्शनोऽर्हन् जिनोऽपि च । केवल्यपक्रमेणैवापक्रान्तः केवली भवात् ॥३१॥ गौतमस्तं जगा-
दाथ, जमाले! माऽऽलमालपः । केवलज्ञानिनो ज्ञानं, न खलु स्खलति क्वचित् ॥ ३२ ॥ यदि त्वं केवली तद् द्वौ, प्रश्नौ व्याकुरु
मेऽग्रतः । अयं जीवश्च लोकश्च, शाश्वतोऽशाश्वतोऽथवा ? ॥ ३३ ॥ जमालिर्गौतमेनेति, प्रोक्तो मौनमसेवत । बलं मूर्खस्य
मौनत्वमिति सत्यापयन्निव ॥ ३४ ॥ अथ प्राह प्रभुः सन्ति, च्छद्मस्था बहवोऽपि मे । शिष्याः प्रश्नाविमौ तेऽतिव्याकर्तुं सकलौ
क्षमाः ॥ ३५ ॥ लोको भूतभवद्भाव्यपेक्षया खलु शाश्वतः । उत्सर्पिण्यवसर्पिण्यपेक्षया तु न शाश्वतः ॥ ३६ ॥ जमाले ! शाश्वतो
जीवो, द्रव्यरूपेण सर्वदा । त्रिभिस्तिर्यग्नृदेवत्वपर्यायैस्तु न शाश्वतः ॥ ३७ ॥ इत्थं कथयतो देवदेवस्याश्रद्दधद्वचः । मर्त्युकाम
इवान्नस्यापचक्राम स दूरतः ॥ ३८ ॥ असद्भावोद्भावनाभिर्बहुभिः स्वं परं च सः । मिथ्यात्वाभिनिवेशैश्च, व्युद्ग्राहयदाग्रहात्

॥ ३९ ॥ बहूनि स च वर्षाणि, तपः षष्ठाष्टमादिकम् । विधाय विदधे प्रान्ते, प्रायं पक्षं च वासरान् ॥४०॥ अनालोच्याप्रतिक्रम्य, तत्तादृगन्तके दिवि । त्रयोदशपयोदायुर्देवः किल्बिषिकोऽभवत् ॥ ४१ ॥ यामाता च यमश्चापि, कस्यापि न निजाविति । सत्यं जमालिना चक्रे, श्रीवीरेऽपि विरोधिना ॥ ४२ ॥

अथ षोडशभिर्वर्षैर्ज्ञाने जाते जगद्गुरोः । वाचयन् सप्तमं पूर्वं, द्वितीयो निह्नवोऽभवत् ॥ १ ॥ पुरे राजगृहे पूर्वं, सर्वपूर्वविचारकाः । आचार्या वसुनामानः, समवासार्षुरुद्यताः ॥२॥ तेषां विशिष्टधीः शिष्यस्तिष्यगुप्तोऽभिधानतः । आत्मप्रवादपूर्वान्तः, पठत्यालापकं त्विमम् ॥ ३ ॥ भदन्तात्मप्रदेशः किमेको जीवः प्रकीर्त्यते? । नायमर्थः समर्थः स्यादेवं द्वावपि तौ तथा ॥ ४ ॥ सङ्ख्याता अप्यसङ्ख्याता, अपि जीवो न चोच्यते । अप्येकेन प्रदेशेन, न्यूनत्वे जीवता न हि ॥ ५ ॥ लोकाकाशप्रदेशैस्तु, स समानप्रदेशवान् । स्याद् वक्तव्यं जीव इति, कृत्स्नः स परिपूर्णकः ॥ ६ ॥ सोऽत्र विप्रतिपन्नो यत्, सर्वे जीवप्रदेशकाः । एकोना अपि ते जीवव्यपदेशतया न चेत् ॥ ७ ॥ तर्हि पाश्चात्य एवैकः, प्रदेशो जीव इष्यते । यतस्तद्भावभावित्वे, स जीवो व्यपदिश्यते ॥ ८ ॥ प्रज्ञापितोऽपि गुरुभिः, स्थविरैरितरैरपि । नास्थाद्यदाऽथ व्युत्सृष्टः, कायोत्सर्गेण साधुभिः ॥ ९ ॥ मिथ्यात्वाभिनिवेशेन, मुग्धं व्युद्ग्राहयन् जनम् । असद्भावोद्भावनाभिर्बहुभिश्च चचार सः ॥ १० ॥ गतश्चामलकल्पायामाम्रशालवने स्थितः । मित्रश्रीर्नाम तत्रास्ति, श्रमणोपासकः परः ॥ ११ ॥ स चात्मश्रावकैः सार्द्धं, साधूंस्तान् वन्दितुं गतः । जानाति निह्नवान् शाठ्यान्, नत्वा धर्मं शृणोति तत् ॥ १२ ॥ स तं विबोधयत्युच्चैः, श्रावकस्तु प्रतीच्छति । अन्यदा तद्गृहे जज्ञे, कश्चनापि महोत्सवः ॥ १३ ॥ वदन्ति विनयेनेति, पादैराक्रम्यतां गृहम् । निमन्त्रिताश्च तेनैते, विहर्तुं च समागमन् ॥१४॥ निवेश्य तिष्य-

गुडं च, श्राद्धो महति विष्टरे । प्रासुकं फलपक्वान्नाद्यान्नं तस्य पुरो न्यधात् ॥ १५ ॥ सर्वेषामपि वस्तूनामेकैकं खण्डकं ददौ । ते दध्युः पुनरप्येष, सर्वं वस्तु प्रदास्यति ॥ १६ ॥ पपात स च तस्यांह्रौ, स्वजनानप्यपातयत् । ऊचे च कृतकृत्योऽस्मि, यद्यूयं प्रतिलंभिताः ॥१७॥ तेऽदोऽसमंजसं दृष्ट्वाऽऽहुः किं श्राद्ध ! प्रतार्यते ? । भवदीयमतेनान्त्यः, प्रदेशः पूर्णरूपभाग् ॥१८॥ ततः सर्वांशदानेन, भवन्तः प्रतिलंभिताः । न तु श्रीवर्द्धमानस्य, सिद्धान्तात्प्रतिलम्भिताः ॥ १९ ॥ सम्बुद्धास्ते ततः प्रोचुः, सम्यग्वः प्रेरणा ह्यसौ । सर्वथा प्रतिलम्भ्याथ, द्राग् मिथ्यादुष्कृतं कृतम् ॥ २० ॥ इति ते बोधिताः सर्वे, सुश्राद्धेन महात्मना । आलोचितप्रतिक्रान्ता, विहरन्ति महीतले ॥ २१ ॥

चतुर्दशोत्तरे वीरसिद्धेरब्दशतद्वये । गते सति तृतीयोऽथ, निह्नवोऽऽभिनवोऽभवत्॥१॥ श्वेतवी श्वेतवीक्षारहारिण्यस्ति पुरीवरा । उद्यानमस्ति पोलासं, सविलासं पतत्रिभिः ॥२॥ आर्याषाढाभिधास्तत्राचार्याश्चाचारवेदिनः । स्थिराः स्थिराशयास्तस्थुर्बहुसाधुपरिच्छदाः ॥ ३ ॥ आगाढयोगिनस्तस्य, शिष्याश्चाधीयते श्रुतम् । गुरोर्विसूचिका जज्ञे, प्राणसन्देहसूचिका ॥ ४ ॥ न कोऽप्युत्थापितस्तेन, ततः कालगतोऽभवत् । सौधर्म्मे नलिनीगुल्मे, विमाने प्रवरः सुरः ॥ ५ ॥ विज्ञायावधिना कार्यं, तमेवानुप्रविश्य सः । साधूनुत्थापयामास, वैरात्रिकविधेः कृतौ ॥ ६ ॥ योगानां परिपूर्णत्वे, क्षमयामास तानयम् । क्षमध्वं यन्मया यूयं, नमिताः संयता अपि ॥ ७ ॥ अमुकस्मिन् दिने देवीभूतोऽहं भुवमागतः । भवदीयागाढयोगपरिपूर्णत्वहेतवे ॥ ८ ॥ इत्युक्त्वा क्षमयित्वा च, गते देवे सुरालयम् । तच्छरीरं परित्यज्य, सर्वे विप्रतिपेदिरे ॥ ९ ॥ इयन्तं समयं यावत्, वन्दितोऽयमसंयतः । न ज्ञायते ततः कोऽपि, सुरो वा श्रमणोऽथवा ? ॥ १० ॥ नाचार्यमपि वन्दन्तेऽव्यक्तत्वं चिन्तयन्ति च । सर्वमव्यक्तमेवैतद्वाच्यं देवोऽथवा यतिः ॥ ११ ॥

व्यक्तीकृते मृषा वाक्यं, न विश्वस्य क्वचित्ततः। संयता वाऽथ देवा वा, तत्राप्यप्रत्ययो महान् ॥१२॥ एवंविधैरसद्भावैर्वैश्चयन्तः परानपि। बोधितास्तेऽथ संत्यक्ताः, कायोत्सर्गेण साधुभिः ॥१३॥ अव्यक्तास्ते च विख्याता, जग्मू राजगृहेऽन्यदा। मौर्यवंशोऽभवंस्तत्र, बलभद्राभिधो नृपः ॥ १४ ॥ तेन सुश्रावकेणैते, ज्ञातास्तत्र समागताः। भटान् प्रेष्य गुणशीलचैत्यादानायिताश्च ते ॥१५॥ कटान् करटिनश्चैष, समानाय्यादिशद्भटान्। यदमून् कटमर्दैन, मर्दैतां शीघ्रमेव हि ॥१६॥ ते प्रोचिरे वयं विद्मः, प्रसिद्धं त्वामुपासकम्। पुनरेतावतः साधूननाथान् घातयिष्यासि ॥ १७ ॥ निष्कृपोऽथ नृपोऽवोचत्, के यूयमिति वेत्ति कः ? । वैरिणः तस्करा वाऽथ, नृपघातकराः किमु ? ॥ १८ ॥ ते प्रोचिरे महाराज!, निर्ग्रन्थाः श्रमणा वयम्। स प्राह यूयमव्यक्ताः, को वेत्ति श्रमणा न वा? ॥ १९ ॥ श्रमणोपासकोऽहं च, भवामि न भवामि वा ?। मतं चेत् प्रतिपद्यध्वं, व्यवहारनयं ततः ॥२०॥ तेऽथ बुद्धाः समंदाक्षा, निःशङ्कमिति मेनिरे। श्रमणाः स्मो वयं ते च, ताडिता वचनैस्ततः ॥ २१ ॥ उक्ताश्च युष्मत्सम्बोधहेतवेऽदः कृतं मया। एवमुक्ताश्च श्रमणाः, क्षामिताश्च गताश्च ते ॥ २२ ॥

श्रीवीरस्वामिनः सिद्धिं, गतस्याब्दशतद्वये। विंशत्याऽभ्यधिके जाते, जातस्तुर्योऽथ निह्नवः ॥१॥ समस्त्यशिथिला लक्ष्म्या, मिथिला नामतः पुरी। दशपूर्वभृदाचार्यस्तत्रायासीत् महागिरिः ॥ २ ॥ शिष्यस्तस्य च कौडिन्यः, सुमित्राख्योऽस्ति तत्र च। चैत्ये लक्ष्मीगृहाभिख्ये, सशिष्याः सन्ति सूरयः ॥ ३ ॥ अनुप्रवादपूर्वेऽसौ, वस्तुनैपुणिकाभिधम्। पठत्यालापकस्तत्रास्त्युच्छेदनयवाच्यगः ॥ ४ ॥ प्रत्युत्पन्ननैरयिका, व्युच्छेत्स्यन्त्यखिलाः किल। एवं भवनपत्याद्या, जीवा वैमानिका अपि ॥ ५ ॥ तस्यैवमधीयानस्य, विचिकित्साऽजनीदृशी। व्युच्छेत्स्यन्ति मुनयोऽपि, सर्वोच्छेदो भविष्यति ॥ ६ ॥ जज्ञे तस्यास्थिरं चित्तं, स्थविरैः

प्रतिबोधितः । यदा नास्थात्ततो निर्वासितो निह्नव इत्ययम् ॥ ७ ॥ समुच्छेदमयं वादं, सर्वत्र व्याकरोत्ययम् । यदयं सकलो लोकः, शून्य एव भविष्यति ॥ ८ ॥ स्वशिष्यसहितः सोऽथान्यदा राजगृहं गतः । तत्र चारक्षकाः शुल्कपालाः श्रावकपुङ्गवाः ॥ ९ ॥ ते च तान्निह्नवान् ज्ञात्वा, हन्तुं प्रारेभिरेतराम् । ते भीताः प्राहुरस्माभिः, श्रुतं यूयमुपासकाः ॥ १० ॥ तत्कथं संयताने-तावतो हंथ तथाऽपि हि? । परे प्रोचुर्व्यवच्छिन्नाः, संयताः सकला अपि ॥ ११ ॥ यूयमन्येऽधुना केऽपि, तस्करा यदिवा चराः । विनंक्ष्यथ स्वयं चैव, कः परो घातयिष्यति ? ॥ १२ ॥ भवतामेव सिद्धान्ताद्वयमप्यपरेऽधुना । जिनागमात्तु ते यूयं, वयं ते घातकाश्च वः ॥ १३ ॥ यतस्तदेव कालादिसामग्रीं प्राप्य नश्यति । वस्त्वेकसमयेत्वेनोत्पद्यते तद्द्विकत्वतः ॥ १४ ॥ तदेक-समयत्वेन, व्यवच्छिद्याथ नारकाः । सन्ति द्विसमयत्वेन, ततस्त्रिसमयाश्च ते ॥ १५ ॥ ततः क्षणिकतावादे, श्रावकैः सुप्ररूपिताः । सम्यक् शिक्षा तथेत्याहुर्मुनयो नयचक्षुषः ॥ १६ ॥ इति संबोधितास्तैस्ते, मुक्ताश्च क्षमितास्तथा । आलोचितप्रतिक्रान्ता, विहरन्ति यथाविधि ॥ १७ ॥

अथाष्टाविंशत्यधिके, जाते वर्षशतद्वये । सिद्धिं गतस्य वीरस्य, निह्नवः पंचमोऽजनि ॥ १ ॥ उल्लुका नाम नद्यस्त्युल्लुका-तीराभिधं पुरम् । तस्यास्तीरेऽस्ति चैकस्मिन्, खेटस्थानं द्वितीयके ॥ २ ॥ तत्रास्ति धनगुप्ताख्यः, शिष्यः श्रीमन्महागिरेः । धनगुप्तस्य शिष्यस्तु, गङ्गदेवाख्यया गुणी ॥ ३ ॥ स प्राच्येऽस्त्युल्लुकातीरे, तद्गुरुः पश्चिमे तटे । शरदि स्वं गुरुं नन्तुं, सोऽचा-लीदनलीकधीः ॥ ४ ॥ खलतेस्तस्य च स्रोतस्विनीमुत्तरतो भृशम् । तापः शिरसि शीतं च, जलं लगति पादयोः ॥ ५ ॥ स दध्यौ भणितं सूत्रे, वेद्यते न क्रियाद्विकम् । अहं तु वेदयामि द्वे, तन्मन्ये वेद्यते कथम् ? ॥ ६ ॥ ततो गतो नमस्कृत्य, गुरुं

ह्युपयोगाः

प्रोवाच तत्तथा । गुरुः प्रोवाच वत्सैवं, मा प्ररूपय नास्त्यदः ॥ ७ ॥ नैकत्र समये क्वापि, वेद्यते हि क्रियाद्वयम् । स तदश्रद्दधत्
तं च, परं प्रापंचयद्बहु ॥ ८ ॥ एकदा स मुनीन् प्रज्ञापयन्नाकर्णि सूरिणा । निष्कासितः स यातोऽथ, पुरे राजगृहाभिधे ॥ ९ ॥
तत्र महातपस्तीरप्रभे पार्श्ववनेऽस्ति च । नागो मणिनामधेयस्तस्य चैत्येऽस्ति स स्थितः ॥ १० ॥ तत्र मध्येसभं चैवमाख्याति
खलु जन्तवः । एकेनापि समयेन, द्वे क्रिये वेदयंति यत् ॥ ११ ॥ ततस्तेन स नागेन, तस्या एव हि संसदः । मध्ये मुद्गरमु-
द्धार्य, प्रोक्तः क्रोधोद्धुताधरम् ॥१२॥ इमां प्रज्ञापनां प्रज्ञापय मा सुष्ठु नो यतः । प्रज्ञापनेयं ते दुष्टा, शैक्ष ! दुष्ठु तवोदितम् ॥१३॥
चिरं कालमहं श्रीमन्महावीरपदान्तिके । निविष्टः श्रुतवानेका, क्रिया यत् किल वेद्यते ॥ १४ ॥ त्वं विशिष्टतरो जातोऽसि किं
तत् त्यज कुग्रहम् । नाशयिष्यामि ते दोषादन्यथा मुद्गराहतेः ॥ १५ ॥ अत्रैव समवसृतैर्वीरपादैरिदं यतः । व्याकृतं वेद्यते नैक-
समयेन क्रियाद्वयम् ॥ १६ ॥ एवं प्रज्ञापितस्तेन, तद्भयाच्चोदनाच्च सः । तदङ्गीकृत्य मिथ्या मे, दुष्कृतं तदुवाच च ॥ १८ ॥

पञ्चसंख्यैश्चतुश्चत्वारिंशदग्रैः समाशतैः । वीरे सिद्धिं गते षष्ठोऽभूत् त्रैराशिकनिह्नवः ॥ १ ॥ पुर्यामन्तरंजिकायां, चैत्ये भूत-
गुहाभिधे । श्रीगुप्ता नामतस्तस्थुः, सूरयः पुण्यभूरयः ॥ २ ॥ बलिश्रीर्नामतस्तत्र, बलिश्रीहारको नृपः । बलिश्रीमज्जनानंदी,
बलिश्रीपूजितामरः ॥ ३ ॥ अस्ति श्रीगुप्तसूरीणां, रोहगुप्तः सहोदरः । शिष्यः स चान्यतो ग्रामात्, पुरीमेत्यन्तरञ्जिकाम् ॥ ४ ॥
तत्र प्राव्राजकश्चैको, भ्राम्यति स्म धृतस्मयः । जम्बूशाखाकरः कालायसपट्टसितोदरः ॥ ५ ॥ पृष्टो वक्ति च विद्याभिः, स्फुट्यते
जठरं मम । जम्बूशाखा च यज्जम्बूद्वीपे नास्ति समो मम ॥६॥ शून्याः परप्रवादास्तत, प्रतिवादी न कोऽपि मे । पट्टना पटहेनेति,
स पुर्यां समघोषयत् ॥ ७ ॥ तस्यैवं भ्रमतो नित्यं, चतुष्के चत्वरे त्रिके । पोट्टशाल इति नाम, नाम लोकेन निर्ममे ॥ ८ ॥

रोहगुप्तः समागच्छन्, रोहचित्तोऽप्रतिस्तकम् । निषेध्य पटहं प्राह, वादं दास्याम्यहं त्वया ॥ ९ ॥ कृत्वैवं स गतः सूरिं, वंदित्वाऽऽलोचयच्च तत् । आचार्याः प्रोचिरे दुष्ठु, कृतं विद्यावली हि सः ॥ १० ॥ वादे पराजितः सद्यो, विद्याभिरपि ढौकते । सप्तव्यसनवत् तस्य, सप्त विद्या हि दुस्तराः ॥११॥ ताश्च वृश्चिकसर्पाखुमृगसूकरवायसैः । विद्याशकुन्तिकाभिश्चोपद्रवन्ति जितेऽपि हि ॥ १२ ॥ इतरः प्राह किं तर्हि, नश्यद्भिश्छुट्यते क्वचित्? । किं वा प्रारब्धमुज्झद्भिः, श्रोतसामपि लज्ज्यते ॥१३॥ अथ गुरुः पुरो विद्याप्रतिपक्षतया स्थिताः । पाठसिद्धा ददौ विद्याः, सप्त तस्य जयावहाः ॥ १४ ॥ मयूरी नकुला चौतुर्व्याघ्री सिंहदिवान्धिका । श्येनी चेति महाविद्या, नाम्नास्ताः परिकीर्त्तिताः ॥ १५ ॥ युग्मम् ॥ अभिमन्त्र्य गुरुस्तस्मै, रजोहरणमप्यदात् । ऊचे च किञ्चिदुत्तिष्ठत्, परं यदि भयंकरम् ॥ १६ ॥ तद्रजोहरणेनाशु, तद्रजोवच्च संहरेः । शक्रेणापि न शक्योऽसि, जेतुं किमपरैर्नरैः? ॥ १७ ॥ सोऽथ विद्याः समादाय, गतो भूपसभं प्रति । ऊचे च किमयं वेत्ति ?, पूर्वपक्षं करोतु तत् ॥ १८ ॥ परिव्राट् चिन्तयांचक्रे, वक्रेण मनसाऽथ सः । एषामेवाददे पक्षं, सिद्धांते निपुणा ह्यमी ॥ १९ ॥ ध्यात्वेत्युवाच द्वौ राशी, जीवोऽजीवश्च मे मतौ । रोहगुप्तोऽथ दध्यौ मे, सिद्धांतो ह्यमुनाऽऽददे ॥ २० ॥ ध्यात्वेति प्रातिभं तस्यामभिभूपमभापत । जीवा अजीवा नोजीवा, इति स्यू राशयस्त्रयः ॥ २१ ॥ तत्र संसारिणो जीवा, अजीवाश्च घटादयः । नोजीवाश्च गृहगोधाछिन्नपुच्छादयो मताः ॥ २२ ॥ आदिर्मध्यं तथाऽन्तश्च, दण्डस्य स्यात् त्रिधा यथा । कालोऽतीतो वर्त्तमानोऽनागतश्च यथा त्रिधा ॥२३॥ किं बहूक्तेन ? सर्वेऽपि, भावा भवविवार्त्तिनः । त्रिधैवेति स निष्पिष्टप्रश्नव्याकरणः कृतः ॥ २४ ॥ निश्चितो प्रश्ने तस्य, सोऽमुचत् वृश्चिकाँस्ततः । तच्चर्वणकणानन्यो, मयूरानमुचत्पुनः ॥ २५ ॥ सर्प्पांस्तदवसर्प्पाय, परिव्राडमुचत् ततः । उरगानाकुलीकर्तुं, नकुलान् मुमुचे

मुनिः ॥ २६ ॥ मुमोच मूषकानेष, द्वेषभृज्जिनशासने । वृषे रविरिवौजस्वी, स्थितोऽन्यो वृषदंशकान् ॥ २७ ॥ परिव्राजः कुरङ्गोऽसिन्, कुरङ्गानमुचत्ततः । ते हि तीक्ष्णविषाणाभ्यां, दारयन्त्युदरं रिपोः ॥२८॥ आम्नायप्रतिघो व्याघ्रान्, घोरान व्यात्ताननान् परः । विचकार सुरङ्गोऽयं, कुरङ्गान्निचकार च ॥३०॥ निःशूकः शूकरानस्य, परिव्राट् मुमुचे ततः । मुनिपञ्चाननः पञ्चाननानथ विनिर्ममे ॥ ३० ॥ तस्मै तीव्रमुखान् श्यामान्, पक्षसूत्कारकारिणः । परिव्राडमुचद्द्राणानायसानिव वायसान् ॥ ३२ ॥ तद्विघ्नघातके घूकान्, घोरघूत्कारकारकान् । निर्ममे निर्ममेशोऽयं, कृतप्रतिकृतौ कृती ॥ ३३ ॥ निरुपायोऽप्यपायैषी, शकुनान्ताः शकुन्तिकाः । परिव्राड् मुमुचे तस्मै, मुनये कुनये स्थितः ॥ ३४ ॥ तन्नाशनमनाः श्येनसेनामयममर्पणः । विदधे पिदधे चास्य, परिव्राजो मनोरथम् ॥ ३५ ॥ स रुषा पुरुषाचारवर्जितः खरयोषितम् । मुमोच श्रमणो धर्म्मध्वजेन तामताडयत् ॥ ३६ ॥ सा चोपरि परिव्राजकस्य तस्य द्रुतं शकृत् । विमुच्य नश्यति स्मोच्चैर्जने पश्यति कौतुकात् ॥ ३७ ॥ परिव्राजोऽस्य बालस्य, मुखे बालत्वकालवत् । रसं खरी पुरीषस्यादधे मदगदच्छिदम् ॥ ३८ ॥ अमन्दं निन्द्यमानोऽथ, निरवासि नृपेण सः । एवं तेन पराजिग्ये, परिव्राजकपांशनः ॥ ३९ ॥ गतोऽथ रोहगुप्तोऽपि, श्रीगुप्ताचार्यसन्निधौ । तत्तथाऽऽलोचयांचक्रे, गुरवोऽथ बभाषिरे ॥ ४० ॥ उत्तिष्ठता त्वया किं न, प्रोक्त यद्राशयस्त्रयः । न सन्ति तत्पराभूत्यै, मया प्रज्ञापिता मृषा ॥ ४१ ॥ गत्वा तदधुनाऽप्येवं, भणेति स तु नेच्छति । मा मेऽपभ्राजना भूयादिति चेतसि चिन्तयन् ॥ ४२ ॥ पुनः पुनरपि प्रोक्ते, गुरुभिः प्रोचिवानयम् । को दोषः ? किमु वा जातं ?, यद्युक्ता राशयस्त्रयः ॥ ४३ ॥ गुरुणोक्तमसद्भावात्, स्याज्जिनाशातना तथा । तथाऽप्यमेध्यमानोऽयं, संलग्नः सूरिभिः सह ॥४४॥ ततो राजकुलं गत्वा, सूरयः प्रोचिरे इदम् । मच्छिष्येणापसिद्धान्तः, प्रोक्तो राशी द्वयौ यतः ॥ ४५ ॥ स च

विप्रतिपन्नो मेऽस्मद्वादः श्रूयतामतः । नृपेणाङ्गीकृते वादं, स ददौ गुरुणा सह ॥ ४६ ॥ यथैकं दिवसं तद्वन्मासषट्कं तयोर्गतम् । राज्ञोचे भवतां वादाद्राज्यं सीदति मेऽखिलम् ॥ ४७ ॥ सूरयः प्रोचिरे मिथ्या, विधृतोऽयमियच्चिरम् । तत् प्रातर्निग्रहीष्यामि, ग्रहीष्यामि जयश्रियम् ॥ ४८ ॥ प्रातः प्राह ततः सूरिः, परीक्षा कुत्रिकापणे । क्रियतां तत्र सर्वाणि, वस्तूनि सुलभानि यत् ॥ ४९ ॥ तत्रैत्य राजप्रत्यक्षं, देवताऽभाषि सूरिभिः । जीवा अजीवा नोजीवा, अप्यानीय प्रदर्शय ॥ ५० ॥ अथ देवतया जीवाश्चाजीवाश्च प्रदर्शिताः । नोजीवास्तु न सन्तीति, प्राहाजीवान् ददाति वा ॥ ५१ ॥ इत्यादिकचतुश्चत्वारिंशदग्रशतेन सः । पृच्छाभिर्निगृहीतो द्राग्, घोषितं नगरे तथा ॥ ५२ ॥ जयति श्रीमहावीरो, वर्द्धमानो जिनेश्वरः । इतिचैत्यादिपूजातः, सङ्घे जातः सदुत्सवः ॥ ५३ ॥ रुष्टैश्च गुरुभिर्न्यस्तं, खेलमल्लकभस्म यत् । तदेवाङ्गीकृतं तेन, स तु निर्वासितो गणात् ॥ ५४ ॥ षष्ठोऽयं निह्नवो वैशेषिकसूत्राणि निर्ममे । उलूकगोत्रजातत्वादौलुक्यः स च कीर्त्यते ॥ ५५ ॥ पृच्छानां तु चतुश्चत्वारिंशताऽभ्यधिकं शतम् । आवश्यकमहाग्रन्थवृत्तेर्ज्ञेयं मनीषिभिः ॥ ५६ ॥

गते चतुरशीत्यग्रे, समानां शतपंचके । श्रीमतो वर्द्धमानस्य, सप्तमोऽजनि निह्नवः ॥ १ ॥ देवेन्द्रवन्दितपदा, आर्यरक्षितसूरयः । पुरं दशपुरं जग्मुर्दिशादशकविश्रुताः ॥ २ ॥ उत्थितो मथुरायां च, तथा नास्तिकतार्किकः । आत्मा देवो गुरुर्धर्म्मो, न सन्तीति लपत्ययम् ॥ ३ ॥ मेलितः सकलः संघस्तत्र वादी च कोऽपि न । तदा युगप्रधानत्वे, सूरयश्चार्यरक्षिताः ॥ ४ ॥ संघेन सविधे तेषां, प्रेषितौ श्रवणावुभौ । ताभ्यां च कथिते स्वेन, वृद्धत्वाद्गन्तुमक्षमाः ॥ ५ ॥ ततस्तैः प्रेषितो गोष्ठामाहिलो वादलब्धिमान् । तेन तत्रगमेनाशु, नास्तिकश्च पराजितः ॥ ६ ॥ तत्रैव श्रावकैः सोऽथ, चतुर्मासीं च कारितः । तदा च सूरयो दध्यु-

गणेशं कं करोम्यहम् ? ॥ ७ ॥ व्यूढो गणेशशब्दोऽयं, पुरा श्रीगौदमादिभिः । यः स्थापयत्यपात्रे तं, जानन् पापो महान् स हि
॥ ८ ॥ ततो दुर्बलिकापुष्पमित्रं चित्ते समीक्षते । ज्ञातेये हि न विश्रामो, महतां स्याद् गुणेषु तु॥९ स्वजनानां तु सूरीणां,
भ्रातृत्वात् फल्गुरक्षितः । मातुलत्वान्मतो गोष्ठामाहिलश्च पदं प्रति ॥ १० ॥ सूरयोऽथ समग्रानप्याहूय स्वजनान् निजान् । कुटत्र-
येण दृष्टान्तं, चक्रुः स्वस्य तदग्रतः ॥ ११ ॥ अहं दुर्बलिकापुष्पमित्रे निष्पावकुम्भवत् । रिक्तीभूतः समग्रेण, सूत्रार्थन्यसनेन हि
॥१२॥ तैलकुम्भनिभः फल्गुरक्षिते किंचनस्थितेः । अहं घृतघटो गोष्ठामाहिले तु बहुस्थितेः ॥१३॥ तदेष सूत्रेणार्थेन, युक्तोऽस्याह्
गणेशिता । सर्वैरिति मते सूरिः, पुष्पमित्रमतोऽवदत् ॥१४॥ मद्वृत्त्या वर्त्तितव्यं मे, बन्धौ मम च मातुले । साधुसाध्वीगणेऽन्य
स्मिन्नपि त्वं मद्वदाचर ॥ १५ ॥ तेषामपि ददौ शिक्षां, दृश्योऽयं सदृशो मया । युष्मत्कृताकृते सोढं, मयाऽयं न सहिष्यते
॥ १६ ॥ शिक्षां पक्षद्वये दत्त्वेत्याहारं परिहृत्य च । सुपर्वनिलयं जग्मुरार्यरक्षितसूरयः ॥ १७ ॥ मातुलोऽप्यागतोऽज्ञासीत्, सूरिं
कालगतं तथा । निष्पावघटदृष्टान्तं, ततः पृथगवास्थितः ॥१८॥ पश्चात् तत्रागतः सर्वैरभ्युत्थाय च भाषितः । तिष्ठत्येवं न स त्वि-
च्छन्निजवादित्वगर्वितः ॥ १९ ॥ बहिः स्थितः पुनर्भेदविधानेन विदारितुम् । भेत्तुं नैवाशकत् सूरिवासितं श्रावकादिकम् ॥ २० ॥
इतश्चाचार्यवर्याणां, कुर्वन्तमर्थपौरुषीम् । नाकर्णयत्ययं वक्ति, यूयं शृणुत साधवः ॥ २१ ॥ निष्पावककुटस्यास्य, समीप इति
मत्सरात् । द्व्यर्थं तद्भाषित व्यर्थं, मेनिरे ते निरेनसः ॥ २२ ॥ युग्मम् ॥ तेषूत्थितेषु चावन्ध्यबुद्धिर्विन्ध्योऽनुभाषते । यदा
तदा समेत्येष, सूर्युक्तायुक्तचिन्तया ॥२३॥ पूर्वेऽष्टमे तदा कर्म्मप्रवादाख्ये विचार्यते । जीवस्य कर्मणश्चापि, कथं बन्धो भवेदिति
॥ २४ ॥ त्रिधा कर्म्म सूचीबन्धं, बद्धं स्पृष्टं निकाचितम् । सूचीकलापवद्बद्धं, स्पृष्टं सूच्यः सकिट्टकाः ॥ २५ ॥ निकाचितं

पुनः सूच्यस्तापशिलाऽथ पिण्डिताः । बध्नाति जीवः कर्मैत्थं, द्रागागेण रूपाऽपि च ॥ २६ ॥ परिणाममसुभ्रंश्च, पश्चात् स्पृष्टं करोति तत् । संक्लिष्टपरिणामान्न, विधत्ते स निकाचितम् ॥ २७ ॥ तन्नानुपक्रमं वेद्यमवश्यमुदयागतम् । अवेदितस्य नैवास्य, कथंचिदपि मुच्यते ॥ २८ ॥ श्रुत्वेति वारयामास, गोष्ठामाहिलपंडितः । नैवं भवति पूर्वे च, नास्माभिः श्रुतमीदृशम् ॥ २९ ॥ यद्येवं कर्म बद्धं च, स्पृष्टं वाऽपि निकाचितम् । कदापि भवतो मोक्षस्तर्हि नैव भविष्यति ॥३०॥ विन्ध्यः प्राह कथं तर्हि?, स प्रोचे श्रूयतां ततः । यथा हि कंचुकः कंचुकिनं स्पृशति पूरुषम् ॥ ३१ ॥ नतु बद्धोऽस्ति देहेन, कर्माप्येवं न बन्धयुग् । यस्य जीवप्रदेशैस्तु, कर्म्म बद्धं कथंचन ॥ ३२ ॥ कर्म्मसम्भारविच्छित्तिस्तस्य नैव भविष्यति । इयत् सूरिभिरस्माकमाख्यायि न तु वेत्त्ययम् ॥ ३३ ॥ विशेषकम् ॥ यथाऽन्यथा गृहीतं स्यादित्याशंकासमाकुलः । विन्ध्योऽभिनम्य पप्रच्छ, सूरीन् दूरीकृतामतीन् ॥ ३४ ॥ ते प्रोचुस्ते वचः सत्यं, न गोष्ठामाहिलस्य तु । विन्ध्येनेति समाख्याते, तस्थौ संलीन एव सः ॥ ३५ ॥ प्रस्तावेऽहं पुनः क्षोभयिष्यामीति व्यचिन्तयत् । अन्यदा नवमे पूर्वे, प्रत्याख्यानं विचार्यते ॥ ३६ ॥ तस्मिंश्च साधुसम्बद्धे, त्रिविधं त्रिविधेन हि । प्राणातिपातं प्रत्याख्यामश्याजीवितमितीर्यते ॥ ३७ ॥ स प्रोवाचापसिद्धान्तो, भवत्येवं, कथं पुनः । प्रत्याख्यानं विधातव्यं?, शृणुतेति समाहितः ॥ ३८ ॥ सर्वं प्राणातिपातं प्रत्याख्याम्यपरमाणकम् । त्रिविधं त्रिविधेनेति, प्रत्याख्यातुं हि युज्यते ॥ ३९ ॥ कृते ह्यपरिमाणे स्यादाशंसादोषवर्जनम् । यावज्जीवं तु भणता, परतोऽङ्गीकृतं भवेत् ॥ ४० ॥ प्राणानहं हनिष्यामि, परतो जीवितादिति । तस्मादपरिमाणे तत्, विधातव्यं मुमुक्षुभिः ॥४१॥ कलापकम् ॥ एवं वदन् स विन्ध्येनाबोधि सिद्धान्तयुक्तिभिः । विन्ध्योक्ते पुनरुक्तोऽपि, कृते(कलिः)सर्वैः स्मना व्यधात्॥४२॥ पृष्टा बहुश्रुताश्चान्येऽप्येतदेव भणंति ते । स प्राह वित्थ किं यूयमिग-

दर्हद्भिरीरितम् ॥ ४३ ॥ पुनः पुनर्निषिद्धोऽपि, तस्मिन्नेवं प्रलापिनि । कायोत्सर्गं व्यधुः संघसमवायेन साधवः ॥ ४४ ॥ एत्य शासनदेवेनादेशं दत्तेति भाषिते । तैरूचे व्रज वेगेन, पृच्छ तीर्थकरं तथा ॥ ४५ ॥ पुष्यमित्रादिसंघस्य, किं गोष्ठामाहिलस्य वा । सत्यं वाक्यं ? तया प्रोचेऽनुबलं दत्थ याम्यहम् ॥ ४६ ॥ कायोत्सर्गं ददौ संघो, गत्वाऽपृच्छज्जिनं च सा । स प्राह सत्यवाक् संघो, मिथ्यावागितरः पुनः ॥ ४७ ॥ निह्नवः सप्तमो ह्येष, सा श्रुत्वेति समागता । संघस्तस्या गिरा सर्वः, कायोत्सर्गमपारयत् ॥ ४८ ॥ कथितेऽथार्हदादेशे, निह्नवः प्राह सप्तमः । एषा गन्तुमशक्ता हि, वराक्यल्पार्द्धिका यतः ॥ ४९ ॥ अश्रद्दधानस्तद्वाक्यं, पुष्यमित्रेण भाषितः । यथार्थं प्रतिपद्यस्वान्यथा निर्वासयिष्यसे ॥ ५० ॥ तथाप्यनिच्छन् संघेनोज्झितो द्वादशधाऽपि यः । श्रुतोपध्योर्भक्तपाने चाञ्जलिप्रग्रहेऽपि च ॥ ५१ ॥ दापनायां निकाये चाभ्युत्थाने वन्दनेऽपि च । वैयावृत्त्ये च समवसरणे चासने तथा ॥ ५२ ॥ कथानिमन्त्रणे चापि, सोऽयं द्वादशधा मतः । संभोगः पञ्चकल्पोक्तस्तत्र संघेन वर्जितः ॥५३॥ इत्युक्ता निह्नवाः सप्ताल्पविसंवादकारिणः । अथ बहुविसंवादं, वक्ष्ये बोटिकनिह्नवम् ॥ ५४ ॥

षड्भिर्वर्षशतैर्वर्षैर्वीरे शिवं गते । रथवीरपुरे द्राष्टबोटिकानामजायत ॥ १ ॥ रथवीरपुरोपान्त, उद्याने दीपकाभिधे । आर्यकृष्णाभिधाचार्याः, समवासार्पुरेकदा ॥ २ ॥ तत्र प्राक् शिवभूत्याख्यो, भटः प्रकटपौरुषः । सहस्रमल्ल एकोऽपि, नृपं सेवितुमागतः ॥ ३ ॥ राजा प्राह परीक्ष्याहं, वृत्तिं दास्यामि ते ततः । भूतेष्टादिवसे प्रोक्तो, व्रज प्रेतवनं प्रति ॥ ४ ॥ तत्र रात्रौ बलिं मद्यमुपहारपशुं तथा । मातृणां मन्दिरे गत्वा, देहि व्यादेहि कौतुकम् ॥ ५ ॥ इत्युक्तः स गतस्तत्र, राज्ञा वीराः प्रभाषिताः । अयं शिवारवैर्भाप्यो, भैरवैर्यन्त्रवैर्नवैः ॥ ६ ॥ स तु प्रदाय मातृणां, बलिं प्रेतवने स्थितः । पशुं खादति तत्रान्ये, भापयन्ति

तमारवैः ॥ ७ ॥ रोमोद्भेदोऽपि ततस्तस्य नैवास्ति वेगतः । कथितेऽन्यैश्च राजन्यो, वृत्तिं तदुचितां ददौ ॥ ८ ॥ अन्यदा नृपति-
यौधानादिशन्मथुराग्रहे । गत्वा सर्वबलेनैते, तदासन्ना व्यचिन्तयन् ॥ ९ ॥ कतरा मथुरा ग्राह्या, नेति पृष्टो नृपः पुरा । दुर्विज्ञप्यं
स्वभावेन, तत् किं कुर्मोऽधुना वयम्? ॥१०॥ इति चिन्तयतां तेषां, शिवभूतिः समागतः । प्राह चिन्तां प्रपन्नाः किं?, तेऽप्याख्यॅ-
स्तस्य तत्तथा ॥११॥ स प्राह तर्हि गृह्णीमः, समकालमुभे अपि । ते प्राहुर्द्वाभ्यां भागाभ्यां, नादातुं शक्नुमो वयम् ॥१२॥ एकैकस्याः
समादाने, कालश्च प्रचुरो लगेत् । सहस्रमल्लः प्रोवाच, दुर्जया मेऽप्यैतां पुरीम् ॥ १३ ॥ गृहाण पाण्डुमथुरामित्युक्तः स प्रधा-
वितः । प्रत्यन्तानि गृहीत्वा च, मथुरां स्वकरेऽकरोत् ॥१४॥ विज्ञप्तोऽथ नृपस्तुष्टः, प्राह किं ते ददाम्यहम्? । स च प्राह यदग्राहि,
तदग्राहि निजेच्छया ॥ १५ ॥ एवमस्त्विति राज्ञोक्ते, स स्वैरं नगरे भ्रमन् । एति नो वा निशीथेऽपि, तद्भार्या तु पवित्रिता ॥१६॥
न भुङ्क्ते न च शेतेऽसौ, शिवभूतावनागते । श्वश्रूपृष्टाऽन्यदा प्राह, 'खेदमेदस्विनि हृदि ॥ १७ ॥ युष्माकं तनयो नित्यमर्द्धरात्रे
समेति हि । जागर्म्मि क्षुधिता चास्मि, तां विनाऽम्ब ! करोमि किम्? ॥ १८ ॥ सोचे स्वपिहि वत्से ! त्वमद्य जागर्म्यहं यथा ।
तयेत्युक्ते वधूः सुप्ता, श्वश्रूः पुनरजागरीत् ॥ १९ ॥ द्वारं बद्ध्वा दृढं यावज्जननी चास्ति जाग्रती । कपाटकटके तावत् , खटत्कारं
सुतो व्यधात् ॥ २० ॥ निर्भर्त्स्य स तया भूरि, भणितो व्रज तत्र हि । उद्घाटानि कपाटानि, यत्र स्युरियति क्षणे ॥ २१ ॥
तयेत्युक्तो जगामैष, भवितव्यनियोगतः । आर्यकृष्णाख्यसूरीणामुद्घाटद्वारमाश्रयम् ॥ २२ ॥ नत्वा चोवाच भगवन्!, प्रव्राजयसि
मामिति ? । तेष्वनिच्छत्सु केशानामुद्धारं विदधे स्वयम् ॥ २३ ॥ पश्चान्मुद्रां समर्प्यास्य, विहारो विदधे च तैः । कालेन कियताऽ-
प्येते, पुनस्तत्पुरमागमन् ॥ २४ ॥ राज्ञा ज्ञात्वा तमाकार्य, ददे तं रत्नकम्बलः । आगतः सूरिभिः प्रोचे, किमरे ग्राह्ययं

त्वया? ॥ २५ ॥ यतिनां हि किमेतेन, बहुमूल्येन वस्तुना ?। इत्युक्त्वा तमनापृच्छ्य, निषद्यां गुरवो व्यधुः ॥ २६ ॥ ततः कषायिते तस्मिन्, पाशितेऽवगुणैर्दृढैः । तापाऽग्निनाऽवगाढेऽपि, गुरुरङ्गे न वाऽलगत् ॥ २७ ॥ अन्यदा वाचनाकाले, वर्ण्यन्ते जिनकल्पिकाः । द्विविधास्ते पाणिपात्राः, पतद्ग्रहधरा अपि ॥ २८ ॥ तेऽपि द्विधा सवस्त्रत्वविवस्त्रत्वविभेदतः । शिवभूतिरवोचत्, कल्पोऽयं क्रियते न किम्? ॥ २९ ॥ व्यवच्छिन्नोऽयमिति तैः, प्रोक्ते स प्राह नो मम । व्युच्छिद्यतेऽसौ तत्कार्यः, परलोकमभीप्सुना ॥ ३० ॥ सर्वथा श्रेयसी साधोर्निष्परिग्रहता मता । ते प्राहुरेतद्धर्मोपकरणं न परिग्रहः ॥ ३१ ॥ तथा हि बहवः सन्ति, दुर्दर्शा जन्तवो दृशाम् । तेभ्यः स्मृतं दयार्थं तु, रजोहरणधारणम् ॥ ३२ ॥ आसने शयने स्थाने, निक्षेपे ग्रहणे तथा । गात्रसंकोचने चेष्टं, तेन पूर्वं प्रमार्जनं ॥ ३३ ॥ तथा सम्पातिमाः सत्त्वाः, सूक्ष्माश्च व्यापिनोऽपरे । तेषां रक्षानिमित्तं च, विज्ञेया मुखवस्त्रिका ॥ ३४ ॥ भवन्ति जन्तवो यस्माद्, भक्तपानेषु केषुचित् । तस्मात्तेषां परीक्षार्थं, पात्रग्रहणमिष्यते ॥ ३५ ॥ सम्यक्त्वज्ञानशीलानि, तपश्चेतीह सिद्धये । तेषामुपग्रहार्थेऽदः, स्मृतं चीवरधारणम् ॥ ३६ ॥ शीतवातातपैर्दंशैर्मशकैश्चापि खेदितः । मा सम्यक्त्वादिषु ध्यानं, मा सम्यक् संविधास्यति ॥ ३७ ॥ निक्षेपे ग्रहणे यत् स्यात्, क्षुद्रप्राणिविनाशनम् । ज्ञानध्यानोपघातो वा, महादोषस्तदैव तु ॥ ३८ ॥ सहिष्णुर्यस्तु नो धर्मबाधकस्ताद्विनाऽपि हि । तस्यैतद्वस्तु नान्यस्य, यदुक्तं पूर्वसूरिभिः ॥ ३९ ॥ य एतान् वर्जयेद्दोषान्, धर्मोपकरणादृते । तस्य त्वग्रहणं युक्तं, यः स्याज्जिन इव प्रभुः ॥ ४० ॥ तद्वज्रर्षभनाराचे, भवेत् संहनने पुनः। इति तैरुच्यमानोऽपि, त्यक्त्वा वस्त्राण्ययं गतः ॥ ४१ ॥ उत्तराख्या स्वसा तत्र, तं वंदितुमुपागता। तं वीक्ष्य सर्वमुज्झित्वा, साऽपि तत्पृष्ठतोऽलगत् ॥ ४२ ॥ गणिका वीक्ष्य तां दध्यौ, जनो मा नो विरज्यतु । इति पोतमुरस्य-

उपगतेऽखिलम्
स्याः, राऽवशाक्रिक्रति स्म सा ॥४३॥ दत्तं देवतया पोतमिति सा धन्मुवाक्यतः । तऽग्राह तथाऽद्यापि, तदिदं
॥ ४४ ॥ तस्य शिष्यावभूतां द्वौ, कौण्डिन्यः कोट्टवीरकः । इत्थं परम्पराऽऽगतमिदं प्रस्फुरितं ततः ॥ ४५ ॥ इत्थं कोऽपि
समाराध्यापि हि बोधिं सुदुर्लभाम् । मिथ्यात्वस्योदयाद् दूरं, नाशयन्ति निकर्म्मतः ॥ ४६ ॥ इत्थं बोधिमवाप्य केचन परि-
व्रज्यामपि श्रेयसीं, श्रीमत्तीर्थकरस्य पश्यत महामोहान्धताबाधिताः । आस्फाल्य प्रपतन्ति हन्त वितथा वाचः किरन्तस्तथा,
संसारावटसङ्कटोद्धृतिविधिस्तेषां दुरापो यथा ॥ ४७ ॥ इत्ययस्यां विवृतौ श्रीमत्प्रद्युम्नस्य कवेः कृतौ । व्रतदुर्लभताद्वारं,
तृतीयं पर्यपूर्यत ॥ ४८ ॥ अथ प्रव्रज्यास्वरूपप्रकाशनं गाथासप्तकेनाह—

सा पुण दुप्परिपल्ला पुरिसाण सया विवेगरहियाणं । वोढव्वाइं जम्हा पंचेव महव्वयभराइं ॥ ३ ॥

'से'ति पूर्वोक्तगाथोत्तरार्द्धकथिता पुनः प्रव्रज्या दुष्परिपाल्या, 'पुरिसाणं' पुरुषाणां सदा, कथंभूतानां?—'विवेकर-
हितानां' निर्विवेकानां, न तु सविवेकानां, कथं निर्विवेकानां दुष्परिपाल्येति हेतुमाह-वोढव्यानि यस्मात् पञ्चमहाव्रतव्रता-
न्येव, न त्वणुव्रतानि, तानि हि त्रसस्थावरसूक्ष्मबादरजन्तुजातविघातपरित्राणरूपप्रथमव्रतक्रोधलोभहास्यभयैरपिअस-
त्याभाषणरूपद्वितीयव्रतात्पबहुस्थूलाणुसचित्ताचित्तपरिवर्जनरूपतृतीयव्रतादिव्यौदारिककामात्रिविधात्रिविधपरित्यागरूपतुर्यव्रतस्थूलसू-
क्ष्माल्पबहुसचित्ताचित्तपरिग्रहत्यागरूपपञ्चमहाव्रतस्वरूपाणि निर्विवेकैः कथंभूयन्त इति॥ द्वितीयगाथया प्रव्रज्यादुष्करतां वक्ति-

राईभोयणविरई निम्ममत्तं सयऽवि देहम्मि । पिंडो उग्गमउप्पायणेसणाए सया सुद्धो ॥ ४ ॥

रात्रिभोजनविरतिः, कार्येति शेषः, उच्यते प्रव्राजितस्य हि चतुर्भंगकप्रोक्तस्यापि निशाभोजनस्य निषेधः, तद्यथा--"राओ गहियं राओ भुंजइ १ राओ गहियं दिवा भुंजइ २ दिवा गहियं राओ भुंजइ ३ दिवा गहियं दिवा भुंजइ ४, रात्रौ गृहीतं रात्रौ भुनक्ति १ दिवा गृहीतं रात्रौ भुनक्ति २ इति द्वौ भङ्गकौ सुप्रतिपाद्यौ, रात्रौ गृहीतं दिवा भुनक्ति, अयं तु रात्रौ पिण्ड-ग्रहणानधिकारात् परिहार्यः, दिवा गृहीतं दिवा भुनक्तीत्यस्मिन्नर्वाग्दिनगृहीते रात्रौ पर्युषिते द्वितीयदिनपरिभोगेऽयं भवति, सोऽपि रजनीभोजनेऽन्तर्भवति, साधूनां सन्निधिपरिहारात्, इति चतुर्भङ्गकप्रोक्ता निषेधा अपि निर्विवेकानां दुष्कराः, अन्यतीर्थिकैरप्युक्तं-नोदकमपि पातव्यं, रात्रावत्र युधिष्ठिर ! । तपस्विना विशेषेण, गृहिणाऽपि विवेकिना ॥ १ ॥ निर्ममत्वं स्वदेहेऽपि, आस्तां धनकनककलत्रपुत्रमित्रादिके, इदमपि निर्विवेकानां दुष्करं, 'पिण्डो उग्गमउप्पायणेसणाए सया सुद्धो 'पिण्डो' भिक्षारूपः उद्गमदोषउत्पादनादोषएषणादोषवर्जितो, ग्राह्य इति शेषः, एतावता द्विचत्वारिंशतो दोषान् सूचयति, ते चामी—

आहाकम्मु १ देसिय २ पूइयकम्मे ३ य मीसजाए४ य । ठवणा५ पाहुडियाए ६ पाओअर७ कीय८ पामिच्चे९॥१॥

परियट्टिए १० अभिहडे११ उब्भिन्ने१२ मालोहडे १३ य अच्छिज्जे १४। अणिसट्ठ १५ ऽज्झोयरए १६ सोलस पिण्डुग्गमे दोसा॥२॥ आधानं आधा-दातुः संकल्पस्तया कर्म्म-पाकादिक्रियेत्याधाकर्म्म, यद्वा आधाय-विकल्प्य कर्म्म निरुक्त-वशात् यकारलोपे आधाकर्म्म, तद्योगाद्भक्ताद्यपि तथोच्यते, एवमन्यत्रापि१, उद्देशनमुद्देशो-यावदर्थिकादिप्रणिधानं तेन निर्वृत्तं तत्-प्रयोजनं वेत्यौद्देशिकं भक्तादि, दोषदोषवतोरभेदोपचारात्, एवमन्यत्रापि २, शुद्धस्यापि अशुद्धभक्तादिमीलनात् पूतेः-अपवित्रस्य कर्म्म-करणं इति पूतिकर्म्म३, मिश्रेण-गृहिसाध्वादिप्रणिधानलक्षणेन भावेन जातं-पाकादिभावमुपगतं-मिश्रजातं ४, स्थाप्यते-साधु-

यकादिकं तदिवोपचारसामर्थ्यात् यका सा प्राभृतिका
दानाय कंचित् कालं यावत् निधीयते यत्तत् स्थापना भक्ताद्येव ५, प्राभृतं--कौशलिकं तदिवोपचारसामर्थ्यात् यका सा प्राभृतिका
६, प्रादुः-प्राकाश्यं तस्य करणं-साध्वर्थं विधानं प्रादुष्कारः तद्विशेषितं भक्ताद्यपि प्रादुष्कार एव उच्यते ७ क्रीयते स्म साध्वर्थ-
मर्थादिना गृह्यते स्मेति क्रीतम् ८, अपमित्यं-साध्वर्थं गृहीतमुच्छिन्नमुद्यतकमितियावत् ९, परिवर्त्तितं-साध्वर्थं कृतपरावर्त्तं १०,
अभिहृतं-साध्वर्थं स्थानान्तरादानीतं अभ्याहृतमित्यर्थः ११, उद्भिन्नं--साध्वर्थं कुशूलकुतपादि उद्भिद्य ददाति १२, मालादेः साध्व-
र्थमानीतं मालोपहृतम् १३, आच्छिद्य अनिच्छतोऽपि पुत्रादेः सकाशादादाय साधुभ्यो ददाति १४, अनिसृष्टं स्वामिभिरननुज्ञातं
१५,अधि इति आधिक्येन पूरणं-स्वार्थं दत्ताद्रहणादेर्भरणमध्यवपूरक इति १६॥ तत्र भक्ताधाकर्म्मसम्भवप्रदर्शकमिदमुदाहरणं—
ग्राम एकोऽस्ति विस्तीर्णः, कुलीनकुलसंकुलः। कंगुकोद्रवशालादिभिक्षाप्राचुर्यसुन्दरः ॥ १ ॥ अस्त्रीषंढपशुश्वोऽद्रुमापोपाश्र-
याश्रयः। व्याघातरहिताध्यायिनिर्वाहावनिसंयुतः ॥ २ ॥ तत्रास्ति श्रावकश्चैको, भक्तिशक्तिसमन्वितः। साधवस्तत्र चायान्ति,
क्षेत्रप्रेक्षणकारणात् ॥ ३ ॥ आचार्याद्युचितस्तत्र, नास्ति शाल्योदनः पुनः। तेन तिष्ठन्ति न श्राद्धाभ्यर्थिता अपि साधवः ॥ ४ ॥
केष्वप्येत्यान्यदा मत्वा, क्षेत्रं चानुचितं गुरोः। प्रस्थितेषु मुनिः पृष्ट, एकः श्राद्धेन तेन तु ॥ ५ ॥ किं युष्मभ्यमिदं क्षेत्रमुचितं
रुचितं न वा ?। मुनिस्तदार्जवादूचे, क्षेत्रं गच्छोचितं ह्यदः ॥ ६ ॥ गुरूणामुचितः किन्तु, शालिकूरः क्वचिन्न हि। गतेषु तेषु
तु श्राद्धो, दध्यौ श्रद्धापरायणः ॥७॥ शालिबीजान्युपक्षेत्रेषूप्त्वा भूरि प्रवृद्ध्य च। वितीर्ये मुनिक्षेत्रं च, करोमि सुकृतश्रियं ॥८॥
ध्यात्वेति वापितेष्वेषु, मूढका बहवोऽभवन्। अन्यदा व्रतिनश्चेयुः, श्राद्धो दध्यौ च चेतसि ॥ ९ ॥ शालिकूरं ददाम्येषामान-
यन्ति यथा गुरून्। आधाकर्म्मिकशङ्कां च, न कुर्वन्ति स्वमानसे ॥ १० ॥ ध्यात्वेति यतिषु श्रद्धाशाली शालीनयं बहून्। ददौ

स्वजनवर्गाय, तमुवाच च सादरम् ॥ ११ ॥ भक्षयेत स्वयं यूयं, दद्यात च मुनिव्रजे । प्रतिपद्येति ते पाकं, विदधुर्मुदिताशयाः ॥१२॥ शालिपाकः स वित्तोऽतः, पाके तेषां च संकथाः। शृण्वन्ति भिक्षवो भिक्षाकृते भ्राम्यन्त ईदृशीः ॥ १३ ॥ तत्रैको बालको वक्ति, त एते मुनयो ननु । शालिकूरः कृते येषां, परिपक्वो गृहे गृहे ॥ १४ ॥ थेरो वदत्ययं लब्धोऽमीभिर्धिष्ण्ये ममापि हि । अन्यश्च भाषतेऽमीषां, दास्याम्यहमपि स्फुटम् ॥ १५ ॥ अन्यश्च मातरं प्रोचे, मुनिभ्यो वितरौदनम् । अभाषतान्यः कोऽप्यत्र, प्रस्तावापतितं ह्यदः ॥१६॥ अभक्ते शालिभक्तं यद्, दृष्टान्तश्चात्र लौकिकः । यथा काऽपि वशा ब्रूते, मृत्युः परयुर्ममाभवत् ॥१७॥ देवरस्य मदीयस्य, गृहिण्या अपि दैवतः । कालानुरूपमेतच्च, जातं कूरोऽपि तादृशम् ॥ १८ ॥ तथाऽन्यो मातरं वक्ति, देहि शाल्युदकं मम । आचाममपरोऽम्लं च, पर इत्यादि भाषितम् ॥ १९ ॥ बालानां मुनयः श्रुत्वा, पृच्छंस्ते तत् किमीदृशम्? । बालकैरार्जवात्तेषां, कथितं च यथातथम् ॥ २० ॥ तज्जनन्यादिकं पृष्टं, वीक्षते च परस्परम् । मत्वेति मुनयस्त्वेषां, गृहाणां परिहारतः ॥ २१ ॥ अपरापरगेहेषु, भिक्षाहेतोर्भ्रमन्ति च । अनिर्वाहे पुनर्यान्ति, ग्रामे क्वाप्यदवीयसि ॥ २२ ॥ मत्वेति साधुभिस्त्याज्यमाधाकर्मिकमादरात् । विज्ञैर्विज्ञातसर्वज्ञवचनैर्मोक्षमिच्छुभिः ॥२४॥ किञ्च दुर्भिक्षग्लानाद्यवस्थायामाधाकर्म्मापि दायकस्य ग्राहकस्य च हितमेव, यदुक्तम्—"संथरणंमि असुद्धं दुण्हवि गिण्हंतदिंतयाणऽहियं । आउरदिट्ठंतेणं तं चेव हियं असंथरणे ॥१॥" पञ्चमाङ्गेऽष्टमशतषष्ठोद्देशकेऽप्युक्तम्—"समणोवासगस्स णं भंते ! तहारूवं समणं वा माहणं वा फासुएणं एसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाहेमाणस्स किं कज्जइ?, गोयमा ! एगंतसो से निज्जरा कज्जइ, नत्थि य से पावे कम्मे किज्जइ १ । समणोवासगस्स णं भंते! तहारूवं समणं वा माहणं वा अफासुएणं अणेसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणस्स किं कज्जइ?,

गोयमा! बहुतरिया से निज्जरा कज्जइ, अप्पतराए से पावे कम्मे कज्जइ "त्ति२, तृतीयसूत्रे पुनरेवम्—" समणोवासगस्स णं भंते!
तहारूवं असंजयअविरयअप्पडिहयपच्चक्खायपावकम्मं फासुएण अफासुएण वा एसणिज्जेण अणेसणिज्जेण वा पडिलाभेमाणस्स किं
कज्जइ?, गोयमा! एगंतसो पावे कम्मे से कज्जइ, नत्थि य से कावि निज्जरा कज्जइत्ति"।॥ अथौद्देशिकं, तच्च द्विधा-ओघतो विभा-
गतश्च, तत्रौघतः कतिचिद्भिक्षा यस्य कस्यापि दास्यामीति दातृसङ्कल्पः, विभागतस्तु उद्दिष्टं कृतं कर्म्म चेति त्रिधा, एकैकं च
यावदर्थिकपाषण्डिश्रमणनिर्ग्रन्थौद्देशिकभेदाच्चतुर्द्धा, जावंतियमुद्देसं पासंडीणं भवे समुद्देसं। समणाणं आएसं निग्गंथाणं समाएसं
॥ १ ॥" तत्रोद्दिष्टं विवाहादौ स्वजनादिभुक्तोद्धारितं गृहस्थेन यद्दातुमिष्टं, तदेव दध्यादिमिश्रितं कृतम् २, तदेवाग्निपाकादि-
संस्कृतं कर्म्म ३ इति, तच्चतुर्णामपि दात्रा दित्सितं, इत्थमौद्देशिकं द्वादशधाऽपि ज्ञात्वा साधुभिर्वर्जनीयमिति २ ॥ अथ पूतिकर्म्म,
यथा अपवित्रवस्तुना मिलितं पवित्रमप्यपवित्रं भवति, तथोद्गमशुद्धमप्यन्नं आधाकर्म्मलवेनाप्यपवित्रं भवतीति मत्वा परिहार्यं ३॥
अथ गृहस्थेन आत्मनो यावदर्थिकादीनां च मिश्रं यत्पक्वं तन्मिश्रजातं ४। स्थापना चुल्ल्यां वा स्थाल्यां वा साधुकृते स्थापयतो
गृहस्थस्य स्वस्थानस्थापना सुस्थिते वा छन्नके वा साध्वर्थं स्थापयतो दातुः परस्थानस्थापना, एषाऽपि ज्ञात्वा परिहार्या ५।
अथ प्राभृतिका स्वयोगकालावधेः परतोऽप्युत्सृज्य कर्म्म कुर्वतो गृहस्थस्य भवति, सा च द्विधा-सूक्ष्मा बादरा च, तत्र सूक्ष्मा काऽपि
कर्त्तयन्ती पुत्रादिना भोजनं याचिता तवापि दास्यामीति वक्ति करोति च, अथवा साधुदानार्थमुत्थिता तमपि भोजयतीति,
बादरा तु साधुष्वागतेषु कालान्तरभाविनं विवाहादिकं गृहस्थस्तदैव कुरुते, अथवा साध्वागमनं प्रतीक्ष्य कुरुते सा बादरा इति
मत्वा द्विधाऽपि वर्ज्या ६॥ अथ प्रादुष्करणं-प्रकटीकरणं, तच्च यतिनिमित्तं बहिश्चुल्ल्यादि कुर्वतो भवति, अथवा सतिमिरगवा-

क्षोद्योताय मणिदीपादिना प्रकाशयतस्तदविवेकिनो दातुर्भवतीति ७॥ अथ क्रीतं, तच्चतुर्द्धा-स्वद्रव्यभावाभ्यां परद्रव्यभावाभ्यां च, तत्र स्वद्रव्येण चूर्णादिना स्वभावेन कथाकथनादिना परद्रव्येण रूपकादिना परभावेन शिल्पादिना तथाविधभक्तमंखादिवत्, मंखः-चित्रफलकोपजीवी भिक्षाकविशेषः, परभावक्रीते सम्प्रदायो यथा-मङ्खः कोऽप्येकदा शय्यातरः साधून् न्यमन्त्रयत् । भक्तपानादिना भक्तस्तत्पिण्डस्तैस्तु नाददे ॥ १ ॥ तेनाननुगृहीतेन, नात्तोऽन्धः शय्यया च तैः । दित्सुना मुनयः पृष्टा, गतप्राये घनागमे ॥२॥ विहारो भवतां भावी, कतमस्यां दिशि प्रभो ! । अमुकस्यामिति प्रोक्ते, तैः स तत्राग्रतो गतः ॥ ३ ॥ विज्ञानेन निजेनैष, जनं परिचितं व्यधात् । तद्दत्तं नाददे कार्ये, ग्रहीष्यामीति तान् वदन् ॥ ४ ॥ मुनिष्वथ समेतेषु, घृतक्षीरादिकं बहु । तत्तद्गृहेभ्यो याचित्वा, मेलयित्वा च दत्तवान् ॥५॥ क्रीतं च परभावेनाभ्याहृतं स्थापना तथा । इति दोषत्रयं तत्र, सन्निपात इवाभवत् ॥ ६ ॥ ८॥ अथ प्रामित्यं साध्वर्थमुपच्छिन्नमुद्यतकं गृहीत्वा यद्ददाति तद् दुष्टं, यतिभगिन्युद्धारिततैलदृष्टान्तेन, स चायम्—

पुरा कौशलदेशस्य, कोऽप्यभूत्कुलपुत्रकः । स साधुधर्म्ममाकर्ण्य, ससंवेगोऽग्रहीद् व्रतम् ॥ १ ॥ क्रियाकलापे सूत्रे चार्थे च निष्णातधीरसौ । क्रमेण स्वजनान् द्रष्टुं, गुरूनापृच्छय यातवान् ॥ २ ॥ स बहिः सन्निवेशस्यापृच्छदेकं च मानवम् । यन्मे स्वजन-वर्गान्तः, कस्को जीवति सम्प्रति ? ॥ ३ ॥ स जगादाथ भावत्कमुच्छिन्नं सकलं कुलम् । स्वसैका विद्यते जीवन्मृता दारिद्र्यविद्रुता ॥ ४ ॥ स मत्वेति गतस्तत्र, तं वीक्ष्य मुमुदे स्वसा । सोदरश्च स साधुश्च, सुवर्णे हि ससौरभम् ॥ ५ ॥ तं नत्वा पर्युपास्याथ, तस्मै पाकं प्रकुर्वती । निषिद्धा साधुना दध्यौ, नेत्थं गृह्णात्ययं मुनिः ॥ ६ ॥ तैलकर्षं ततो वृद्धया, गृहीत्वाऽस्मै ददाम्यहम् । तत् स्वरूपमजानानः, कल्प्यमित्यग्रहीन्मुनिः ॥ ७ ॥ अन्यत्र विहृते साधौ, तैलं वृद्धयाऽतिभूर्यभूत् । सा दातुमसमर्थाऽस्थाद्दासी वार्धु-

पिकाश्रये ॥ ८ ॥ कालान्तरे समायातो, जानाति स्म पुनर्जनात् । तद्दासत्वव्यतिकरं, तस्मै संदिशति स्म च ॥९॥ यत् खेदो न त्वया कार्यः, स्तोककालान्तराऽपि हि । दासत्वान्मोचयामीति, श्रुत्वा साऽथ मुदं दधौ ॥ १० ॥ स भिक्षुरथ भिक्षार्थी, जामिस्वामिगृहेऽविशत् । तत्र पानीयसंसृष्टभिक्षां च प्रत्यपेधयत् ॥११॥ गृहस्वाम्यथ पप्रच्छ, को दोषोऽत्र ? मुनिर्जगौ । सिद्धान्तभापितान् दोपानत्रामुत्र च दुःखदान् ॥१२॥ श्रुत्वेति सादरं प्राह, गृही क्व वसतिस्तव ? । नास्त्यद्यापीति साधूक्ते, सोऽदात्तत्र च संस्थितः ॥ १३ ॥ नित्यं धर्म्मकथाऽऽख्यानात्, तेन स श्रावकीकृतः । वर्षारात्रचतुर्मास्यां, विवेककलितोऽवसत् ॥ १४ ॥ व्रतं गृह्णन् जनः प्रेर्यो, न निवार्यो मयेदृशम् । श्रीकृष्णाख्यानकं तस्य, मनस्यातितरां स्थितम् ॥ १५ ॥ जग्राहाभिग्रहं सोऽपि, यः कश्चन कुलान्मम । आदास्यति परिव्रज्यां, न स धार्यो मया ध्रुवम् ॥ १६ ॥ अन्यदा तनयस्तस्य, प्रव्रज्यार्थमुपस्थितः । न निषिद्धश्च गृहिणा, साऽथ जामिर्मुनेरपि ॥१७॥ समुद्यता परिव्रज्याकृतेऽमोचि च तेन सा । जग्राह च परिव्रज्यां, सोदर्यस्य समीपतः ॥१८॥एवंविधाः कियन्तः स्युर्ज्ञानिनो मुनयः परे । तस्मादित्यवगत्योच्चैः, प्रामित्यं वर्जयेन्मुनिः॥१९॥९॥ अथ परिवर्त्तितं, तच्च साधुगौरवाय आत्मलाघवा(पनोदा)य वा दुर्गन्धघृतेन सुगन्धि कंगुकोद्रवादिना शाल्योदनादि साध्वर्थं परावृत्त्य साधवे ददाति, तदपि वणिग्द्वयदृष्टान्तेन हेयमिति, तद्दृष्टान्तश्चायम्-श्रीवसन्तपुरे पूर्वं, वणिजौ द्वौ बभूवतुः । नामतो देवदत्तश्च, धनदत्तश्च विश्रुतौ ॥ १ ॥ देवदत्तस्वसा लक्ष्मीर्द्धनदत्तेन तत्स्वसा । बन्धुमत्यभिधा व्यूढा, देवदत्तेन च क्रमात् ॥ २ ॥ अन्यदा देवदत्तस्य, भ्राता जाताशयो व्रते । विपाककटुकान् कामभोगान् त्यक्त्वाऽभवद् व्रती ॥ ३ ॥ स च प्रव्रजितः साधुर्विहारक्रमयोगतः । वसन्तपुरमायासीदुद्यच्छन् व्रतिकर्म्मसु ॥ ४ ॥ सूत्रितोदितसूत्रार्थकृत्ये भिक्षाक्षणे मुनिः । जगाम भगिनीलक्ष्मीधाम सद्धर्म्मधाम सः ॥ ५ ॥

तत्र स्वसा स लक्ष्म्या निर्लक्ष्मीकेन धनं विना । गृहेप्रविष्टमात्रोऽपि, दृष्टः सानन्दचेतसा ॥ ६ ॥ चिन्तितं च तया सोऽयमेको भ्राता परं यतिः । अन्यदाऽभ्यागतस्तस्मान्महतीं भक्तिमर्हति ॥७॥ गृहे कोद्रव एवास्ति, मम दारिद्र्यविद्रवात् । तद्बान्धवगृहाद् शालिराशिस्तत् शालिमानये ॥ ८ ॥ ततः कोद्रवकूरस्य, परावृत्त्याग्रजौकसः । शालिकूरं समानीय, मुनयेऽदत्त सा मुदा ॥ ९ ॥ इतश्च भोक्तुमायातो, देवदत्तो निजापणात् । ददे कोद्रवकूरं तं, बन्धुमत्येति भाषितः ॥ १० ॥ श्रुत्वेत्यज्ञातवृत्तान्तः, स सदा शालिकूरभुक् । कोपानलसमुल्लासात्ताडयामास तां भृशम् ॥११॥ सोचे कोद्रवकूरेण, शालिकूरं तव स्वसा । परिवृत्याग्रहीत् तन्मां, किं ताडयसि पीडयन्?॥१२॥ ततः स्थितोऽसौ मौनेन, धनदत्तोऽपि तं तथा । ज्ञात्वा व्यतिकरं दूरमध्यायद् ध्याममानसः ॥१३॥ समानीय परगृहादनयाऽपनयात्मना । शालिकूरं प्रयच्छंत्याऽतीव मे लघुता कृता ॥ १४ ॥ इत्युल्लसितकोपेन, पापेऽहं किं लघूकृतः ? । एवं जनान्तस्तेनेति, ब्रुवता महता श्रिया ॥ १५ ॥ विज्ञाय तत्तथा साधुर्धर्म्माख्यानपुरःसरम् । तानि सर्वाणि सम्बोध्य, व्रतमग्राहयत् सुधीः ॥ १६ ॥ एवंविधाः कियन्तः स्युः, स्वपरोत्तारणक्षमाः ? । तस्मात् सर्वप्रकारेण, न ग्राह्यं परिवर्त्तितम् ॥ १७ ॥१०॥ अथाभ्याहृतम्, तच्च गृहिणा साध्वर्थं स्वग्रामात् परग्रामाद्वा आनीतं अशनाद्यभ्याहृतमुच्यते, तत् प्रकटं गुप्तं वा नादेयं, यत्तु साधुद्वये भिक्षां याते एकः साधुरेकत्र गृहे उपयुक्तो भिक्षां गृह्णाति, द्वितीयस्तु गृहद्वये पङ्क्तिस्थे उपयोगं दत्ते तदुपयोगशुद्धं अभ्याहृतं हस्तशतादाचीर्णं, परतस्तु नेति ११ ॥ अथोद्भिन्नं–तच्च छगणजतुमृत्तिकादिलिप्तं कोष्ठककुतुपादिकं यत्तदुद्भिद्य साध्वर्थं यदि गृही दत्ते ततो न ग्राह्यमिति१२॥ अथ मालापहृतम्–तच्च ऊर्ध्वे अधस्तिर्यग्दिक्षु च, शिक्यनागदन्तादिकाद्वा यदानीतं, तच्च बहुदोषत्वान्नादेयं, अत्रोदाहरणम्–इहैव जम्बूद्वीपेऽस्ति, भरतक्षेत्रमण्डनम् । पुरं जयपुरं नाम, धाम

देशागतश्रियाम् ॥ १ ॥ तत्रास्ति यक्षदत्ताख्यो, गृही प्रकृतिभद्रकः । तस्यास्ति वसुमत्याख्या, सुमत्या कलिता प्रिया ॥ २ ॥
तत्र गोचरचर्यायां, गुणरत्नाकरो मुनिः । विहरन् गृहमायातो, धर्म्मलाभं च दत्तवान् ॥ ३ ॥ उत्थाय वसुमत्यन्नं, शिक्याद्दातुं
समुद्यता । अकल्प्यत्वान्निषेध्यैनां, निर्जगाम महामुनिः ॥४॥ ततश्च सौगतः कश्चित्, प्राविशत्तस्य वेश्मनि । आगतो यक्षदत्तस्तं,
पृच्छति स्म सविस्मयः ॥ ५ ॥ अनेन मुनिना किं न, भिक्षा नो जगृहे गृहे ? । पापोपहतबुद्धिः स, बौद्धः प्रोवाच तं प्रति ॥६॥
अमी अदत्तदाना दिकूचराः कायेन केवलम् । अमीषां शास्त्रकारेण, कण्ठ एव न मोटितः ॥ ७ ॥ यक्षदत्तस्ततो मुक्त्वा, तमसम्बद्ध-
भाषिणम् । स्वप्रियां प्रेरयांचक्रे, भिक्षादानाय भिक्षवे ॥ ८ ॥ यावद्वसुमती तस्यादेशात् शिक्यस्थकुम्भके । एकं मोदकमादातुं,
करं क्षिप्तवती किल ॥ ९ ॥ तावन्मोदकसौगन्ध्यात्, प्रविष्टेनाहिना पुरा । करे वसुमती दष्टाऽपतद्वसुमतीतले ॥ १० ॥ आकुलो
यक्षदत्तोऽभूद्वैद्युर्विषभिषग्वराः । तैर्मन्त्रभेषजाद्येन, सा कथंचन जीविता ॥ ११ ॥ परेद्यवि समायाते, तत्र साधौ जगाद तम् ।
यक्षदत्तस्तत्रभवन्!, जानताऽपि तदा त्वया ॥ १२ ॥ कस्माच्छिक्यस्थितोऽकस्मादस्माकं न भुजङ्गमः । कृपालो ! कथयांचक्रे?,
वक्रेतराधियापि हि॥१३॥ युग्मम् ॥मुनिः प्रोवाच न मया,ज्ञातस्तत्र भुजङ्गमः । किन्त्वस्माकं भगवता, केवलज्ञानिनाऽर्हता ॥१४॥
मालापहृताभिक्षाया, ग्रहणं प्रत्यषिध्यत । प्रत्यवायग्रुतमितिकृत्वा कालत्रयीविदा ॥ युग्मम् ॥ १५ ॥ धर्म्मश्च कथितस्तं चाकर्ण्य तौ
भावितात्मकौ । विशुद्धश्रावकीकृत्य,स्वस्थानमगमन्मुनिः॥१६॥अस्य च बहुदोषत्वादन्या अपि कथा कथ्यते-एकः किलैकदा साधुः,
प्राविक्षद्भैक्ष्यहेतवे । गृहं गृहपतेः कस्याप्यागमच्च सदाक्रमः ॥ १ ॥ तदीयगृहिणीं भिक्षां, ददतीं वासनावशात् । निश्रेणि-
मालापहृतां, प्रतिषिध्य स निर्गतः ॥ २ ॥ परिव्राजक एकोऽथ, तदा भिक्षार्थमागतः । अपृच्छि गृहिणा कस्मान्नैष भिक्षामुपाददे?

॥ ३ ॥ स जगादादत्तदाना, इमे तस्याथ हेतवे । निःश्रेणिमाधिरोहन्ती, तत्प्रिया पतिताऽवनौ ॥ ४ ॥ कुक्षिस्तस्या घरट्टस्य, कीलकेन विदारिता । पतिता प्रस्फुरद्गर्भा, सा पञ्चत्वमवाप च ॥ ५ ॥ अन्यदा चाययौ साधुस्तेन पृष्टो जगाद च । आर्हतं वचनं ह्येतद्ग्राह्यं मालाहृतं न हि ॥६॥ धर्म्मं च कथयित्वैष, मुनिना ग्राहितो व्रतम् । तन्मालापहृतं हेयमेव संयमिना सता ॥७॥१३

अथाच्छेद्यम्, तच्चाच्छिद्य-उद्दाल्य परेभ्यः सकाशात् दात्रा बालकादिभ्यो हठाद् गृहीत्वा साधुभ्यो यद्दत्ते तदाच्छेद्यम् । गोपभृतकदासपुत्रीवधूभार्यादीनां हि प्रभोराच्छेद्यं स्यात् तन्न ग्राह्यं, यस्मादाच्छिन्नं गृह्यते स कदाचित्तथाविधगोपवत् कोपमपि कुर्यात्, तथाहि–केनापीशेन कस्यापि, गोपस्य भृतिवासरे । तदीयदुग्धं कियदप्याच्छिद्यादायि साधवे ॥ १ ॥ साधुना तु गृहीतं तद्, गोपस्तु क्षीरभाजनम् । गृहीत्वा गृहमायासीदूनं दृष्टं स्वभार्यया ॥२॥ क्षीरन्यूनतया तस्मै, साऽऽक्रोशान् दातुमुद्यता । लग्नानि शिशुरूपाणि, मुक्तकण्ठं च रोदितुम् ॥ ३ ॥ कोपाटोपात्ततो गोपो, बुद्धिं साधुवधेऽदधत् । इतश्चेतश्च बभ्राम, कुर्वन् मुनिगवेषणम् ॥ ४ ॥ दृष्टश्च मुनिना ज्ञाततदाकूतेन भाषितः । तोषपोषकृते तस्य, सुधारसाकिरा गिरा ॥ ५ ॥ तदा गृहेशनिर्बन्धात्, त्वद्दुग्धं जगृहे मया । ततः प्रत्यर्पणायाहं, साम्प्रतं चलितोऽस्मि च ॥६॥ त्वद्गृहं तु न जानामि, तदिदं गृह्यतां पयः । ततो जुगोप गोपालः, कोपमह्नाय तं प्रति ॥७॥ ऊचेऽथ जीवितव्यं च, पयश्च तव जायताम् । द्वितीयवेलं मा कार्षीः, क्वचनापीदमीदृशम् ॥ ८ ॥ इत्यनेकमहादोषपरिपोषनिबन्धनम् । मुमुक्षुभिः परित्याज्यमेवाच्छेद्याशनादिकम् ॥ ९ ॥ १४ ॥

अथानिसृष्टम्--तच्च बहूनां स्वामिनां साधारणं यन्मोदकादि तदेकेन दीयमानं न ग्राह्यं, दोषप्रसंगाद्, अथोदाहरणम्--

क्षितिप्रतिष्ठितपुरे, गोष्ठीभक्तं विधापितम् । मित्रैर्द्वात्रिंशता माणिभद्राद्यैर्युवभिर्मुदा ॥ १ ॥ नीत्वा च रमणीयाख्ये, तदुद्याने व्यमु-
च्यत । तत्रैकं रक्षकं मुक्त्वा, परे स्नातुं नदीं ययुः ॥२॥ अत्रान्तरे च भिक्षार्थी, मुनिरेकः समागमत् । अपश्यच्च जगच्चित्तमोद-
कानिह मोदकान् ॥ ३ ॥ रक्षकः प्राह भगवन् !, नेतो दातुमहं क्षमः । यदेकत्रिंशता मित्रैरपरैरपि कारिताः ॥ ४ ॥ परद्रव्य-
मिदं तेन, कथमेको ददाम्यहम् । गतास्ते केति साधूक्ते, स प्राह स्नानहेतवे ॥ ५ ॥ अथ लिप्सावशः साधुस्तमिति स्तिमितोऽ-
गदत् । अहो मतिस्ते यत् पुण्यं, परार्थेनापि नार्जसि ॥ ६ ॥ किंच द्वात्रिंशता दत्तैस्तवैकोऽयं प्रयास्यति । अल्पव्ययेन तद्धर्म्म-
शील ! त्वं धर्म्ममर्जय ॥ ७ ॥ इत्थं पुनः पुनस्तेन, भणितेनोपरोधतः । प्रदत्ता मोदकास्तेन, मुनये स ततोऽव्रजत् ॥ ८ ॥ व्रजंश्च
माणिभद्राद्यैः, सम्मुखापतितैरयम् । दृष्टः पृष्टश्च भगवन्!, भवता लब्धमत्र किम् ? ॥९॥ किंचिदपि न तेनोक्ते, भयभ्रमितचेतसा ।
बलादालोकमानैस्तैः, पात्रे दृष्टास्तु मोदकाः ॥ १० ॥ पृष्टश्च रक्षको भीत्या, प्राह दत्ता मया न हि । ततः सलोप्त्रः स्तेनोऽयं,
वदद्भिर्निधृतो मुनिः॥११॥उपकारणिकं नीते, बलादाकृष्य तैरयम् । कुविकल्पैरिवानल्पैरुपकर्म्भशरीरभृत्॥१२॥पृष्टः कारणिकैः सर्वं,
समीचीनमुवाच सः । ऋजुकोऽयमिति ध्यात्वा, तैस्ते सम्बोधिताः परे ॥ १३ ॥ साध्वाभासः स च प्रोचे, मा कार्षीः पुनरीदृशम् ।
स्थातव्यं न च देशे चेत्युक्तो मुक्तश्च तैर्ययौ ॥१४॥ तथा पितृ(पुत्रे)भ्यः स्वामिना दीयमानमध्यात् कुटुम्बिभिश्च क्षेत्रे कर्म्मकरेभ्यो
दीयमानमध्यात् हस्तिपिण्डमध्याच्च दीयमानं न ग्राह्यमिति १५ ॥

अथाध्यवपूरकः, स चात्मार्थं मूलारम्भे गृही यावदर्थिकयतिपापण्डिकार्थं तन्दुलान् निक्षिपति सोऽयमध्यवपूरकमध्यव-
पूरकाख्यो दोषो भण्यते १६॥ एतेषु च षोडशसु उद्गमदोषेषु आधाकर्म्म औद्देशिकात्रिकं उद्दिष्टकृतकर्म्माख्यं मिश्रजातं अध्यवपूरकः

आहारपूति बादरप्राभृतिका अविशोधिकोटिः सर्वथा परिहार्या, एभिर्मिश्रं पात्रकमपि करीषघृष्टं त्रिर्धौतं शुद्ध्यति, शेषदोषेषु तु तावत्यन्ने त्यक्ते विधिना विशोधिकोटिः॥ अथोत्पादनदोषाः षोडशोच्यन्ते, ते चामी—



धाई दूइ निमित्ते आजीव वणीमगे चिगिच्छा य । कोहे माणे माया लोभे य हवंति दस एए ॥१॥

पुव्विंपच्छासंथव विज्जा मंते य चुन्नजोगे य । उप्पायणाइ दोसा सोलसमे मूलकम्मे य ॥२॥

पिण्डार्थं क्षीरमज्जनमण्डनोत्सङ्गधारणादि कुर्वतो धात्रीपिण्डः १ संदेशं ददतो दूतीपिंडः २ निमित्तं—अतीताद्यर्थसंसूचनं कथयतो निमित्तपिण्डः ३, जात्याद्युपजीवनादाजीवनापिण्डः ४, दायकाभिमतजनप्रशंसया प्राप्तो वनीपकपिण्डः, वनीपकत्वं तत्तदभिमतजनप्रशंसा५, चिकित्सा-रोगप्रतीकारः ६ क्रोधः--कोपः ७ 'मानो' गर्वः ८, माया वञ्चना ९ लोभो लुब्धता१०, पूर्वं दानात् संस्तुतिः पूर्वसंस्तवः, पश्चाद्दानतः स्तुतिः पश्चात्संस्तवः ११, विद्याप्रयोगपिण्डः१२, मन्त्रप्रयोगपिण्डः १३ 'चूर्णो' नयनाञ्जनादिस्तत्प्रयोगपिण्डः १४, 'योगः' सौभाग्यादिहेतुस्तत्पिण्डः १५, षोडशः पुनर्मूलं-अष्टमप्रायश्चित्तं तत्प्राप्तिनिबन्धनं कर्म्म-व्यापारो गर्भघातादिस्तत्प्रयोगपिण्डः १६॥ तत्र धात्रीवद्बालस्य क्षीरमज्जनमण्डनक्रीडनांकधारणादि कृत्वा कारयित्वा वा यल्लभते स धात्रीपिण्डः, उदाहरणं चात्र -जम्बूद्वीपस्य भरते, नाम्ना कोल्लपुरं पुरम् । सुसाधुभक्तिसंयुक्तसुश्रावककुलाकुलम् ॥१॥ क्षीणजङ्घाबलत्त्वेनाजङ्गमाः सङ्गमाभिधाः । वसन्ति स्थविरास्तत्र, सूरयो गुणभूरयः ॥ २ ॥ अन्यदाऽजनि तादृक्षं, दुर्भिक्षं यत्र संगमे । पुत्रः पितृभ्यां पुत्रेण, पितरौ च न तुष्यतः ॥ ३ ॥ धान्यस्य वर्द्धमानेऽर्घे, पात्रेऽर्थः स्वल्पकोऽभवत् । श्राद्धानां द्रव-भैक्षस्यालाभतो यतीनामपि ॥ ४ ॥ ततः सूरिभिरन्यत्र, विहर्त्तुमसहैः स्वयम् । शिष्यः सिंहाभिधः सूरिः, सगच्छोऽपीत्यभाष्यत

॥ ५ ॥ वत्स ! गच्छ सगच्छस्त्वं, सुभिक्षभृति नीवृति । वयमत्रैव तु क्षेत्रे, स्थास्यामो यतनापराः ॥ ६ ॥ गुरोरादेशतस्तास्मिन्, विहृते देशतस्ततः । नवभागीकृते क्षेत्रे, तत्र तस्थुस्तु सूरयः ॥७॥ द्रव्यतः क्षेत्रतो वाऽपि, कालतो भावतस्तथा । चतुर्विधयतनया, यतीशा विहरन्ति ते ॥ ८ ॥ द्रव्यतो यतनां पीठफलकादिषु कुर्वते । क्षेत्रतो ममताहीना, वसतौ पाटकेऽपि वा ॥ ९ ॥ एकत्र पाटके मासमुषित्वाऽन्यत्र कालतः । भावतो ममताहीनाः, सर्वत्र व्यहरंश्च ते ॥ १० ॥ इतश्च सिंहाचार्येण, दत्ताह्वः प्रहितो मुनिः । संगमस्थविराचार्यप्रवृत्त्यन्वेषणाकृते ॥ ११ ॥ प्राग् यत्रोपाश्रयेऽभूवन्, क्रमात्तत्रैव सन्ति ते । तान्नित्यवासिनो मत्वा, सोऽस्थात् पृथगुपाश्रये ॥ १२ ॥ तान्नत्वाऽवज्ञया भिक्षाक्षणे तैः सह यातवान् । अज्ञातोञ्छपरिभ्रान्त्या, क्लिष्टः शिष्यो व्यचिन्तयत् ॥१३॥ शाठ्येन भ्रमयत्येष ,चिरं प्रान्तकुलेषु माम् । भिक्षामादास्यते भद्रकुलेषु स्वयमेव तु ॥ १४ ॥ तं क्लिष्टचेष्टितं मत्वा, सूरिराढ्यगृहेऽविशत् । बालकं पूतनाग्रस्तं, क्रोशंतं तत्र चैक्षत ॥ १५ ॥ ततश्चप्पुटिकं दत्त्वा, मा रुदस्तं गुरुर्जगौ । तत्तपोऽचिन्त्यसामर्थ्यान्नष्टा च कटपूतना ॥ १६ ॥ षण्मास्या विरते तत्र, बालके नित्यरोदनात् । मुदिता मोदकापूर्णं, तस्याम्बा स्थालमानयत् ॥ १७ ॥ आदत्स्वेदमिति प्रोक्ते, गुरुणा करुणावता । दत्तो गृहीत्वा पर्याप्तमुपाश्रयमुपागमत् ॥ १८ ॥ विहृत्य प्रान्तगेहेषु, सूरयोऽपि समायुः । विदधुर्विधिनाऽऽहारं, विधेयमनसश्च ते ॥ १९ ॥ आवश्यकस्य वेलायामथमालोचनक्षणे । गुरुभिर्गदितो भद्र!, सम्यगालोचनं कुरु॥२०॥ स प्रोवाचाथ युष्माभिः, सहैव विहृतोऽस्म्यहम् । किमत्राशुद्धमेवास्तीत्युक्ते च गुरुरब्रवीत् ॥२१॥ धात्रीपिण्डस्त्वया सूक्ष्मो, भुक्तश्चप्पुटिकावशात् । पूतनायाः प्रतीकारात्, चिकित्सापिण्ड एव च॥२२॥ दध्यौ शिष्योऽथ मे दोषानेष सूक्ष्मानपीक्षते । स्वकीयान्नित्यवासादीन्, महतोऽपि सतो न तु ॥ २३ ॥ स्वच्छिद्रालोकने लोको, वक्रः शुक्रसमोऽपि न । स एव हि सहस्राक्षः,

परच्छिद्रेक्षणक्षणे ॥ २४ ॥ ध्यात्वेत्यगात् क्रुधापूर्णस्तूर्णमाश्रयतो बहिः । जज्ञे गुरुषु वामं तं, यथासन्निहिता सुरी ॥२५॥ विदधे दुर्दिनं वातं, कर्कशं सा सशर्करम् । घनाघनां घनस्यापि, वृष्टिं तद्विद्रवेच्छया ॥२६॥ तयेति दूयमानोऽयमतिविह्वलमानसः । गुरूनजूहवद् वत्सागच्छेति तैस्तु भाषितः ॥ २७ ॥ स प्राह वसतिद्वारं, न पश्यामि तमोवशात् । पुरा क्रोधवशात् त्यक्तं, तत्तेन कथमीक्ष्यताम् ? ॥ २८ ॥ श्लेष्मश्लिष्टकरांगुल्या, प्रकाशे गुरुणा कृते। स दध्यौ दीपकोऽप्यस्ति, कथं गुरुपरिग्रहे ? ॥ २९ ॥ समागतो गुरोरन्ते, स्वस्य संस्तारकं व्यधात् । गुरुणाऽथांगुलीदीपे, हृतेऽभूद् दुस्तमं तमः ॥ ३० ॥ बाढं सन्तमसं तेन, भाषिते सूरयो जगुः । विहरन्तो भवन्तः किं, सदीपाश्रयवासिनः? ॥३१॥ ततः सापत्रपे शिष्ये, सैत्य शास्ति स्म देवता । पतित्वा पादयोः शिष्यो, गुरुमक्षमयत्ततः ॥३२॥ प्रायश्चित्तं गुरुप्रोक्तं, प्रीतिमान् प्रत्यपद्यत । मत्वेति धात्रिकापिण्डो, नोपादेयः सुसाधुभिः॥३३॥१॥

अथ दूतीत्वदोषः, स प्रकटप्रच्छन्नसन्देशकथनेन मिथः स्यात्, तत्रोदाहरणम्–विरोधो ग्रामयोरासीद्, द्वयोरपि परस्परम्। तयोरेकतमे ग्रामे, शय्यातर्यस्ति पुत्रिका ॥ १ ॥ द्वितीये दुहिता त्वस्या, अथ ग्रामे द्वितीयके । भिक्षार्थं प्रस्थितः साधुः, पिता पुत्र्येति भाषितः ॥ २ ॥ अस्मद्ग्रामस्तव ग्रामस्योपर्यस्ति वधोद्यतः । तद्यत्नेन त्वया स्थेयं, मत्पुत्र्यै कथयेदृशम् ॥३॥ युग्मम् ॥ आख्यात् स तस्यै सा भर्त्रे, स च ग्रामाय तत्तथा। सन्नह्याथ स्थितो ग्रामः, सर्वः सभयमत्सरः ॥ ४ ॥ अत्रान्तरे च प्रत्यर्थिग्रामः संग्रामसज्जधीः । आगतश्च महांश्चासीन्, मिथः समरविड्वरः॥ ५ ॥ शय्यातर्याः पतिः पुत्रो, जामाता च विपेदिरे । अग्रव्यतिकरः अस्मादभूदिति जनो जगौ ॥ ६ ॥ साऽऽख्यदाख्यातमेतन्मे, पित्रा भर्त्रादिवैरिणा । ततोऽपभ्राजना जज्ञे, जनेऽस्य महती मुनेः॥७॥

अथ निमित्तम्-पिण्डार्थं लाभालाभादि कथयतो निमित्तपिण्डः, तत्रोदाहरणम्-कश्चन क्वचन ग्रामे, ग्रामस्वामी पुराऽभवत् । नरेन्द्रादेशतो देशान्तरे दूरे च सोऽगमत् ॥ १ ॥ चिरं कालं गते तस्य, दयिता व्याकुलाऽजनि । गृहस्वामिवियोगो हि, दुःसहः कुलयोषिताम् ॥ २ ॥ अन्यदा श्रमणं भिक्षाऽऽयातं पप्रच्छ साऽऽदरात् । निमित्तं वेत्सि भगवन्!, स प्राह सुतरामिति ॥३॥ सोवाच गृहिणी स्वामी, कदा मम समेष्यति? । मुनिना प्रातरित्युक्ते, सा साह प्रत्ययोऽत्र कः ॥ ४ ॥ ? स प्राह प्रत्ययोऽयं ते, गुह्यदेशे मषोऽस्ति यत् । दृष्टश्चाद्य त्वया स्वप्नो, रजन्यामथ साऽतुषत् ॥ ५ ॥ तया मुदितया तस्मै, दापिता मोदिकादिका । पराभ्रप्रवरा भिक्षा, स भिक्षुः प्रमना ययौ ॥६॥ सा प्रातः प्रातनोत् प्रीत्या, गृहे स्वस्तिकतोरणम् । स्वामिनः सम्मुखं प्रैषीन्निजं परिजनं तथा ॥ ७ ॥ स्वाम्येत्य स्वगृहे स्वामी, पपृच्छ गृहिणीं निजाम् । साऽथ तत्कथितं सर्वं, गुह्यदेशमषादिकम् ॥ ८ ॥ निमित्तातिशयं साधोः, प्रशंसन्ती शशंस च ॥ स च मिथ्याविकल्पेनानल्पेन कुपितोऽधिकम् ॥९॥ आहूय श्रमणाभासं, तं पप्रच्छ स तुच्छधीः । एतस्या वडवाया यत्, कुक्षौ गर्भोऽस्ति कीदृशः ? ॥ १० ॥ मुनिः प्राह समस्त्यत्र, पञ्चपुण्ड्रः किशोरकः भावि चेत्त वचः सत्यं, जीवसीतरथा मृतः॥११॥ तेनाथ गृहनाथेन, सरुषा पुरुषात्मना। उदरं दारयांचक्रे, वडवायाः स्वपात्तिना॥१२॥ यथाऽऽदिष्टे ततो दृष्टे, किशोरे स मुनिं जगौ । मिथ्यावाक्यऽत्र सञ्जाते, दारयिष्यं तवोदरम्॥१३॥ मत्वेति मुनिभिर्लोकद्वयस्य हितमिच्छुभिः । निमित्तं सनिमित्तं वाऽन्यथा वा कथयेच्च न ( कथ्यते नहि ) ॥ १४ ॥ ३

अथाजीवपिण्डः,-तत्र जातिकुलगणादिषु तत्स्वरूपमात्मानं पिण्डार्थं वदत आजीवपिण्डः४॥ अथ वनीपकपिण्डः, ब्राह्मणशाक्यपरिव्राजककाकशुनकादिभक्तेषु पिण्डार्थं तत्तद्भक्तमात्मानं वदतो वनीपकपिण्डः५ ॥ अथ चिकित्सापिंडः, स च रोगप्रती-

काराय औषधं भेषजं वा ददत उपदिशतो वा भवति८॥ अथ क्रोधपिण्डः, विद्यासामर्थ्यादिकं क्रोधफलं शङ्कमानो गृही यद्भयाद् दत्ते स तथा, दृष्टान्तश्चात्र–हस्तिकल्पाभिधे पुरे(द्रंगे,)ऽनल्पागारविराजिते। साधुर्विवेश भिक्षार्थी, मासक्षपणपारणे॥१॥श्रमणोऽकस्मि विप्रस्य, प्रेतकार्यदिनेऽविशत्। कुक्षिपूरं घृतपूरान्, द्विजास्तत्र च भुञ्जते॥२॥ अन्यैरवज्ञया दृष्टस्तैरयं निर्गतो गृहात्। सक्रोधं प्राह यत्प्रेतकार्येऽन्यत्र प्रदास्यथ॥३॥ ब्रुवन्नेवं स निर्यातो, दैवयोगेन तत्र च। द्वितीयेऽपि मृते प्रेतकार्ये स प्राविशन्मुनिः॥४॥ अलाभे च तदेवैष, विब्रुवन्निर्गतः पुनः। दैवयोगाच्च तद्घस्रे, तृतीयं मानुषं मृतम् ॥ ५ ॥ तत्रापि प्रेतकार्यस्य, दिने तद्गृहमागतः। अलाभतस्तदेवार्यं, वदन्निर्याति यावता॥६॥ तावता द्वारपालेन, स्थविरेण गृहेशितुः। त्रिःप्रोक्तं तन्मुनेर्वाक्यं, कथ्यते स्म यथा-तथम् ॥७॥ ऊचे च मुनिमेनं द्राक्, मानयध्वममानवम्। सर्वेऽपि यूयं मा कालमकाले कलयिष्यथ॥ ८ ॥ आह्वाय्याथ गृहस्वामी, क्षमयित्वा च तं मुनिम्। घृतपूरान् ददौ नेत्थं, क्रोधपिण्डस्तु गृह्यते ॥ ९ ॥ ९ ॥

अथ मानापिण्डः, लब्धिप्रशंसागर्वितो मुनिर्गृहस्थस्य अभिमानमुत्पाद्य यं पिण्डं गृह्णाति स मानपिण्डः, तत्रोदाहरणम्—

अस्ति कौशलदेशान्तर्नगरं कौशलाभिधम्। तत्र काणिकसेवानां चास्ति पाकमहोत्सवः॥१॥ तत्रैकत्र महागच्छे, वयःसन्धि-स्थसाधुषु। संकथायामुवाचैको, मानैधकमिदं वचः॥१॥ अद्य भिक्षाक्षणे सेवाः, को वा वह्वीर्न लप्स्यते। प्रातरत्राक्षणे यस्त्वानयेत्ता लब्धिमान् स तु ॥ २ ॥ प्राह क्षुल्लक एकोऽथ, नेष्यामि बहुशोऽपि ताः। परे प्राहुर्घृतगुडहीनास्ताः कस्य तुष्टिदाः? ॥३॥ यूय-मिच्छथ यादृक्षास्तादृक्षा आनयाम्यहम्। ब्रुवन्निति ययौ क्षुल्ल, इभ्यस्यैकस्य वेश्मनि ॥ ४ ॥ प्राज्याश्च सगुडाज्याश्च, सेवास्तत्र ददर्श सः। ययाचे बहुधा चेभ्यगृहिणीं कलया गिरा ॥ ५ ॥ प्रतिषिद्धो तया गाढमयं मानमयं वचः। जगादावश्यमेवैता, मया

आशास्तवाश्रयः ॥ ६ ॥ सा भक्तेतासु सेवासु, गृहास्योकामपीह नेत् । तत्त्वया मम नाशायां, लग्नीतिः कृता ध्रुवम् ॥७॥ क्षुल्लको
निर्गतो गेहात्, पप्रच्छ प्रातिवेशिकम्। गृहस्वाम्यभिधानादि, ज्ञात्वा सदसि तं ततः ॥८॥ गत्वाऽथ क्षुल्लकोऽपृच्छत्, परिषत्पुरुषा
नथ । को देवदत्तनामास्ति, ते प्राहुस्तेन किं तव? ॥ ९ ॥ स प्राह किञ्चिद्याचिष्ये, ते प्रोचुः प्रार्थयस्व नः । देवदत्तो जगादाथ,
यत्तवेष्टं ददामि तत् ॥ १० ॥ क्षुल्लकः प्राह युष्मासु, षण्णामन्यतरो नृणाम्। न त्वं भवसि याचे, ते प्रोचुः के नु ते नराः ?
॥ ११ ॥ श्वेताङ्गुलिर्बकोड्डायी, किङ्करस्तीर्थसाधकः । गृध्रचारी हदनकः, स षड् नूनिति तान् जगौ ॥ १२ ॥ तथाहि प्रथमो
जायासदादेशकरो नरः । प्रातः प्रियां प्रति प्राह, क्षुधार्त्तः पवनङ्करः ॥ १३ ॥ यदि ते रोचते येन, भोजनं विदध्याम्यहम् ।
साऽथ शय्यास्थिताऽवादीत्, क्षुधितोऽस्यधिकं यदि ॥ १४ ॥ तच्चुल्ल्याः क्षारमुत्सार्याग्नीनेधो ज्वालयानलम् । जलापूर्णां ततः
स्थालीं, चुल्ल्यामारोपय द्रुतम् ॥१५॥ कुशूलात् तन्दुलान् स्थाल्यां, प्रक्षिप्य परिपच्य च । ममारुग्णं शय्योत्थाय, तवाहं परिवेषये
॥ १६ ॥ यदादिशति मे कान्ता, प्रोच्येति स तथाऽखिलम् । कृत्वा विज्ञपयामास, परिवेषय ततस्तया ॥ १७ ॥ इति प्रतिदिनं
चुल्लीक्षारापनयनादशुभम् । श्वेतभूताङ्गुलिं तां, वीक्ष्य श्वेताङ्गुलिं जगौ ॥१८॥ इति श्वेताङ्गुलिः प्रोक्तो, बकोड्डायी निशम्यताम् ।
तथाहि पुरुषः कश्चिदस्ति प्राणप्रियाप्रियः ॥२॥ स च प्रेमपराधीनः, प्रणयिन्येति भाषितः । त्वया निरन्तरं नीरमानेतव्यं सरोवरात्
॥ ३ ॥ दिवसापत्रपः सोऽथ, चरमप्रहरे निशः । कलशेनानयन्नीरं, बकानुड्डापयत्स्वयम् ॥ ४ ॥ प्रेमप्रासादसम्पूर्णकर्मस्थानस्य
लक्षणम् । स बिभ्रन् कलशं शीर्षे, तया गौर्या वशीकृतः ॥ ५ ॥ नित्यमित्यानयन्नीरं, बकान् उड्डापयाशिषि । जनेन ज्ञातवृत्तान्तो,
बकोड्डायीत्यभाण्यत ॥ ६ ॥ इति प्रोक्तो बकोड्डायी, किङ्करः श्रूयतामितः । किलैकः कुलपुत्रोऽभूत्, कलत्रेऽत्यनुरागवान् ॥ ७ ॥

प्रातः प्रातः समुत्थाय, शयनीयतलादयम्। आदेशं देहि मे दास, इव प्रेम्णाऽङ्कित हृदि ॥ ८ ॥ वक्तीत्यादिश मे प्राणवल्लभे ! किं करोम्यहम्। सा प्राहानय पानीयं, तत् कृत्वा वक्त्ययं पुनः ॥ ९ ॥ किं करोमीति सा प्राह, पचस्वाखण्ड्य तन्दुलान् । भाजनं धेहि मे तत्तत्, कृत्वा चाह करोमि किम् ? ॥ १० ॥ तयोचे शोधयोच्छिष्टभाजनानि तथैव सः। कृत्वाऽऽह किं करोमीति, सोचे प्रक्षालय क्रमौ ॥ ११ ॥ इति विज्ञाय लोकेन, किंकरः स निगद्यते। श्रूयतां तीर्थस्नातारं ( कान्ताधीनं नरं ब्रुवे )॥ १२ ॥ क्वापि ग्रामे नरः कश्चित्, प्रियावाक्यानुवर्त्तकः । स्नाने सरो ) व्रज स्नानं, यथेच्छं तत्र चातनु ॥ १३ ॥ अर्चित्वा देवमापूर्याम्भसा कुम्भं समेहि च । यदादिशति मे प्राणवल्लभेति निगद्य सः ॥ १४ ॥ सर्वं कुर्वंस्तथा तीर्थस्नातेति गदितो जनैः । तीर्थस्नातेति वः प्रोक्तो, गृध्रचारी निशम्यताम् ॥१५॥ तथाहि पुरुषः कोऽपि, स्वस्त्रीवाक्यानुवर्त्तकः। साऽऽदेशं कुरुते यं यं, तं संपादयते रयात् ॥ १६ ॥ सोऽन्यदा भोजनं कर्त्तुमुपविष्टोऽवदत् प्रियाम् । प्रिये! रूक्षमिदं भोज्यं, तद् घृतं परिवेषय॥१७॥ तयोक्तं कुशूलादस्माद्, गृहाणेति तथा व्यधात् । अन्यदाऽसौ पयोऽयाचत्, स्नानार्थं नम्रवाक्यतः॥१८॥ तयाऽपि च पचत्याऽन्नं, प्रोचे स्तोकमितः सरः। ततो गत्वा सरः स्नात्वा, भृत्वा कुम्भं समागमत् ॥ १९ ॥ ततः स गृध्रपक्षीव, सरति स्म न किञ्चन। साधिक्षेपं पुनः प्रोक्तः, सरति स्म स तां प्रति ॥ २० ॥ पुनः पुनः सरन्नेवं, तां योषितमुपागमत् । तद्वृत्तान्तं जनो ज्ञात्वा, जगौ तं गृध्रचारिणम्॥२१॥ कंचित् पुनर्नरं तत्स्त्री, कुर्वती शिशुहादनम् । प्रत्यहं न च तच्चित्ते, खेदस्यांशोऽभवन्ननु ॥२२॥ अतो हदनको नाम्ना, स प्रसिद्धिं गतो जने । नराधमाः षडप्येते, भवतां कथिता मया ॥ २३ ॥ उक्त्वेति विरते क्षुल्ले, सोपहासं परे जगुः । युगपद् भगवन्नस्मिन्, सन्ति दोषा इमे खलु ॥ २४ ॥ न याच्योऽयं ततः प्राह, गृहभृन् नाहमीदृशः । तद्याचस्व महासत्व!, यच्चित्ते तव रोचते ॥२५॥

क्षुल्लकः आह यद्येवं, ततो घृतगुडान्विताः । सेवाः प्रयच्छ पर्याप्ता, भोजयामि यथा मुनीन् ॥ २६ ॥ ददामीति भणन् यातः, स-
क्षुल्लः स गृहान्तिकम् । क्षुल्लोऽथाकथयत्तस्य, तत्पत्न्या सह विग्रहम् ॥ २७ ॥ स प्राह तर्हि तिष्ठ त्वं, द्वारि याम्यहमन्तरा । वदन्निति
गृहाधीशः, प्राग्विवेश स्ववेश्मनि ॥ २८ ॥ जायामूचे च किं सिद्धं, भोज्यं ? साऽऽह तथेति च । प्राज्यमाज्यं गुडं चापि, तद्युत्तारय
मालतः ॥ २९ ॥ तस्यां मालाधिरूढायां· स निश्रेणीमपानयत् । तेन व्याहृत्य च क्षुल्लो, यथेष्टं प्रत्यलाभ्यत ॥३०॥ तं वीक्ष्य तुमु-
लं चक्रे, तया तेन च दर्शितम् । तस्या निजनसि न्यस्तांगुल्या तत्र विमूत्रणम् ॥३१॥ भृत्वा पात्रं च गत्वा च, सोऽन्यान् साधून-
भोजयत् । नादेयमित्थं यन्नारी, कुर्यादात्मवधादिकम् ॥ ३२ ॥ १० ॥

अथ मायापिण्डः, स च पिण्डार्थं विविधं काणकुष्ठादिरूपं कुर्वतो भवति, तत्राषाढभूतिमुनिर्दृष्टान्तः, तथाहि जम्बूद्वीपस्य,
भरतापाच्यखण्डके । देशोऽस्ति मगधो नाम, नगधोरणिबन्धुरः ॥ १ ॥ तत्र राजगृहं नाम, पुरं निजगृहं श्रियः । अस्ति प्रमुदिता-
शेषविबुधं स्वःपुरः प्रभम् ॥ २ ॥ मंत्रांगपंचवक्त्रोऽस्ति, तत्र क्षत्रशिरोमणिः । द्विपद्दि(न्त)पततिक्षोदासिंहः सिंहरथो नृपः ॥ ३ ॥
ब्रह्माण्डमण्डपे यस्याधिरूढा कीर्तिवल्लरी । सच्छायं भुवनं चक्रे, विच्छायं त्वरिमण्डलम् ॥ ४ ॥ विहरन्नन्यदा तत्रागमदागमदा-
नधीः । शुद्धधर्म्मरुचिर्धर्म्मरुचिर्नाम गणाधिपः ॥ ५ ॥ उद्याने गुणवन्तस्ते, तस्थुर्गुणशिलाभिधे । बहुच्छाये तदाकीर्णे, जीर्ण-
कल्पद्रुमा इव ॥६॥ तेषामाषाढभूत्याख्यः, कलाभूत्या समस्ति च । समस्तज्ञानपृथुलः, शिष्यःप्राथमकल्पिकः ॥७॥ स एकदा प्रति-
कुटमटन्नटकुटं गतः । नटश्च नृपमान्योऽयं, महान् कोऽप्यस्ति तत्र च ॥८॥ आषाढभूतिना तत्र, प्रविष्टेन च मोदकः । लब्धो गन्धे-
न रूपेण, रसेनापि प्रमोदकः ॥९॥ ततश्च निर्गतो दध्यौ, भविष्यति गुरोरयम् । आनयामि द्वितीयं तमद्वितीयं रसादिभिः ॥१०॥

ध्यात्वेति भूत्वा काणोऽक्ष्णा, तत्रैव प्राविशत् पुनः । पुनस्तं मोदकं प्राप्य, निर्जगाम बहिर्गृहात् ॥११॥ पुनर्दध्यावुपाध्यायस्यामस्त्वन्यमानये । स्वयोग्यमिति संचिन्त्य, कुब्जीभूय पुनर्ययौ ॥ १२ ॥ विज्ञानेन व्यधात् कुब्जं, गात्रमेव न केवलम् । चारित्रमपि सैवं सोऽवतंसः कुहनीवताम् ॥ १३ ॥ पुनर्मोदकमासाद्यमाप्य दध्यौ मुनेरयम् । भविष्यति द्वितीयस्य, कुष्ठिरूपं ततो व्यधात् ॥ १४ ॥ गुटिकायाः प्रयोगेण, कुष्ठं स्वांगे बभार सः । चारित्रांगेऽपि विषयकुष्ठं प्रेप्सुरिवाधिकम् ॥ १५ ॥ स काणादि गवाक्षाधो, नेटगेहस्य तद् व्यधात् । नटः प्रकटमैक्षिष्ट, सकलं तद्गवाक्षगः ॥ १६ ॥ अध्यायच्च परार्द्धोऽयं, नटः सितपटः स्फुटः । तदेनं मानदानाद्यैः, करोम्यात्मवशंवदम् ॥ १७ ॥ विचिन्त्येति नटो मध्यमागत्य क्षुल्लकुष्ठिनः । उपेत्य मोदकानां च, भृत्वा स्थालमुपाविशत् ॥ १८ ॥ अवोचच्च त्वया नित्यमागम्यमिह भिक्षितुम् । श्रुत्वेत्युपाश्रयं याते, तस्मिन्नूचे नटो नटीम् ॥ १९ ॥ सिताम्बरः प्रिये वेषविधावेष विचक्षणः । सदा मोदकदानेन. मोदनीयः प्रयत्नतः ॥ २० ॥ तथा च निजयोः पुत्र्योः, शिक्षा देया त्वया तथा । अनुकूलोपचारैस्तं, वशमानयतो यथा ॥ २१ ॥ गृहमागच्छतस्तस्य, नित्यशो विदधुर्मुदम् । स्निग्धैर्नटी नटीपुत्र्यौ, मोदकैर्ललितैरपि ॥ २२ ॥ निलये नित्यमित्यस्यागच्छतः संघचारिणः । कटाक्षबडिशाग्रस्थमोदकामिषभक्षिणः ॥ २३ ॥ सुगाढगुणजालान्तः पतितस्य विधेर्व्य(व)धात् । हा हा मनोगलस्ताभ्यां, धीवराभ्यामविध्यत ॥२४॥ युग्मम्॥ विद्धे चित्ते विसस्मार, स्मरापस्मारभागयम् । गुरुवाक्यमहामन्त्रमभ्यस्तमपि सन्ततम् ॥ २५ ॥ कुलाभिमानोऽभूद्भग्नोऽमानमानधनोपमः । लज्जाऽपि लज्जमानेवापससार सुदूरतः ॥२६॥ चारित्रावरणं कर्म्मोदीर्णमत्यन्तदारुणम् । ततस्ताभ्यां समं नर्म्म, चक्रे धर्म्मबहिर्मुखः ॥ २७ ॥ ताभ्यामूचेऽस्ति चेत्कार्यमार्यपुत्र ! रतेन ते । तत् प्रव्रज्यां परित्यज्याऽऽवामुद्वह कुलोद्वह! ॥ २८ ॥

४ प्रव्रज्यास्वरूपे उत्पादना दोषाः १६

तत् प्रपद्य गतो गुर्वन्तिके स्वाकूतमाख्यत । गुरुः प्राह न ते युक्तं, कर्तुं लोकद्वयद्विपत् ॥ २९ ॥ त्वं विवेकी कुलीनश्च, विपयेपु रमस्व मा । बाहुभ्याममम्बुधिं तीर्त्वा, कथं मज्जसि गोष्पदे? ॥३०॥ वरं भुक्तं विपं नैव, सुखं वैपयिकं पुनः । एकशो हि विपान्मृत्युर्विपयेभ्यस्त्वनेकशः ॥३१॥ विनेयः प्राह भगवन्!, सत्यमेतन्न संशयः । न शक्नोमि परिव्रज्यां, विधातुं साम्प्रतं पुनः॥३२॥ ताभ्यां हि चित्तमाक्षिप्तमुक्त्वा मुक्त्वा च स व्रतम् । वेपान्तरेण स प्राप, नटवन्नटवेश्मनि ॥ ३३ ॥ उभे अपि वृते तेन, परिणीते पिताऽब्रवीत् । धार्मिकः सत्पुमानेप, उत्तमप्रकृतिस्तथा ॥ ३४ ॥ तदाराध्योऽप्रमत्ताभ्यां, संमताभ्यां च नित्यशः । यथा न याति वैराग्यं, ते तथेत्यथ चक्रतुः ॥३५॥ पंचधा सेवमानस्य, सुखं विपयसम्भवम् । ताभ्यां सह महास्नेहादनेहास्तस्य गच्छति ॥३६॥ अन्यदा नाटकं दर्श्यं, महिलारहितं दिवा । नृपस्येति नटाः सर्वे, ययुर्यतिवरादिकाः ॥ ३७ ॥ विज्ञायैकान्तमापाढभूतिभार्ये उभे अपि । प्रसन्नास्ये प्रसन्नायाः, पानमाचरतस्ततः॥३८॥ कापिशायनपानेन, चेतनावर्जिते इव । यावत् संतिष्ठतस्तावद्यज्जातं तन्निबोधत ॥ ३९ ॥ नृपतौ नृपकार्येणातीव व्याक्षिप्तचेतसि । नाटकावसराभावान्नटाः स्वस्थानमाययुः ॥ ४० ॥ आपाढभूतिरप्याशु, प्रविष्टो वासवेश्मनि । ते चापश्यद्विवसने, पिशाच्याविव भीपणे ॥ ४१ ॥ प्रसरन्मदिरागन्धे, स्मेरास्ये मधुभाण्डवत् । कुष्ठिन्याविव दुष्प्रेक्षे, मक्षिकाजालमालिते ॥ ४२ ॥ चेतनाकेतनाभावात्, पतिते कुणपे इव। ते निरीक्ष्य विरक्तात्मा, चिन्तयामास चेतसि ॥ ४३ ॥ विशेपकम् ॥ अहो मम विमूढत्वमहो दुश्चेष्टितं मम । अहो कोऽपि मदीयानां, परिपाकः कुकर्म्मणाम् ॥ ४४ ॥ यदेतयोः कृतेऽशुच्योर्दुर्गतिद्वारतुल्ययोः । शुचि चरित्ररत्नं ही, शिवकारि च हारितम् ॥ ४५ ॥ नाशितः श्रुतधर्म्मश्च, मुधाकृतसुधारसः । त्यक्तो गुरुकुलावासो, निवासः सुखसम्पदाम् ॥४६॥ व्रतं ध्वस्तं विश्वमाज्ञा, भग्ना लग्नाऽघसन्ततिः । विपयाः सेविता चान्ति-

निभाः शुनकवन्मया ॥ ४७ ॥ भ्रष्टप्रतिज्ञो जातोऽस्मि, धिग् २ मे मानुषं भवम् । भग्ने च लज्जामर्यादे, मनोद्वारकपाटिके ॥४८॥ किंच रत्नाकरे प्राप्तेऽप्यात्तस्तृणमणिर्मया । निषेवितं विषयजं, सुखं यन्मानवे भवे ॥४९॥ यद्रोगशोकभाग् नैव, जरामरणनाशनम् । सद्योऽवद्योज्झितं चारु, चारित्रं तत् करोम्यहम् ॥ ५० ॥ ध्यात्वा तदैव भवनात्तं निर्यातं नटोत्तमः । दृष्ट्वा विरागताभाजं, विज्ञो विज्ञातवान् हृदि ॥ ५१ ॥ अथोत्थाय गतनये, तनये ते तथास्थिते । गतं प्राह निरुत्साहः, सरुषा परुषाक्षरम् ॥ ५२ ॥ आः पापे! युवयोरीदृक्, दृग्विप्लवविधायकम् । चरितं त्वरितं वीक्ष्य, याति सैष महानिधिः॥५३॥ यद्यानेतुं समर्थे तदेतमानयतं युवाम् । स्वस्याथ याचतं यावज्जीवमाजीवनं ततः ॥ ५४ ॥ ससंभ्रममथोत्थाय, वेषमादाय सत्वरे । आगत्य पदयोर्लग्ने, क्षमयामासतुः पतिम् ॥ ५५ ॥ प्रिय! विप्रियमेकं त्वं, सर्वसह! सहस्व नौ । अनुक्तेऽविप्रमुक्ते च, निर्नाथे नाथ! नात्यलम् ॥ ५६ ॥ स स्माह किंचिन्नो वाच्यो, विरक्तो युवयोरहम् । ते प्रोचतुस्ततो यावज्जीवं जीवनदो भव ॥ ५७ ॥ तत् प्रपद्य निवृत्तोऽयं, सप्तरात्रेण निर्म्ममे । निर्ममेऽपि स्थितो भावे, नाट्यं भरतचक्रिणः ॥ ५८ ॥ अथ सिंहरथः क्ष्मापं, नटक्ष्मापो व्याजिज्ञपत् । देवापूर्वं कृतं नाट्यं, यदस्त्याषाढभूतिना ॥ ५९ ॥ तदभिनीयते राजपुत्राणां पञ्चभिः शतैः । पात्रिकाणां ततस्तानि, प्रासादीकुरुतां प्रभुः ॥ ६० ॥ युग्मम् ॥ राज्ञा तथा कृते नाट्यकविना तेन तानि तु । चक्रिरे नाट्यविषये, कुशलान्यखिलान्यपि ॥ ६१ ॥ नृपे सह सभासद्भिः, सभामधिनिषेदुषि । तैः समं नृत्यमारेभे, ततो यतिवरो नटः ॥ ६२ ॥ षष्ट्या सहस्रैर्वर्षाणां, यथा भरतचक्रिणा । षट्खण्डभरतक्षेत्रविजयो विदधेऽद्भुतः ॥ ६३ ॥ निधयो नव रत्नानि, चतुर्दश च लेभिरे । यथा यथा च राज्याभिषेकोऽभूद् द्वादशाब्दिकः ॥ ६४ ॥ दिव्या बुभुजिरे भोगा, यथा पञ्चविधा अपि । तथा तथाऽभिनयता, नृपतिस्तेन तोषितः ॥ ६५ ॥ प्रदत्त-

सर्वालङ्कारः, स्तुतिव्रत इव स्तुवन् । प्रेक्षते स्म दृढाक्षिप्तः, स्नानोद्यत इवैकसिक् ॥ ६६ ॥ कोटिमूल्यं परोलक्षरत्नसंवर्म्मितं च तम् । अलंकारमलंचक्रे, स मुमुक्षुवरो नटः ॥६७॥ भरतो भरतो नव्यः, सैष भूषणभूषितः । आदर्शगृहमध्यास्त, सार्द्धं तैः पञ्चभिः शतैः ॥ ६८ ॥ रूपं निरूपयंस्तत्र, गलितादंगुलीयकात् । अन्याभ्योऽन्यादृशीमेकां, निःश्रीकामैक्षतांगुलिम् ॥ ६९ ॥ विच्छायां प्रेक्ष्य तामन्यांगुलीभ्योऽप्ययमूर्म्मिकाः । शिरसः शेखरं कर्णयुगलादपि कुण्डले ॥७०॥ हारं कण्ठाद् भुजयुगादंगदे कंकणे त्यजन् । स इत्थमंगं निष्पत्रं, पद्माकरमिवैक्षत ॥ ७१ ॥ ततः सावेगसंवेगो, भावनाभावनादयम् । उत्पाद्य केवलज्ञानं, कुन्तलानुदपाटयद् ॥ ७२ ॥ शतानां पञ्चकं तच्च, तदीयाभिनयं दधत् । विभूषणोज्झनं केशोल्लुंचनं च विनिर्ममे ॥ ७३ ॥ गृहीतद्रव्यलिङ्गो द्राग्, धर्म्मलाभं प्रदाय सः । भरतो भरतो रंगमध्यान्निर्याति यावता ॥ ७४ ॥ तावद्राज्ञा च तद्राज्ञीभिश्च धर्त्तुं समीहितः । ऊचे निवृत्तः किं चक्री?, न निवर्त्तेऽहमप्यतः ॥ ७५ ॥ सापि पंचशती राजपुत्राणां द्रव्यलिंगभाक् । जगाम सह तेनैव, गुरुपादयुगान्तिकम् ॥ ७६ ॥ पुनश्च पाटलीपुत्रे, तदीयाभिनयेक्षणात् । वैराग्यरंगितस्वांतः, प्रवव्राज घनो जनः ॥ ७७ ॥ न ग्राह्य इत्ययं मायापिण्डः श्रमणसत्तमैः । वृद्धग्राघूर्णकग्लानकार्यं मुक्त्वा कदाचन ॥ ७८ ॥

अथ लोभपिण्डः,-तत्रोदाहरणं केशरकसाधुः, एवं चैतत्-चम्पायामुत्सवदिने, मासक्षपणपारणे । द्विपक्षक्षपकः कश्चिदित्यभिग्रहमग्रहीत् ॥१॥ तस्य चालभमानस्य, मोदकांश्चित्तमोदकान् । संक्लिष्टपरिणामेन, विकलत्वमजायत ॥२॥ वदतो धर्म्मलाभस्य, स्थाने केशरमोदकान् । अभून्निशा न तु श्रान्तो, भिक्षाभ्रान्तिं मुमोच सः॥३॥ यामिनीयामयुग्मे स, श्राद्धस्यैकस्य सद्मनि । स्थानके धर्म्मलाभस्याचदत् केशरमोदकान् ॥४॥ चित्तं चलं परिज्ञाय, मुनेः सुश्रावकः स तु । केशराणां मोदकानां, भृत्वा भाजनमभ्यगात्

॥५॥ पात्रे वैकल्यमात्रेणाकृष्टे तेन स मोदकान् । दत्त्वा तत्प्रतिबोधाय, धृतोपायस्तमब्रवीत् ॥६॥ भगवन्! यामयुग्मस्य, प्रत्याख्यानं मया कृतम् । तत् सम्पूर्णं न वाऽपश्यदुत्पश्योऽथ मुनिर्नभः ॥ ७ ॥ स निरीक्ष्य सनक्षत्रं, तत्र नक्षत्रनायकम् । प्रत्यागतमनाः प्राह, प्रेरणा श्राद्ध! सुष्ठु ते ॥ ८ ॥ उक्त्वेति नगरीमध्यान्निर्गत्य स सचेतनः । मोदकानिष्टिकापाकभस्मकश्मलितान् व्यधात् ॥ ९ ॥ चित्तवैकल्यदानेन, मुनिः कश्मलितः स तैः । रुषेव तांस्तथा कुर्वन्, कृतप्रतिकृतिं व्यधात् ॥ १० ॥ कृतपुण्यसुतस्येव, तस्य मोदकचूरणे । करेऽभूत्केवलं रत्नं, भवाम्बुध्यम्बुपाटकम् ॥ ११ ॥ चित्तेन निजवैकल्याद्यदेष भ्रमितो मुनिः । सर्वथा नाशयामासातीव तल्लब्धकेवलः ॥ १२ ॥ क्वैताहक् क्षपकः साधुस्ताहक् सुश्रावकः क च? । तस्मान्न साधुभिर्ग्राह्यो, लोभपिण्डः कदाचन ॥ १३ ॥

अथ संस्तवः, स द्विधा गुणसंस्तवः सम्बन्धिसंस्तवश्च, एकैकोऽपि द्विधा--पूर्वगुणसंस्तवः पश्चाद्गुणसंस्तवश्च, सम्बन्धिसंस्तवोऽपि द्विधा पूर्वसंस्तवो मातृपित्रादिः, पश्चात् संस्तवः श्वश्रूश्वशुरादि, तत्र पूर्वगुणसंस्तवो यथा-अस्माकं भवतः पूर्वं, श्रवणातिथयो गुणाः । तैराकृष्टाः समायाता, जातोऽसि नयनातिथिः ॥ १ ॥ दानानन्तरसंस्तवो यथा-"प्रत्यक्षं भवतो वीक्ष्य, गुणानद्य यथाश्रुतान् । बभूव विमलं चक्षुरसन्देहं च मानसम् ॥ १ ॥" अथ पूर्वसम्बन्धिसंस्तवो, यथा पितृमात्रादिसम्बन्धं भोजनलिप्सुः कुरुते, वृद्धां मातरं, बालां पुत्रीम् इत्यादि, अत्र दृष्टान्तो यथा-कश्चिद्भिक्षागतः साधुर्निजमातुः समां स्त्रियम् । वीक्ष्याहारादिलाम्पट्याद्बभूवाधृतिमानिव ॥ १ ॥ नेत्रे च साश्रुणी कुर्वंस्तयोक्तं किमसीदृशः ? । पुनरुक्तमपि प्रोक्तेऽगदद्गद्गदया गिरा ॥ २ ॥ मम माता भवत्येव, तुल्याऽभवदतोऽधुना । तस्याः स्मरामि तेनाहमीदृशोऽस्म्यत्र ! किं बहु ? ॥ ३ ॥ तया च प्रकटी-

ममातीतसुतस्थानेऽयं भावीति विचिन्त्य
कर्त्तु, मातृस्नेहं मुखे स्तनः । क्षिप्तोऽस्य प्रश्रवश्चास्या, जज्ञे तत्क्षणमेव हि ॥ ४ ॥ इति व्रतभंगदोषः पश्चात्संस्तवेऽपि स्वयमभ्यूह्यः ।
सा । विधवां च वधूं तस्मै, दासीव प्रददौ मुदा ॥ ५ ॥ तत्र विद्योदाहरणम्--पुरे गन्धसमृ-
अथ विद्यादिदोषचतुष्टयं, तत्र स्त्रीदेवताऽधिष्ठाना विद्या, पुरुषदेवताऽधिष्ठानो मन्त्रः, अन्यदा तद्विनेयानां, गलितानां परस्परम् । एवं-
द्धाख्ये, बहुशिष्यसमन्विताः । विहरन्तः समाजग्मुः, सूरयो गुणभूरयः ॥ १ ॥ कदापि न ददात्येष, श्रमणेभ्यस्तु किञ्च-
विधः समुल्लापः, समानवयसामभूत् ॥ २ ॥ यदत्र ऋद्धिमानस्ति, सौगतानामुपासकः । प्राज्यमाज्यं गुडं वस्त्रं,
न ॥ ३ ॥ तदस्ति कोऽपि यस्तस्मादपि दापयितुं क्षमः । एकः प्राह व्रती मह्यमनुज्ञां सम्प्रयच्छत ॥ ४ ॥ गतयाऽधि-
दापयिष्याम्यहं ततः । अनुज्ञातः स तैर्यातस्तदीये वासवेश्मनि ॥ ५ ॥ हृद्यया विद्यया सद्योऽप्यभिमन्त्रयति स्म तम् । विलापमकरोदिति
ष्ठितः प्राज्यमाज्याद्यं व्यतरत्तराम् ॥ ६ ॥ संहृत्य विद्यां स्वस्थानमागतेऽस्मिंस्तपोधने । स प्रत्यागतचैतन्यो,
॥ ७ ॥ केनापि पापिना हा मे, घृतप्रभृतिकं हृतम् । मुष्टो मलिम्लुचेनेव, शुचेति विललाप सः ॥ ८ ॥
मन्त्रः पठितसिद्धः, तत्र दृष्टान्तः--प्रतिष्ठानपुरेशस्य, मुरुण्डाख्यस्य भूपतेः । कदाचिदेकदा तीव्रा, बभूव शिरसो व्यथा॥१॥ व्याहृता-
बहुशो विहिते विद्यामन्त्रे तन्त्रविदांवरैः । बभूव न गुणस्तस्य, क्रान्तधातोरिवेशितुः ॥ २ ॥ इतश्च पादलिप्ताख्या, सर्वातिशायिनं
स्तत्र सूरयः । जने चाविदितैस्तैश्च, स्मरद्भिर्मन्त्रमात्मना ॥ ३ ॥ नाशिता नृपतेरार्त्तिः, शिरसो वशिनाऽऽत्मना । ॥ ५ ॥
वीक्ष्य, चमत्कारं नृपोऽतुषत् ॥४॥ हृष्टेन सूरयस्तेनासनाद्यैः प्रतिलाभिताः । इत्थं मन्त्रार्जितः पिण्डो, विज्ञेयो मुनिसत्तमैः॥ चाणक्यो
अथ चूर्णास्त्विरोधनादिकार्यसाधकाः नयनाञ्जनादयः, तत्रोदाहरणम्, पुरेऽभूत्पाटलीपुत्रे, चन्द्रगुप्तो नरेश्वरः ।

नाम तस्यासीन्, मन्त्री मन्त्रविदांवरः ॥ १ ॥ अन्यदा तत्र दुर्भिक्षे, जातवत्यतिदारुणे । जंघाबलपरिक्षीणा, न्यवसंस्तत्र सूरयः ॥ २ ॥ शिष्यं निजपदे न्यस्य, मन्त्रतन्त्रौषधादिकम् । आख्याय च सगच्छं तं, प्राहिण्वन्नन्यनीवृति ॥ ३ ॥ प्रच्छन्नस्थेन च क्षुल्लद्वयेन नयनाञ्जने । चूर्णः श्रुतोऽथ गच्छेन, समं प्रचलितं च तत् ॥ ४ ॥ गत्वा च स्तोकमध्वानं, तद् गुरूत्कण्ठया द्विधा.। आगात् तत्रापरो गच्छस्तूद्दिष्टस्थानकेऽगमत् ॥ ५ ॥ तावागतौ नतौ प्रोक्तौ, गुरुणा करुणावता । वत्सौ ! न रुचिरं चक्रे, व्यावृत्य यदिहागतौ ॥ ६ ॥ स्थातव्यमत्र संतोषपराभ्यामेव केवलम् । यन्नास्ति तादृशी भिक्षालब्धिर्दुर्भिक्षभावतः ॥ ७ ॥ ततः स्वयं गुरुर्भ्राम्यन्, यत्प्राशु लभतेऽशनम् । तत्तयोः प्रथमं दत्त्वा, शेषमत्ति स्वयं पुनः ॥ ८ ॥ ततोऽल्पभोजनाद् वृद्धभावाच्च स्वगुरुं कृशम् । भृशं निरीक्ष्य तौ क्षुल्लाविति संलपतः स्म च ॥ ९ ॥ पातयद्भ्यां गुरुक्लेशे, गुरुं न रुचिरं कृतम् । आवाभ्यां भोजनोपायमपरं कुर्वहे ततः ॥ १० ॥ ध्यात्वेति यत्पुराऽश्रावि, गुरोः कथयतः सतः । अनुभूतं तदन्तर्द्धौ, विधाय नयनांजनम् ॥ ११ ॥ अनाख्याय गुरोस्तेनांजितनेत्रौ नृपौकसि । भोजनावसरे प्राविशातां दृष्टौ न केनचित् ॥ १२ ॥ राज्ञा सहैव सौहित्यं, यावद् भुक्त्वा च तौ गतौ । नित्यमित्यदनाद् भूपोऽभवत्तनुतनुस्तयोः ॥ १३ ॥ मंत्रिपृष्टोऽवदत् कोऽप्याहारं हरति मेऽग्रतः । चाणक्योऽचिन्तयन् नूनं, कोऽपि भुंक्तेऽस्य भाजने ॥ १४ ॥ ध्यात्वेति तत्परिज्ञानहेतोर्भोजनमन्दिरे । परतोऽपीष्टिकाचूर्णमक्षेपयदसौ रयात् ॥१५॥ द्वितीये दिवसे वीक्ष्य, नवां चरणपद्धतिम् । अथ शेषं विधायाधाद्धूमं नेत्राम्बुकारकम्॥१६॥ अश्रुधौताञ्जनौ तौ च, क्षुल्लौ वीक्ष्य त्रपावशः । वसतौ प्रेषयामास, महामन्त्री चणिप्रसूः ॥१७॥ अहं विट्टालितोऽस्माभ्यामिति खेदजुषं नृपम् । विहितभ्रूकुटिर्मंत्रिमुकुटः स्फुटमूचिवान्॥१८॥ अद्य ते सफलं जन्म, तवाद्य विमलं कुलम् । यदाभ्यां पितराभ्यां त्वं, विहितः संविभागभाक्॥१९॥

४ प्रव्रज्यास्वरूपे उत्पादना दोषाः १६

प्रत्युपालभ्यतेति सः ॥ २० ॥ त्वयि श्राद्धे क्षुधाक्रान्तौ,
तं सम्बोध्येति मन्त्रीश।, स्वयं वसतिमेत्य च । उपालम्भकृदाचार्यैः, मम क्षमत विप्रियम् । इतःप्रभृति
यदेतौ धर्म्मवर्जितौ । अपराधस्तवैवार्य, न त्वन्यस्य महत्तमः ॥ २१ ॥ अथांह्रिलग्नो मन्त्र्याह, कथितश्चूर्णपिण्डोऽयं, योग-
मे चिन्ता, यतीनां निखिलाऽपि हि ॥ २२ ॥ उक्त्वेति यावद् दुर्भिक्षं, भिक्षुचिन्तां चकार सः । तथा ह्यभी-
पिण्डं निबोधत ॥२३॥ योगाः सौभाग्यदौर्भाग्यकरा भैषजमीलनैः । प्रयुज्यमानाःपिण्डार्थं, यतीनां दोषकारकाः॥१॥ ब्रह्मद्वीपोऽभिधा-
रदेशेऽस्ति, नाम्नाऽचलपुरं पुरम् । तस्यादूरे च नद्यौ स्तः, कण्हाबेन्नाभिधानके ॥ २ ॥ तयोर्मध्येऽस्ति च द्वीपो, याति
नतः । आस्ते कुलपतिस्तत्र, यतिपञ्चशतीयुतः ॥ ३ ॥ स सदाऽप्यौषधिलिप्तपादुकारूढ एव हि । उत्तीर्य तटिनीं बेन्नां, अथार्यस-
श्रद्धावतां गृहे ॥ ४ ॥ सत्कारं कुरुते लोकस्तस्मै च श्लाघतेऽन्वहम् । निन्दति श्राद्धलोकं च, निष्प्रभावगुरुत्वतः ॥५॥ पादुकालेपकैतवे ।
मिताचार्यास्तत्रेयुर्वज्रमातुलाः । सबाष्पैः श्रावकैस्तेभ्यः, स वृत्तान्तो निवेदितः ॥ ६ ॥ सूरिभिः कथिते तस्य, न्यस्य, बहु-
भक्तियुक्तैरिव श्राद्धैर्नीतः कुलपतिर्गृहम् ॥ ७ ॥ बलात् प्रक्षाल्य तत्पादौ, पादुके चापि तज्जलम् । स्वकीयशिरसि ॥ ९ ॥ भोज-
मानेन भोजितः ॥ ८ ॥ श्रावकैर्भोज्यमानोऽपि, बहुमानोद्भटैरयम् । धृतिं नाप वधस्थानं, नीतो वध्यः पशुर्यथा घना ।
नानन्तरं सर्वे, जनास्तेन सहाययुः। स धृष्टः पादलेपस्य, भ्रमाद्यां विवेश च ॥ १० ॥ लग्नश्च ब्रूडितुं तस्याभूदपभ्राजना यियासामि
अथार्यसमिताचार्यस्तत्रागच्छदतुच्छधीः ॥११॥ बहोर्लोकस्य बोधाय, दत्वा चप्पुटिकां च सः । प्राह बेन्ने! परं पारं, धर्म्मकथा-
शुचे ! तव ॥ १२ ॥ ततश्च मिलिते कूलयुगले विस्मितो जनः। सूरयश्च युताः पौरैस्तापसाश्रममाययुः ॥ १३ ॥ तत्र पुरमाययुः ।
ख्यानाज्जनः सम्बोधितो बहुः । तथा प्रव्राजिता पञ्चशती तेषां तपस्विनाम् ॥ १४ ॥ इत्थं शासनमुद्भास्य, सूरयः

सा ब्रह्मद्वीपगा शाखाऽभवच्चागमविश्रुता ॥ १९ ॥ एतानि च भूतिकर्म्मादीनि पिण्डार्थं कुर्वतां दोषाय स्युः, न पुनः पुष्टालम्बनेऽपि, यदुक्तं कल्पभाष्ये–"एयाणि गारवट्ठा कुणमाणो आभिओगियं बंधे । बीओ गारवरहिओ उच्चं आराहगत्तं च ॥ १ ॥ 'बीयं' ति द्वितीयं अपवादपदं प्राप्य गौरवरहितः कौतुकादीनि कुर्वन्नप्याराधकः 'उच्चं' उच्चैर्गोत्रं च बध्नाति । अथ मूलकर्म्मलक्षणं षोडशं दोषमाह, तद्धि महापापरूपं पिण्डार्थं सर्वथा न कार्यमिति ॥

अथ दशैषणादोषानाह-तत्र शंकितं सम्भाविताधाकर्म्मादिदोषं भक्तादि १ म्रक्षितं–आरुपितं २ निक्षिप्तं–न्यस्तं ३ पिहितं-स्थगितं ४ संहृतं–अन्यत्र क्षिप्तं ५ दायको-दाता तदशुद्धं ६ 'उन्मिश्रं' मिश्रीकरणं ७ अपरिणतं-अप्राशुकादि ८ लिप्तं-खरण्टितं ९ छर्दितं-परिशटितं १० इति पिण्डग्रहणदोषा दश भवन्ति, तत्र शंकिते चतुर्भंगी-शंकितं गृह्णाति शंकितं भुंक्ते १ शंकितं गृह्णाति निश्शंकितं भुंक्ते२ निःशंकितं गृह्णाति शंकितं भुंक्ते३निःशांकितं गृह्णाति निःशंकितं भुंक्ते४, द्वितुर्यौ शुद्धौ १॥ म्रक्षितं द्विधा-सचित्तम्रक्षितमाचित्तम्रक्षितं च, आद्यं त्रिधा-भूदकवनम्रक्षितत्वात्, तेजोवायुभ्यां म्रक्षितत्त्वायोगात् प्रथमं, अचित्तम्रम्रक्षितं तु लोकनिन्द्यानिन्द्यवस्तुभ्यां म्रक्षणभेदाद् द्विधा २॥ अथ निक्षिप्तं भूदकाग्निपवनवनत्रसेषु निक्षिप्तमचित्तमप्यग्राह्यं भवति३, पिहिते चतुर्भंगी, सचित्तेन सचित्तं पिहितं १ अचित्तेन सचित्तं२ सचित्तेन अचित्तं ३ अचित्तेनाचित्तं ४, आदित्रिकं हेयं, तुर्यः शुद्धः४॥संहृतदोषस्तु दानायोग्यं वस्तु पृथ्वीकायादौ क्षिप्त्वा तेनैव करोटिकादिना देयं वस्तु साधोर्दत्ते, तदपि निक्षिप्तवत्तुर्यभङ्गे कल्पत इति५॥ दायकास्तु स्थविरअप्रभुपण्डककम्पमानगात्रज्वरितमत्तच्छिन्नकरक्रमनिगाडितपादुकारूढा हेयाः, तथा खण्डकपेषकभर्जकर्त्तकलोढकरूतविक्षेपकपिञ्जकदलकविलोडकजेमकगुर्विणीबालवत्साश्च हेयाः ६ ॥ तथा उन्मिश्रं सचेतनमचेतनं च मिश्रीकृत्य ददाति,

तत्रापि चतुर्भङ्ग्यामचित्तमिश्रं ग्राह्यमिति ७॥ अथापरिणतं- द्रव्यं देयं वस्तु न शुद्धं, भावो वा दायकस्याशुद्धः, अथवा द्वयोर्दायकयोरेकस्य भावापरिणतं, अथवा द्वयोः श्रमणयोरेकस्य मनसि शुद्धं इतरस्य न तथा स्यात् तदा न ग्राह्यमिति ८॥ लिप्तदोषसंसृष्टं, करमात्रकसावशेषद्रव्यैरष्टौ भङ्गाः, यथा संसृष्टो हस्तः संसृष्टं मात्रं सावशेषं द्रव्यं १, संसृष्टो हस्तः संसृष्टं मात्रं निरवशेषं द्रव्यं२, संसृष्टो हस्तोऽसंसृष्टं मात्रं सावशेषं द्रव्यं३, संसृष्टो हस्तोऽसंसृष्टं मात्रं निरवशेषं द्रव्यं ४ असंसृष्टो हस्तः संसृष्टं मात्रं सावशेषं द्रव्यं ५, असंसृष्टो हस्तः संसृष्टं मात्रं निरवशेषं द्रव्यं ६, असंसृष्टो हस्तः असंसृष्टं मात्रं सावशेषं द्रव्यं ७ असंसृष्टो हस्तोऽसंसृष्टं मात्रं निरवशेषं द्रव्यं ८, सावशेषद्रव्यभङ्गेषु ग्राह्यं, परेषु हेयमिति ८॥ छर्दिते मधुबिन्दुदृष्टान्तः,-तथा ह्यस्ति पुरी चम्पा, सस्यसम्पातसुन्दरा। निष्कम्पा परसैन्यैस्तु, शम्पा विश्वभूरुहाम् ॥१॥ तत्र मित्रप्रभो द्वेषितिमिरर्धिकदम्बके। नृपो मित्रप्रभो नाम, पद्मोल्लासकरैः करैः ॥२॥ लक्ष्मीसंचारिणी तस्य, चिन्तासन्तापहारिणी। देवी तु धारिणी नाम, शीलादिगुणहारिणी ॥ ३ ॥ तस्यास्ति सचिवो धर्म्मघोषः पोषयिता श्रियः। प्रियंगुसात्म्यतस्तस्य, प्रियंगुर्नामतः प्रिया ॥ ४ ॥ अपरा अपि सन्त्यस्य, दयिता दयिताहृदः। ताभिः करेणुभिः कालं, करेणुरिव सोऽनयत् ॥ ५ ॥ तत्रास्ति धनमित्राख्यः, सार्थवाहो महाधनः। द्विधापि चित्तप्रेयस्या, राजमानो धनश्रिया॥६॥ तस्योपयाचितशतैर्यान्तितस्तनयोऽजनि। स्वकायप्रभया दीप्तः, प्रभां तन्वन्नतिप्रभाम् ॥७॥ अजाते तत्र सञ्जाते, धनमित्रो धनाधिपः। मुदितो विदधे वर्द्धापनमृद्ध्यनुसारतः ॥८॥ सुजातमस्य यो जातः, कुलेऽस्मिन् धनसंकुले। अस्तोकमिति लोकस्य, गिराः सर्वत्र निस्सृताः ॥ ९ ॥ इत्याकर्ण्य वचः कर्ण्यं, जनकौ जनसम्मतं। विदधाते तस्य नाम, सुजात इति विश्रुतम् ॥ ९ ॥ तेन प्रवर्द्धमानेन, कलाकौशलशालिना। रूपेण च

कलाभिश्च, विबुधत्वमुपाददे ॥ १० ॥ सुश्रावककुलोत्पत्त्या, सततं साधुसङ्गमात् । परमः श्रावकः सोऽभूद्, विचाराचारशिक्षितः ॥ ११ ॥ स्वमूर्त्तिनिर्जितानङ्गमूर्त्तिप्रस्फूर्त्तिरप्ययम् । शमेन स्थायिभावेन, शान्तो रस इवाभवत् ॥ १२ ॥ इतश्च धर्म्मघोषस्य, मन्त्रिणः प्रेयसीगणः । आक्षिप्तहृदयो जातः, सुजातगुणसम्पदा ॥ १३ ॥ प्रियंगुरन्यदा प्राह, स्वप्रेष्यां प्रियया गिरा । आयान्तमध्वनाऽनेन, सुजातं मे निवेदयेः ॥१४॥ अथैष ससुहृद्वृन्दो, वृन्दारक इवौजसा । आगच्छन्नध्वना तेन, प्रेष्ययाऽस्यै निवेदितः ॥१५॥प्रियंगुः स्वसपत्नीभिर्वयस्याभिरिवान्विता । रूपं नेत्रामृतं तस्य, पिबति स्म तृषातुरा ॥ १६ ॥ वदति स्म च सा धन्या, नारी नारीजनेऽखिले । वरो वरतरो यस्या, एष निःशेषसुन्दरः॥१७॥ प्रियंगुरन्यदा चान्यसपत्नीमध्यचारिणी । सुजातवेषमाधाय, रमते तस्य चेष्टया॥१८॥ तदा मन्त्र्यागतो हित्वा, क्वणत् प्राणहितायुगम् । कपाटच्छिद्रेणापश्यत् , सर्वाः प्राणहितास्तथा॥१९॥ दध्यौ च सर्वशुद्धान्तोऽशुद्धांतोऽयमभूद् ध्रुवम् । माऽऽशंकंतामतो भिन्ने रहस्ये छन्नमस्तु तत् ॥ २० ॥ कुपितेन सुजाताय, कूटलेखस्य दर्शनैः । नृपतिं कोपयित्वा स, वचनीयभयेन च ॥२१॥ प्रेषितोऽरक्षुरीपुर्यां, चन्द्रध्वजनृपान्तिके । वध्योऽयमविचार्येदं, लिखितं तस्य मन्त्रिणा ॥२२॥ युग्मम् ॥ सुजातस्तत्र यातश्चानमच्चन्द्रध्वजं नृपम् । तं लेखमार्पयच्चास्य, निर्विकारास्य एव सः ॥ २३ ॥ दध्यौ नृपस्तु विश्वस्तो, विघात्योऽयमुपायतः । ध्यात्वेति रमते तेन, सह सर्वसहापतिः ॥२४॥ सुचिरं रुचिरं वीक्ष्य, तस्याचारं विचारकः । अचिन्तयन्नृपो हन्मि, नृरत्नं कथमीदृशम्?॥२५॥ ध्यात्वेति विजने तस्याख्याय लेखमदर्शयत् । सुजातः प्राह यद्वेत्सि, तद् विधेहि निजेहितम् ॥२६॥ नृपतिः प्राह नाहं त्वां, हन्मि गुप्तं पुनर्वस । उक्त्वेति स्वस्रसा तस्य, दत्ता त्वग्दोषदूषिता ॥२७॥ तया चन्द्रयशोनाम्न्या, संगमात् कुष्ठसंक्रमः । ईषदीषदभूत्तस्यास्तुल्यः साऽथ व्यचिन्तयत् ॥२८॥ धिग्मां तिग्मांशुतुल्योऽयं, यः

पुरा निर्जितेजसा । मम सङ्गमतो जातः, सुजातः स तमोमयी ॥ २९ ॥ क्रमद्विपमयैरेभिस्तदलं विपयैर्मम । ध्यात्वे (ग्रं.२ ००)-
ति सा ससंवेगा, जग्राहानशनं सुधीः ॥ ३० ॥ गुरुणेव सुजातेन, तेन निर्यापिता च सा । बभूवायुःक्षये देवोऽवधेर्वेदाखिलं च तत्
॥ ३१ ॥ तत्रागत्य प्रणत्यैनमूचे किं ते करोम्यहं ? । तव प्रसादतोऽहं यद्, देवीभूताऽस्मि ते प्रिया ॥ ३२ ॥ सोऽतीव तीव्रसं-
वेगी, दध्यावध्याममानसः । पितरौ प्रेक्ष्य गृह्णामि, व्रतं चेद् रुचिरं ततः ॥ ३३ ॥ इति पूतं तदाकूतं, ज्ञानाद्विज्ञाय निर्जरः ।
समं तेन समागच्छच्चम्पोद्यानं विमानगः ॥ ३४ ॥ विमुच्य तत्र तं देवो, विकुर्वितां महाशिलाम् । बभारोपर्ययं पुर्या, गर्जाया
अपिधानतः ॥ ३५ ॥ ततः पौरा परित्रस्ताः, प्राणत्राणपरायणाः । हस्तविन्यस्तसद्धूपदहनाः शिरसा नताः ॥ ३६ ॥ प्रोचिरे
यस्य कस्यापि, देवस्य दनुजस्य वा । अपराधः कृतोऽस्माभिः, प्रसद्य क्षमतां स नः ॥ ३७ ॥ देवः प्रोवाच हे दासाः !, क्व
प्रयास्यथ सम्प्रति ? । पापेन मन्त्रिणा श्राद्धः, सुजातो दूषितो मुधा ॥ ३८ ॥ चूरयिष्यामि तद्युष्मान्, यद्वाऽत्रानीयतामयम् ।
नम्यतां क्षम्यतां चापि, कार्यं चेज्जीविते भवेत् ॥ ३९ ॥ स क्वास्तीति जनैरुक्तेऽवदत् त्रिदशपुङ्गवः । चम्पोद्याने तथा भूपः, स-
पौरोऽक्षमयच्च तम् ॥ ४० ॥ स नृपं पितरौ स्वौ चापृच्छ्य संयममाददे । पश्चात्तत्पितरौ सर्वाण्यप्यगुः परमं पदम् ॥४१॥ सचिवो
धर्म्मघोपस्तु, राज्ञा निर्विपयीकृतः । दध्यौ हहा महापापोऽहं घोरं कर्म्म निर्म्ममे ॥ ४२ ॥ भोगेपु भोगिभोगेपु, लुब्धेन मयका
हहा । सुजाते जातरूपेऽत्र, कालिकां कलता किल ॥ ४३ ॥ ध्यायन्निति विरक्तात्मा, गतो राजगृहे पुरे । स्थविरान्ते व्रतीभूत्वा,
गीतार्थो व्यहरत् क्रमात् ॥ ४४ ॥ वारत्तपुरमायातोऽभयसेनस्य भूपतेः । वारत्तकाख्यमन्त्र्योको, भिक्षार्थी प्रविवेश च॥ ४५ ॥
तत्र दाननियुक्तेन, परमान्नेन पूरितम् । ढौकितं मुनये स्थालं, घृतेन मधुना युतम् ॥ ४६ ॥ भाजनान्मधुनो बिन्दुरेकः पृथ्व्यां

पपात च । मत्वा छर्दितदोषं स, तदनादाय निर्गतः ॥ ४७ ॥ वातायनस्थितो मंत्री, वारत्तो वीक्ष्य तद् हृदि । दध्यौ किं मुनिनाऽनेन, भिक्षाऽग्राहि पराऽपि न ॥ ४८ ॥ इति चिन्तयतस्तस्य, क्षुद्राः क्षौद्रेण लिल्यिरे । ताश्चानु प्रपतत् पल्ली, तां चानु कृकलाऽशितुम् ॥ ४९ ॥ अत्तुं तमपि मार्जारः, पथिकः श्वा च तं प्रति । वास्तव्यशुनकस्तं च, कलहोऽभूत्तयोर्मिथः ॥५०॥ श्वानयोः स्वामिनौ पश्चात्, तद्गृह्या मिलिता मिथः । ततः प्रववृते युद्धं, कुन्ताकुंति शराशरि ॥५१॥ तत्र वारत्तको वीक्ष्य, संख्येऽसंख्यजनक्षयम् । दध्यौ न मुनिनाऽऽदायि, भिक्षाऽनेनैव हेतुना ॥५२॥ धर्म्मः सम्यगयं रम्यः, श्रीसर्वज्ञेन भाषितः । धन्याश्च मुनयोऽमी ये, वर्त्तन्ते तस्य शासने ॥५३॥ नस्येति शुभभावस्य, जातिस्मृतिरजायत । देवतार्पितवेषः प्राग्, मुद्रामुज्झांचकार च ॥ ५४ ॥ ग्रहणासेवनाशिक्षाविशदो विहरन् क्रमात् । शुंशुमारपुरं प्राप, स निष्पापशिरोमणिः ॥ ५५ ॥ तत्रापि धुन्धुमारस्य, राज्ञोऽगारवती सुता । सा च सर्वज्ञसिद्धान्ते, कुशला श्राविका कनी ॥ ५६ ॥ तया वादे जिता प्रव्राजिका चेतस्यचिन्तयत् । पातयामि सपत्न्यन्तरिमां पाण्डित्यगर्विताम् ॥ ५७ ॥ ध्यात्वेत्यालिख्य तां चित्रपटे प्रद्योतभूपतेः। आदर्शयदथापृच्छन्नृपः केयं सुलोचना? ॥ ५८ ॥ यथातथेऽनयाऽऽख्याते, दूतं प्रद्योतभूपतिः । प्राहिणोद् धुन्धुमाराय, स गत्वा तं जगाद च ॥ ५९ ॥ मन्मुखेन च त्वां स्वामी, श्रीप्रद्योतो वदत्यदः । देहि मह्यं निजां पुत्रीं, युद्धसज्जो भवाथवा ॥ ६० ॥ श्रुत्वेति धुन्धुमारेण, सरुषा परुषाक्षरैः । दूतो निर्वासितः सर्वमाख्यात् स्वस्वामिनोऽधिकम् ॥ ६१ ॥ ततोऽवन्तिपती रोषात्, सर्वसैन्यसमन्वितः । शुंशुमारपुरं मार इवारौत्सीन्मनःपुरम् ॥ ६२ ॥ धुन्धुमारः स्वमबलं, वैरिणं च महाबलम् । मत्वा पप्रच्छ दैवज्ञं, सोऽपि डिंभानभापयत् ॥ ६३ ॥ प्रणश्य तानि त्रस्तानि, नागमन्दिरमध्यगम् । वारत्तगमुनिं जग्मुर्मा भैष्टेति च सोऽवदत् ॥६४॥ दैवज्ञोऽथ मुनेर्वाक्यं, तं नृपाय न्यवेदयत् ।

निःसंशयो जयो देव !, भवतोऽत्र भविष्यति॥६५॥उदश्रुतिबलेनैष, दत्त्वाऽवस्कन्दमात्मना। धृत्वा प्रद्योतमानैपीन्, मानैपी धुन्धुमारराट् ॥ ६६ ॥ उत्तमोऽयं गृहायात, इत्यङ्गारवतीं सुताम्। प्रद्योताय पिता प्रीतः, प्रादादुदवहत् स ताम् ॥६७॥ प्रद्योतभूपः प्रेयस्याऽगारवत्याऽपि संगतः। सम्प्राप स्मरसन्तापनिर्वापणमिहाद्भुतम् ॥ ६८ ॥ अन्यदाऽल्पबलं वीक्ष्य, नृपं प्राह प्रियामयम्। भद्र ! कथं गृहीतोऽहं?, साऽवदन्मुनिवाक्यतः ॥ ६९ ॥ प्रद्योतोऽथ गतः प्राह, हसन् दैवज्ञ! वन्द्यसे। उपयुक्तः स डिम्भानां, मा भीरित्यस्मरद्वचः ॥ ७० ॥ इत्युक्ताः पिण्डस्य द्वाचत्वारिंशद्दोषाः, प्रस्तावात् पंच ग्रासैपणादोषा अपि कथ्यंते, तत्र रसगृद्ध्या संयोजनं कुर्वतः संयोजनादोषो, न तु ग्लानत्वादौ १, द्वात्रिंशत्कवलप्रमाणातिरिक्तं न भुञ्जीत, अजीर्णादिदोषहेतुत्वात् २, रागेणाऽशनतश्चरणेन्धनेऽङ्गारदोषः ३, द्वेषेणानिष्टं अशनतश्चरणेन्धने धूमदोषः ४, क्षुद्वेदनाशमनगुरुवैयावृत्त्यविधानसंयमरक्षणस्वाध्यायविधानप्राणरक्षणईर्याविशोधनरूपैरेव कारणैर्भोक्तव्यं, न तु रूपबलहेतोरिति ५, इत्युक्ता द्विचत्वारिंशद्दोषा भोजनदोषाश्च पञ्च इति गाथार्थः ॥ ४ ॥ अथ तुर्यद्वार तृतीयगाथार्थः,—

इरियाइपंचसमिईहिं तीहिं गुत्तीहिं तवविहाणंमि। निच्चुज्जुत्तो अममो अकिंचणो गुणसयावासो ॥ ५ ॥

एवंविधः साधुर्भवतीति गम्यते, 'इरियाइपंचसमिईहिं' ईर्यादिभिः पंचभिः समितिभिस्तिसृभिश्च गुप्तिभिरुपलक्षितः, तपोविधाने च नित्योद्युक्तः, पुनः कथंभूतः?-' अममः ' स्वजनप्रभृतिषु ममत्वरहितः, तथा अकिञ्चनः-न किंचनास्यास्ति अकिंचनः, निष्परिग्रह इत्यर्थः, गुणानां-मूलगुणोत्तररूपाणां सदावासो भवति स मुनिरिति संक्षेपार्थः। तपोविधाने बाह्ये षष्ठाष्टमादिरूपे अभ्यन्तरे च साधुवैयावृत्त्यरूपे तत्फले च स प्राच्यभवे वसुदेवो दृष्टान्तः, तथाहि—नन्दिग्रामे चक्रवरद्विजसोमिलयोः सुतः।

नन्दिषेणाभिधस्तस्य, बाल्येऽपि पितरौ मृतौ ॥ १ ॥ वर्द्धितो मातुलेनायमेष निर्भाग्यशेखरः । आकेशाग्रनखाग्रं स, कुरूपो दुर्भगः कुधीः ॥ २ ॥ विप्रलब्धोऽन्यदा लोकैरुद्वाहे मातुलेन सः । स्थिरीकृतः सुताः सन्ति, मम सप्तेति जल्पता ॥३॥ तास्वेका काऽपि ते देया, मातुलेनेति भाषितः । गृहकर्म्माणि सर्वाणि, करोति प्रतिवासरम् ॥४॥ ज्येष्ठपुत्र्याऽन्यदा प्रोचे, नन्दिषेणाय दास्यति । तातश्चेन्मां कृतान्तस्य, भविष्याम्यतिथिस्ततः ॥ ५ ॥ इत्थं सप्तभिरप्येष, निषिद्धो दुर्भगाग्रणीः । कन्यां ते दापयिष्येऽन्यामित्यूचे मातुलेन सः ॥६॥ निरूपयन्त्योऽरूपं मां, चेन्न स्वजनकन्यकाः । तत् कथं नाम नामापि, सहन्ते मेऽन्यकन्यकाः? ॥ ७ ॥ ध्यात्वेत्यगाद्रत्नपुरे, प्रेक्ष्य युग्मानि पीडितः। मुमूर्षुः सुस्थिताचार्यैर्बोधयित्वा व्रतीकृतः॥ ८ ॥ आत्तव्रतः क्रमान्नन्दिषेणो गीतार्थतां गतः । जग्राहाभिग्रहं ग्लानप्रतिजागरणे गुरोः ॥ ९ ॥ प्रतिज्ञामस्य सुत्रामा, संसदि प्रशशंस च । देवः कोऽप्यसहिष्णुस्तत्तत्परीक्षार्थमाययौ ॥ १० ॥ रूपेणैकेन स ग्लानसाधुमूर्त्त्या द्वितीयया । तं षष्ठपारणायात्तग्रासं गत्वेदमूचिवान् ॥ ११ ॥ क्षुत्तृषार्त्ते मुनौ सातिसारे सति पुराद्बहिः । वैयावृत्त्ये प्रतिज्ञाय, किं भोक्तुं युज्यते तव ? ॥ १२ ॥ नन्दिषेणोऽथ मुक्त्वाऽन्नमन्वेष्टुं पानमुद्यतः । लब्ध्या सुरकृतानेषणीयं जित्वाऽम्बु चासदत् ॥१३॥ जगाम च द्रुतं ग्लानं, चुक्रुशे तेन स क्रुधा । घस्मरं त्वामपि ग्लाने, धिग् वैयावृत्त्यनिश्चितम् ॥ १४ ॥ निजागः क्षमयन्नन्दिषेणो मलमधावयत् । उत्तिष्ठेति ब्रुवन् मायाव्रतिना चुक्रुशे पुनः ॥ १५ ॥ अक्षमं नेक्षसे किं मां ?, ततोऽसेऽप्यधिरोपितः । ऊचे धिग्मुण्ड! वेगेन, वेगभंगं करोषि मे ॥ १६ ॥ व्यधाद् वर्चोऽतिदुर्गन्धं, तस्य मन्दपदं यतः । कथं पटुरयं भावीति दध्यौ स महामनाः ॥ १७ ॥ ज्ञात्वाऽवधेस्तमक्षोभ्यं, दुग्धाशयमथामरः । गोशीर्षचन्दनेनोच्चैर्विलिलेप मुनेस्तनुम् ॥१८॥ नत्वा प्रदक्षिणापूर्वमाख्यदिन्द्रकृतां स्तुतिम् । स्वकीयं क्षामयित्वाऽऽगः, किं ददामीति

तं जगौ ? ॥ १९ ॥ मुनिनोक्तं जिनस्योक्ते, लब्धेऽन्यत् किं नु याच्यते ? । लब्धे चिन्तामणौ को नु, तत्परः प्रस्तरे भवेत् ?
॥ २० ॥ तेनेत्युक्तो दिवं देवो, गतिर्नेरातिमागतः । पृष्टो मुनिजनैर्व्यक्तमनुदितक्तं शशंस सः ॥ २१ ॥ द्वादशाब्दसहस्रान्ते,
स्मृत्वा दौर्भाग्यमुत्कटम् । स्त्रीवाल्लभ्यनिदानेनोऽनशनी शुक्रमासदत् ॥ २२ ॥ इतः सौरिपुरे राज्ञोऽन्धकवृष्णेः सुता नव ।
जज्ञिरे श्रीसुभद्रायां, समुद्रविजयादयः ॥ २३ ॥ नन्दिषेणस्य जीवोऽथ, महाशुक्रदिवश्च्युतः । दशार्हो दशमो जज्ञे, सुरूपः
सुभगाग्रणीः ॥ २४ ॥ समुद्रविजयं राज्ये, विन्यस्यान्धकवृष्णिना । सुप्रतिष्ठान्मुनेराप्तव्रतेनाप्तादि निर्वृतिः ॥ २५ ॥ निधिभि-
र्नवभिर्भक्त्या, सेव्यमानोऽनुजन्मभिः । समुद्रविजयो राजा, रेजे चक्रीव जंगमैः ॥ २६ ॥ वयस्थो वसुदेवः स्त्रीनेत्रमानसमोहनः ।
सरःपद्म इवालीभिः, पौरस्त्रीभिरवेष्ट्यत ॥ २७ ॥ तासां समस्तवस्तूनां, वस्तूनां विस्मृतेऽभ्यभूत् । सर्वत्र वसुदेवाख्या, युगान्ते
जलपूरवत् ॥ २८ ॥ यः पङ्गुर्दुर्भगो दूरीकृतः स्त्रीभिः पदेऽपि । स्नस्तः क्षीर्ये सपत्नीभिः, कुम्भत्वे वह्निसाधनात् ॥ २९ ॥ सर्वा-
सामपि रामाणां, वसुदेवैकचेतसाम् । श्वश्रूननान्दृजामातृज्ञातेयो हृदि नावसत् ॥ ३० ॥ वसुदेवाङ्गसौभाग्यविह्वलं रमणीजनम् ।
पौरा वीक्ष्य नृपस्याख्यन्निति विज्ञानशङ्किनः ॥ ३१ ॥ समुद्रविजयेनाथ, स्नस्नेहात्संगे निजोऽनुजः । आभाषि दुर्बलोऽभूस्त्वं, बहि-
र्भ्रान्त्या ततस्त्वया ॥३२॥ स्थेयं सदा सदागारे, कलाभ्यासं वितन्वता । तथेति प्रतिपन्नाऽसौ, स सौधवनमध्यस्थितः ॥३३॥ युग्मम्॥
प्रहितं शिवया देव्या, समुद्रविजयं प्रति । सोऽन्यदा चन्दनं चेटीहस्तादुज्जग्राह नर्मणा ॥ ३४ ॥ सोचे स्त्री नर्मदोषेण, त्वमत्रासि
नियन्त्रितः । तं मत्वा निशि वार्ष्णेयो, नगरान्निरगात् द्रुतम् ॥३५॥ अनाथमृतकं किंचिद्दग्ध्वा वर्णालिमालिखत् । वसुदेवोऽनले-
ऽविक्षत्, गुरुभिर्दूषितो गुणैः ॥३६॥ विधायेति व्रजन्नेष, विप्रवेषः कदाचन । नार्याऽऽरोप्य रथं निन्ये, स्वग्रामे स्वगृहे तथा ॥३७॥

स्नपितो भोजितो यक्षायतनस्थोऽशृणोदिदम् । बन्धुभिर्विदधे सर्वैर्वसुदेवौर्ध्वदेहिकम् ॥ ३८ ॥ अथात्मज्ञाननिर्भीको, वसुदेवः पुरो व्रजन् । पुरे विजयखेटाह्वे, सुग्रीवनृपतेः सुते ॥३९॥ श्यामाविजयसेनाख्ये, परिणीय कलाजिते । सुतं विजयसेनायां, सुषुवेऽक्रूरनामकम् ॥४०॥ युग्मम् ॥ जलावर्त्तसरस्तीरे, सामजं वशयन्नयम् । कुंजरावर्त्तमुद्यानं, विद्याभृद्भ्यां स आहृतः ॥४१॥ तत्र चाशनिवेगस्य, सुतां श्यामामुदूढवान् । श्यामापितृविरोधाचाङ्गारकेण हृतो निशि ॥४२॥ जघान मुष्ट्या तं तेन, मुक्तश्चम्पासरोऽन्तरा । पपात तीर्त्वा तत्तीरे, वासुपूज्यमवन्दत ॥ ४३ ॥ द्विजवेषः स विप्रेणैकेन सार्कं विशन् पुरि । यूनो वीणावतः प्रेक्ष्यापृच्छत्तं सोऽपि चाख्यत ॥४४॥ अस्ति गन्धर्वसेनेति, चारुदत्तवणिक्सुता । वीणायां यो विजेता मां, स नेतेति कृताश्रवा ॥४५॥ वीणाचार्ययशोग्रीवसुग्रीवान्ते तदिच्छया । सर्वेऽमी कुर्वतेऽभ्यासं, न सा केनापि जीयते ॥४६॥ मासान्ते च परीक्षा स्यादिति श्रुत्वा यदूद्वहः । विकृतरूपोऽस्थात्, सुग्रीवान्ते स शिष्यवत् ॥ ४७ ॥ मासान्ते तां समायातां, वैणिकश्रेणिकर्म्मठः । स विद्याद्वयसाक्षिकम् ॥ ४८ ॥ तदुक्त्या विष्णुकुमरात्रिविक्रमपराक्रमम् । गीत्वा निर्जित्य तां वीणावाद्येऽद्भुतकलायुतः ॥४९॥ सुग्रीवयशोग्रीवोपाध्यायकथितखेचरीत्वकथाप्रथः । गन्धर्वसेनां सानन्दो, वृष्णिसूनुरुपायत ॥५०॥ विशेषकम् ॥ चारुदत्तेन अभिरामगुणग्रामः, स श्यामाविजयाह्वये ॥५१॥ उपायंस्त यशोग्रीवसुग्रीवाचार्ययोः सुते । राज्ञां विद्याधरेन्द्राणां, विप्राणां वणिजामपि । कन्याः सहस्रशो जित्वा, कलाभिः स कलाद्भुतः ॥ ५२ ॥ छलेनापि बलेनापि, देशाद्देशान्तरं भ्रमन् । वर्द्धिष्णुस्पर्द्धगर्द्धास्ताः, परितः परिणीतवान् ॥ ५३ ॥ युग्मम् ॥ स कोशलखगाधीशसुतां नाम्ना सुकोशलाम् । कोशलायां पुरि प्राप्य, कदापि परिणीतवान् ॥ ५४ ॥ पेढालपुरनाथस्य, हरिश्चन्द्रस्य नन्दिनीम् । दक्षः कनकवत्याख्यां, श्रीददत्तामुपायत ॥ ५५ ॥ पल्ल्यां पल्लीपतेः पुत्रीं, जराख्यां परिणीय च । तस्यां

जरकुमाराख्यं, स नन्दनमजीजनत्॥५६॥ वसुदेवोऽन्यदा देव्या, कयाऽप्यूचे मया तव। दत्ता रुधिरराट्कन्या, रोहिणी तत्स्वयंवरे
॥ ५७ ॥ व्रज पाणविकीभूय, सोऽथारिष्ठपुरं गतः । जरासन्धादिभूपालमण्डितं मण्डपान्तरम् ॥५८॥ युग्मम् ॥ वरमालाकरा तत्र,
रोहिण्यागात्तदीयदृक् । न तस्थौ राजके शौरिः, पटहेनेति तां जगौ ॥५९। एह्येहि नृविशेषज्ञे !, वरस्त्वदुचितोऽस्म्यहम् । तच्छ्रुत्वा
रोहिणी तस्य, वरमालां गले न्यधात्॥६०॥ क्षुभितं राजकं सर्वं, तया पाटहिके वृते। कुलीनयाऽकुलीनोऽयं, वृतश्चैवमुपाहसत् ॥६१॥
सौरिः प्राह कुचक्रस्य, कौलीन्यं दर्शयाम्यहम् । जरासन्धो वधायास्य, ततो भूपान्न्ययोजयत् ॥६२॥ रुधिरोऽथ ससैन्योऽपि, तदा
शौरेः पुरोऽस्फुरत् । न्यस्तवान् सारथीभूय, शौरिं दधिमुखो रथे॥६३॥तथा वेगवतीमात्राङ्गारवत्या समर्पितम् । कार्मुकं च निषंगौ
च, विग्रही शौरिरग्रहीत्॥६४॥ नृपैर्महाबलैः क्षिप्ते, रुधिरे युधि रेणुवत्। शौरिः शूर इव ध्वान्तान्, ध्वस्तवांस्तान्निजौजसा॥६५॥
जरासन्धस्ततोऽवादीत्, समुद्रविजयं प्रति । न पाटहिकमात्रोऽयं, त्वद्विना नान्यसाध्यरुक् ॥ ६६ ॥ रोहिणी ते जिते चास्मिन्भि-
त्युक्तः शौरिरालपत् । परदारैरलं त्वेनं, त्वदादेशाज्जयाम्यहम् ॥६७॥ अथोच्चैर्युयुधाते तौ, शौरी दूरीभवद्वरौ । कृतप्रतिकृतप्रीतैः
शौरैः कृतनमस्कृती ॥ ६८ ॥ वसुदेवोऽग्रजं मत्वा, शरं चिक्षेप साक्षरम् । सोऽवाचयच्छलाधातो, वसुदेवो नमाम्यहम् ॥ ६९ ॥
समुद्रो वत्स ! वत्सेति, वदँस्तमभि धावितः । प्रीतिमान् वसुदेवोऽपि, नतस्तेनाभिपस्वजे ॥ ७० ॥ पृष्टोऽग्रजन्मना सर्वं, स्ववृत्तं
स न्यवेदयत्। ज्ञातयोग्योद्वहा हार्दे, ते सर्वे मुदिता नृपाः ॥ ७१ ॥ रोहिणीं वसुदेवोऽथ, पुण्येऽह्नि परिणीतवान् । जरासन्धादयो
जग्मुः, सकंसा यादवाः स्थिताः ॥७२॥ धृद्धा कापि सदस्येत्यान्यदोचे वृष्णिनन्दनम् । बालचन्द्रावेगवत्यौ, दिदृक्षू त्वां ममात्मजे
॥ ७३ ॥ श्रुत्वेति सम्मुखं पश्यन्, ज्येष्ठेनोक्तोऽनुज ! व्रज । पूर्ववत्तु चिरं मा स्था, इत्युक्तः स ययौ दिवा ॥ ७४ ॥ समुद्रः

स्वपुरेऽथागात्तल्लघुः परिणीय ते । कन्याः शौरिपुरे सर्वाः, पूर्वोढास्तथाऽऽनयत् ॥७५॥ चतुःस्वप्नसमाख्यातबलत्वसूनुरन्यदा । रोहिण्या सुषुवे रामो, नाम तस्य विनिर्ममे ॥ ७६ ॥ कंसोऽथ मथुरां नीत्वा, वसुदेवपितृव्यतः । देवकान्मृत्तिकावत्या, गत्वाऽयाचत देवकीम् ॥ ७७ ॥ अकारयद्विवाहं च, देवकीवसुदेवयोः । ( देवकः शौरये योत्रे ), स्वर्णाद्यं बहु दत्तवान् ॥७८॥ दशगोकुलयुक्तं च, नन्दं गोकिटिनायकम् । दशार्हो मथुरामागान्नन्दकः सप्रियायुतः ॥७९॥ युग्मम् ॥ महे सुहृद्विवाहस्य, मत्तनृत्यद्वधूजने । कंसानुजोऽतिमुक्तर्षिः, कंसौकोऽन्नार्थमागत् ॥८०॥ तस्य जीवयशाः कण्ठेऽलगत् स नटितस्तया। प्राह माद्यसि यत्प्रीत्या, तस्याः सप्तमगर्भतः ॥ ८१ ॥ वधस्तव पितुः पत्युरित्युक्ते तं विमुच्य च । कंसस्याख्यत्तथा सोऽथ, वसुदेवादयाचत ॥ ८२ ॥ गर्भान् सप्तापि देवक्याः, आदात् प्रीतश्च यादवः। ज्ञाते च मुनिवृत्तान्ते, सत्यसन्धोऽन्वतप्यत॥८३॥ विशेषकम् ॥ इतश्च भद्दिलपुरे, नागस्य सुलसा प्रिया । बाल्ये सा निंदुरुक्ताऽतिमुक्ताख्येन महर्षिणा ॥ ८४ ॥ तयाऽऽराद्धः सुरो ज्ञात्वाऽवधैः कंसेन याचितान् । गर्भास्तस्याः सुतत्वेन, ददौ तुल्यर्तुजन्मकृत् ॥ ८५ ॥ तुल्यजातानजीवांस्तान्, देवक्यै सौलसान् सुतान् । सुलसायै च देवक्याः, सुतान् षड् जीवतो ददौ ॥ ८६ ॥ युग्मम् ॥ दृषद्यास्फालयन् कंसो, नृशंसो निदुनन्दनान् । देवकीसूनवस्ते त्ववर्द्धन्त सुलसागृहे ॥ ८७ ॥ नाम्नाऽनीकयशोऽनन्तसेनावाजितसेनकः । निहतारिर्देवयशाः, शत्रुसेनश्च तेऽभवन् ॥ ८८ ॥ देवक्याऽसाऽयथो स्वप्नाख्यातार्द्धचक्रितं सुतम् । सदैवतं तदा सुप्तास्तज्जनौ कंसयामिकाः ॥८९॥ देवकी प्रियमाहूय, प्राहैनं रक्ष बालकम् । गोकुले नन्दभार्याऽमुं, यशोदा पालयिष्यति ॥ ९० ॥ देवताकृतसान्निध्योद्घाटव्रजकपाटिकः । मुक्त्वा स तं यशोदाऽन्ते, देवक्यै तत्सुतामदात् ॥ ९१ ॥ एवं कृत्वाऽऽगते शौरौ, प्रबुद्धाः कंसयामिकाः। तां कंसायार्पयंश्छिन्नैकनाशां तां च सोऽमुचत् ॥ ९२ ॥ सुतस्तु

गोकुले गोपैः, कृष्ण कृष्ण इतीरितः । बालोऽवर्द्धत तं तत्र, दिदृक्षुर्देवकी ययौ ॥ ९३ ॥ श्रीवत्सलाञ्छनं सूनुमिन्द्रनीलमणि-
प्रभम् । देवकी मुमुदे वीक्ष्य, यशोदोत्सङ्गसङ्गिनम्॥९४॥ बालोऽपि देवसाहाय्यादहन् शकुनिपूतने । यमलार्जुनभंगं च, चक्रे दध्यौ
ततः पिता ॥९५॥ स्वौजसा प्रथमानोऽस्ति, बालोऽयं तस्य रक्षणे । कं मुञ्चामीति स ध्यात्वा, रामं साहायकेऽमुचत् ॥९६॥ सुखं
रामश्च कामश्च, गोपीनां मृत्युभिर्द्विषाम् । मनोरथैश्च बन्धूनां, वर्द्धन्ते सह विष्णुना ॥९७॥ नानाविधाभिः क्रीडाभिः, क्रीडतोस्तत्र
गोपयोः । श्रीरामकृष्णयोरेकादश वर्षाणि जज्ञिरे ॥९८॥ ततः शौरिपुरे श्रीमन्नेमिजन्ममहोत्सवम् । श्रुत्वा दशार्हो दशमो, मथु-
रायां ततान तम् ॥९९॥ कंसस्तत्रागतो वीक्ष्यैकनाशां गणकं जगौ । कोऽप्यस्ति सप्तमो गर्भः?, स आहास्ति तवान्तकः॥१००॥
मुंच वृन्दावनेऽरिष्टं, वृषभं केशनं हयम् । खरमेषौ च दुर्दान्तौ, हनिष्यति स हेलया ॥१०१॥ आरोपयिष्यति स च, शार्ङ्गं काले-
यनागजित् । चाणूरघातकः पद्मोत्तरपंचकहस्तिभित् ॥ १०२ ॥ श्रुत्वेत्यादिश्य योग्यायै, मल्लौ चाणूरमुष्टिकौ । वनेऽमुंचदरि-
ष्टादीन्, स ज्ञातुं निजविद्विषम् ॥ १०३ ॥ गोकुले शल्यतुल्यांश्च, चतसृष्वपि दिक्षु तान् । चतुरश्चतुरः शत्रुक्षये कृष्णोऽनयत्
क्षयम् ॥ १०४ ॥ सदस्यर्चार्थमानाय्य, शार्ङ्गं यो रोपयिष्यति । देया तस्मै सत्यभामा, कंसः वैरीत्यघोषयत्॥१०५॥ धनुषा पर्य
भूयंत, भुजवन्तोऽपि भूभुजः । आद्यो मदनवेगायां, वसुदेवात्मजो रथी ॥१०६॥ चापरोपार्थमायातस्तां निशां गोकुलेऽवसत् ।
रामकृष्णमहास्नेहात्, प्रातः कृष्णं सहानयत् ॥१०७॥ युग्मम् ॥ पथि लग्ने रथे वीक्ष्यानासहं चलनासहम् । कृष्णः पदातिरन्यग्रो,
न्यग्रोधमुदमूलयत् ॥१०८॥ तं च कृष्णबलं वीक्ष्य, बलादेष रथेऽनयत् । मथुरायां गतावेतौ, नृपाक्रान्तं धनुःसदः ॥ १०९ ॥
दृनामन्येक्षणैर्भामा, कृष्णे न्यश्रमयद् दृशम् । पतिते सत्यनाम्न्येयेऽनाधृष्टावहसन् जनाः ॥११०॥ कृष्णस्तल्लीलयाऽऽदायारोपयद्धि-

समये जनम् । स्वं पाणिग्रहणे सत्यभामायाश्च मनोरथम् ॥ १११ ॥ अनाधृष्टिः समारोप्य, गतः कृष्णं रथे पितुः । सदस्याख्यन्मया शार्ङ्गं, धन्वारोप्यत सोऽवदत् ॥ ११२ ॥ नश्यान्यथा नृशंसस्त्वां, ज्ञात्वा कंसो हनिष्यति । श्रुत्वेति कृष्णं मुक्त्वैष, व्रजे निजपुरेऽव्रजत् ॥ ११३ ॥ कंसोऽथ भूपानाहूयादिशन् मल्लान् युधेऽथ तत् । मत्वा कृष्णो बलं प्राह, चित्तं मल्लाहवे मम ॥११४॥ बलस्तदङ्गीकृत्योचे, यशोदां स्नानहेतवे । अलसां तां च दासीत्यध्यक्षिपत् ज्ञापनाकृते ॥११५॥ बलः कृष्णं बलान्निन्ये, स्नानाय यमुनाजले । तं च म्लानमुवाचेति, न त्वं नन्दयशोदयोः ॥ ११६ ॥ कृष्णायाख्यत्ततः पूर्ववृत्तान्तं सकलं बलः । कृष्णो बन्धुवध क्रुद्धोऽङ्गीचक्रे कंसघातनम् ॥ ११७ ॥ यमुनायां गतौ स्नातुं, कृष्णः कालियपन्नगम् । पद्मनालेन नस्तित्वा, वाहयित्वा च मुक्तवान् ॥ ११८ ॥ ततो गोपैर्वृतो गत्वा, मथुरां गोपुरान्तिके । कंससादीरितौ हत्वा, तौ पद्मोत्तरचम्पकौ ॥ ११९ ॥ अरिष्टादिनि हन्तारौ, तावेतौ नन्दनन्दनौ । दर्श्यमानौ जनैरित्थं, मंचेऽस्थातां निजैर्युतौ ॥ १२० ॥ युग्मम् ॥ ततो रामेण रौद्राक्षः, कंसः कृष्णस्य दर्शितः । समुद्रविजयप्रष्ठा, दशार्हा दश दर्शिताः ॥१२१॥ कंसाज्ञयाऽथ चाणूरः, करास्फोटरवोद्धुरः । ऊचे यः कोऽपि वीरोऽस्ति, स मया सह युध्यताम् ॥१२२॥ तदाकर्ण्योत्थितः कृष्णो, भुजास्फोटरवोत्कटः । कंसस्तं घातकं स्वस्य, मत्वा मौष्टिकमादिशत् ॥ ॥ १२३ ॥ कृष्णाभिभूतिभीतेन, रामेणैष खलीकृतः । ततो युयुधिरे कृष्णचाणूरबलमौष्टिकाः ॥ १२४ ॥ तौ हतौ कृष्णरामाभ्यां, प्रेक्ष्य कंसोऽवदत् क्रुधा । रे रे हतैतौ तं नन्दगोपं येन च पोषितौ ॥ १२५ ॥ उत्फालेन वदन्नेवं, मंचात् कृष्णेन पातितः । कंसः केशैः समाकृष्य, तद्गृह्यांश्चारुणद्बलः ॥१२६॥ हते कंसे नृपा अस्य, योद्धुं क्रोधेन धाविताः । त्रासिता वसुदेवोक्त्या, समुद्रविजयादिभिः ॥ १२७ ॥ वसुदेवगृहे याताः, समुद्रविजयादयः । ज्ञापिताः पूर्ववृत्तान्तं, वसुदेवेन बान्धवाः ॥१२८॥ कारा-

कृष्टोग्रसेनेन, सहितैर्यमुनान्तरे । समुद्राद्यैर्जलं दत्तं, न जीवयशसा पुनः ॥ १२९ ॥ सोचे पत्युर्जलं देयं, हते कृष्णे मया किल ।
भामामथोग्रसेनेन, दत्तां कृष्ण उदूढवान् ॥ १३० ॥ क्रोष्टुकिज्ञानसम्मत्या, कृष्णो राज्येऽभिषिच्यत । देवनिर्म्मितहर्म्यायां,
यादवैर्द्वारिकापुरि ॥१३१॥ जातेषु भानुप्रद्युम्नशाम्बभानुकभीरुषु । वसुदेवः कुलस्यास्य, जज्ञे पुण्यैः पितामहः ॥ १३२ ॥ यस्मा-
दान्तरवाग्यतः प्रमुदितः श्रीनन्दिषेणं मुनिं, सुत्रामा प्रशशंस संसदि पुरा देवेन यश्चानतः । द्वैतीयीकभवे त्वहंप्रथमिकापूर्व
वृताङ्घ्रिः सुरस्त्रीणां प्रार्थ्यतमो बभूव तपसे तस्मै न कः श्लाघते ?॥१३३॥ ननु नन्दिषेणभवे भिक्षाचरकुलोत्पन्नस्यापि वर्णज्येष्ठत्वं
वसुदेवत्वे च वंशोत्पत्त्या प्राधान्यमन्यत्रापि सर्वत्र श्रूयते तदत्यन्तहीनकुलोऽपि कश्चन तस्मिन्नेव भवे देवानामपि पूज्यो द्विजन्म-
नामपि मान्यः कथ्यतामित्येवंविधविकल्पनाजालदलनाय मातंगदारकहरिकेशबलर्षिकथोच्यते, तथा हि—

शंखो माथुरराजर्षिः, समेतो हस्तिनापुरम् । मार्गं पप्रच्छ भिक्षार्थं, सोमदेवं पुरोधसम् ॥ १ ॥ तेन द्विष्टेन निर्दिष्टो, मार्गोऽ-
त्यग्निर्मुनिः स तु । गतः सुखेन तद्वीक्ष्य, सोमदेवो व्यचिन्तयत् ॥२॥ मदुक्ताग्निपथेनापि, मुनिः शीताध्वना ययौ । धन्यः शम्येष
पापोऽहं, त्वस्याप्यवमचिन्तकः ॥ ३ ॥ स्वं निन्दन्नेष षट्कर्म्मा, गत्वा नत्वा मुनीश्वरम् । धर्म्मं श्रुत्वा च धर्म्मात्मा, स तस्माद्
व्रतमग्रहीत् ॥ ४ ॥ किंचिज्जातिमदाध्मातः, सुव्रतं पालयन्नपि । विहिताराधनो मृत्वा, स द्विजर्षिः सुरोऽभवत् ॥ ५ ॥ नीचैर्गो-
त्रोदयाच्च्युत्वा, स चूतस्वप्नसूचितः । गंगाप्रस्थबलकोट्टहरिकेशाधिपात्मजः ॥ ६ ॥ चलाक्षो दुर्भगः क्रूरः, कुरूपः कलहप्रियः ।
गिरिनाम्नि कलत्रेऽभूत्, सुतो जीवपुरोधसः ॥ ७ ॥ युग्मम् ॥ बन्धुभिः कलहं कुर्वन्, वृद्धैर्दूरीकृतः स च । अध्यायदहतं वीक्ष्य,
दृतिकं निहतं त्वहिम् ॥ ८ ॥ दोषैः कण्टकवत्त्याज्यो, ग्राह्यश्च स्वर्णवद् गुणैः । सर्वेऽपि हेयास्तद्दोषा, गुणा ग्राह्याश्च धीमता ॥९॥

ध्यात्वेतिं धर्म्मं साधुभ्यः, श्रुत्वा स व्रतमग्रहीत् । बलः स हरिकेशर्षिस्तपोऽत्युग्रमतप्यत ॥ १० ॥ अन्यदा काशीमायासी-दुद्याने तिन्दुके स्थितः । ग्रन्थितिन्दुकयक्षेण, सर्वदा पर्युपासितः ॥ ११ ॥ मित्रेणातिथियक्षेणान्यदोक्तो ग्रन्थितिन्दुकः । मित्र ! किं दृश्यसे नैवा, स प्राह मुनिसेवया ॥ १२ ॥ सेवतेऽतिथियक्षोऽपि, ग्रन्थितिन्दुकवन्मुनिम् । अन्यदाऽतिथिमानिन्ये, स्वारामे ग्रन्थितिन्दुकम् ॥ १३ ॥ विकथां कुर्वतो दृष्ट्वा, तत्र साधून् गतावुभौ । हरिकेशबले बाढमभूतां भक्तिनिर्भरौ ॥ १४ ॥ राज्ञः काशीशितुः कौशलिकस्य तनयाऽन्यदा । भद्राख्या यक्षमायाताऽऽयतने तत्र पूजितुम् ॥ १५ ॥ यक्षप्रदक्षिणादानं, कुर्वती वीक्ष्य तं मुनिम् । मलाविलं निनिन्दोच्चैः, सा कूणितविकूणिका ॥ १६ ॥ मुनिनिन्दावशात् क्रुद्धो, यक्षस्तां विकलां व्यधात् । गता सौधे न निर्भिन्ना, भिषग्भिर्मान्त्रिकैरपि ॥ १७ ॥ दीने राज्ञि गतोपाये, भिषग्मांत्रिकमण्डले । यक्षः प्रत्यक्षतामाप्योवाच वाचं स्फुटामिति ॥ १८ ॥ निन्दितो योऽनया साधुस्तं चेत् परिणयत्यसौ । तदा मुंचामि जीवन्तीमन्यथा वितथा गिरः ॥ १९ ॥ तन्मेनेऽथ नृपः प्रैषीत्, सायमेनां स्वयं वरम् । सा गत्वा प्राह नत्वा तं, प्रभो! पाणिं गृहाण मे ॥ २० ॥ निषिद्धा मुनिना मुन्याकृतिना वटवासिना । परिणीयाखिलां रात्रिं, विडम्ब्य च समुज्झिता ॥ २१ ॥ तन्मत्वा पृच्छति स्मार्तौ, नृपः स्मार्त्तान् वितीर्यते । कस्येयं ? ते जगुस्त्यक्तामृषिपत्नीं द्विजोऽर्हति ॥ २२ ॥ द्विजाय नरदेवोऽथ, रुद्रदेवपुरोधसे । ददौ तां स तया धर्म्मपत्न्याऽमा यज्ञमिष्टवान् ॥ २३ ॥ स मासक्षपको भिक्षुर्भिक्षार्थी यक्षसेवितः । यज्ञवाटागतश्चंडैर्वटुभिश्चेति भाषितः ॥ २४ ॥ यज्ञवाटं प्रविष्टोऽसि, कस्त्वं ? यक्षो मुनिं श्रितः । ऊचेऽहं मुनिरायातो, भिक्षार्थी भवतां गृहान् ॥ २५ ॥ तेऽप्यूचुर्वैप्रमन्नं न, तुभ्यं शूद्राय दीयते । सोऽप्योचद्दीयतां मह्यं, धर्म्मार्थं समताजुषे ॥ २६ ॥ ते प्रोचुर्देवपित्रग्निब्राह्मणेभ्यो वितीर्यते । सफलं तत्र दत्तं स्याद्दत्तं तु

स्वादशां वृथा ॥ २७ ॥ वह्नौ हुतेन देवानां, पितॄणां विप्रभोजनैः । तृप्तिर्भवति गीरेषा, विदुषा केन मन्यते ? ॥ २८ ॥ ब्राह्मणा-न्त्यजयोर्नैव, जन्मना किंचिदन्तरम् । कषायेन्द्रियजेता तु, कर्म्मणा ब्राह्मणो मतः ॥ २९ ॥ तथ्यं न विच्थ ब्राह्मण्यं, धिग्वो मूर्खानिति ब्रुवन् । मुनिर्निहन्तुमारब्धो, वहुभिर्लेष्टुयष्टिभिः ॥ ३० ॥ विशेषकम् ॥ रुधिरं वमतो वीक्ष्य, मुखेन मुनिघातिनः । यक्षेण पातितान् शूद्रान्निश्चेष्टान् भद्रयोदितम् ॥३१॥ येनाहं तातदत्ताऽपि, तदा तृणवदुज्झिता । स एष वन्द्यो देवानां, मुनिर्मूढाः ! खलीकृतः ॥ ३२ ॥ अमुमेव प्रपद्यध्वं, शरणं जीवितेच्छवः । मा कुरुध्वं महामूढाः!, शिरसा गिरिभेदनम् ॥ ३३ ॥ महर्षी रुद्र-देवेन, क्षमितः सद्विजेन सः । प्रत्यलाभि तथान्वर्नैर्वटवः पटवोऽभवन् ॥३४॥ रुद्रदेवो मुनिं प्राह, ब्राह्मण्यं ख्याहि मे प्रभो ! । कषायेन्द्रियजेतृत्वं, ब्राह्मण्यं मुनिराख्यत ॥ ३५ ॥ होमैः सर्वाश्रवान् हुत्वा, संवरस्नानसादराः । भवन्ति ब्राह्मणाः सिद्धिवधू-संबन्धबन्धुराः ॥ ३६ ॥ बहूनां प्रतिबोधोऽभून् मुनिदेशनयाऽनया । असैत्सीद्धरिकेशस्तत् प्रधानं परमं तपः ॥ ३७ ॥

तपोविधानमपि क्षमासमायुक्तं मुक्तिफलदं भवति, तच्च गजसुकुमालदृष्टान्तेनोच्यते, तथाहि-'ते भद्दिलपुरे नागसुलसागृहव-र्द्धिताः । प्रत्येकं देवकीपुत्राः, प्रोद्यद्वात्रिंशतं कनीः ॥ १ ॥ श्रीनेमिदेशनाबुद्धा, व्रतं भेजुः षडप्यमी । द्वादशांगधरा जग्मुर्द्वारिकां स्वामिना समम् ॥२॥ ते त्रिधा युग्मिनो भूत्वा, भिक्षार्थं प्राविशन् पुरीम् । तेषु च प्रथमं युग्मं, देवकीगृहमागतम् ॥ ३ ॥ तद्वीक्ष्य कृष्णतुल्यं सा, प्रमोदात् मोदकानदात् । गते तत्र द्वितीयं चायातं सा प्रत्यलाभयत् ॥ ४ ॥ तस्मिन् गते तृतीयं चागतं पप्रच्छ देवकी । दिग्मोहो वां कथं यत् त्रिर्यावृत्याऽऽगतौ युवाम् ? ॥५॥ पुर्यां त्रिविष्टपस्पर्द्धिसमृद्धिभरभाज्यपि । यतयः प्रासुकं वस्तु, लभन्तेऽन्यत्र किं न वा ? ॥६॥ तावूचतुर्न नौ मोहः, किन्तु षट् सोदरा वयम् । सुश्राद्धसुलसानागतनया भद्रिले पुरे ॥ ७ ॥

आत्तव्रता विभोर्नेमेरुपेतास्तव मन्दिरे । सा दध्यौ कृष्णतुल्याः किं, षडप्येते ममाङ्गजाः ? ॥ ८ ॥ ततः प्रष्टुं गतोक्ता च, स्वामिना भाववेदिना । ते च पुत्राः षडप्येते, तत्र देवकि! वर्द्धिताः ॥ ९ ॥ उत्प्रस्रुतस्तनी साऽथ, ववन्दे तान् षडङ्गजान् । अशोचच्च यदेकोऽपि, न मया वर्द्धितोऽङ्गजः ॥ १० ॥ हृत्वा सपत्न्या रत्नानि, प्राग्भवे देवकि ! त्वया । यदेकमर्पितं तस्यै, स्वाम्याख्यत्तादिदं फलम् ॥ ११ ॥ तत् निन्दंती ययौ सद्मन्याचान्ता देवकी शुचा । पृष्टा च हरिणा मातर्जातदुःखेव दृश्यसे ॥ १२ ॥ सोचे त्वदग्रजास्त्वं च, वर्द्धितास्त्वन्यया॑ऽन्यया । वर्त्तते वत्स ! वाढं मे, बाललालनकौतुकम् ॥१३॥ तपसाऽऽराधयत् कृष्णस्तत्रार्थे नैगमेषिणम् । स प्राह नेमिनाथान्ते, बालः सन् प्रव्राजिष्यति ॥१४॥ ततः कश्चिच्च्युतो देवो, गजस्वप्नेन सूचितः । उत्पन्नो देवकीकुक्षौ, सा तं बालमलालयत् ॥१५॥ गजाद्यत् सुकुमारोऽसौ, प्रेमस्थानमिवाच्युतः । मातुर्भ्रातुः प्रमोदेन, समं सोऽवर्द्धत क्रमात् ॥ १६ ॥ येमे गजः क्षमाधीशद्रुमकन्यां प्रभावतम् । सोमां च क्षत्रियाजातां, सोमशर्म्मद्विजात्मजाम् ॥१७॥ अन्यदा द्वारकापुर्यां, श्रीनेमिः समवासरत् । शुश्राव देशनां तस्माद्, भार्यायुगयुतो गजः ॥ १८ ॥ वैराग्यवाननुज्ञाप्य, पितरौ प्राव्रजद्गजः । सवधूकोऽपि तद्दुःखाद्यदत्रो रुरुदुस्तराम् ॥ १९ ॥ प्रभुं पृष्ट्वा श्मसानेऽस्थात्, सायं प्रतिमया गजः । सोमशर्म्मद्विजेनैक्षि, तेनाध्यायि च मानसे ॥ २० ॥ पापश्चिकीर्षुः पाषण्डं, तनयामेष मेऽत्यजत । दीप्ताङ्गारघटीकण्ठं, गजशीर्षे न्यधारयत् ॥ २१ ॥ दीप्ताङ्गारैरयं दग्धो, देहेनाङ्गारतां गतः । उग्रः ( उत्कः ) कर्म्मक्षयात् सिद्धिक्षेत्रे तिलकतामगात् ॥ २२ ॥ उत्कः प्रगे रथारूढो, द्रष्टुं गजमधोक्षजः । आयान् पुर्यां वहिर्विप्रं, वृद्धमृद्वेष्टिकाभरम् ॥ २३ ॥ वहन्तमेकं गच्छन्तं, वीक्ष्य देवकुलं प्रति । निन्ये तत्कृपया प्राकादेकां स्वयमपीष्टिकाम् ॥ २४ ॥ युग्मम् । लोकेऽथ कोटिशोऽनैषीत्, कृतकृत्योऽभवद् द्विजः । गतः स्वामिसदः कृष्णस्तत्रापश्यद्गजं न

तु ॥ २५ ॥ नत्वाऽपृच्छत् प्रभुं भ्राता, क्व मे ? स्वामी ततोऽवदत् । द्विजाद्गजस्य निर्वाणं, मूर्च्छितोऽथापतद्धरिः ॥ २६ ॥ प्रबुद्धो बन्धुहन्तारं, पप्रच्छ प्रभुरभ्यधात् । सहायः स हि बन्धोस्ते, तस्मै विप्राय मा रुषः ॥ २७ ॥ सिद्धिः स्याच्चिरसाध्यापि, सहायस्य वशाद् ध्रुवम् । त्वद्दिष्टिकार्पणाद् वृद्धद्विजस्येवाद्य केशव! ॥२८॥ पुर्यां प्रविशतो यस्ते, दर्शनान्म्रियते द्विजः। भिन्नमूर्द्धा हरे! विद्धि, तं निजभ्रातृघातकम् ॥ २९ ॥ कृष्णः कृत्वाऽङ्गसंस्कारं, गजस्य द्वारकां विशन् । तं द्विजं सोमशर्म्माणं, तथा मृतमलोकत ॥३०॥ पदयोर्बन्धयित्वा तं भ्रमयित्वा च सर्वतः । शूलीमारोपयद्बन्धुद्विषंतं परिमोषिवत् ॥ ३१ ॥ इति तुर्यद्वारतृतीयगाथार्थः ॥ अथ तुर्यगाथामाह—

मासाईया पडिमा अणेगरूवा अभिग्गहा बहवे । दव्वे खित्ताणुगया काले भावे य बोद्धव्वा ॥ ६ ॥

मासिक्यादयः प्रतिमा अभिग्रहविशेषाः साधूनां द्वादशसंख्याः स्युः, ताश्च साधुरपरिपूर्णदशपूर्वधरो जघन्यतोऽपि नवमपूर्वस्य तृतीयवस्तुन्यधीती विशिष्टसंहननधृतियुतो महासत्त्वो व्युत्सृष्टदेहो जिनकल्पिकवदुपसर्गसहोऽलेपकृतभोजी गुरोरनुज्ञया गच्छाभिप्क्रम्य प्रतिपद्यते,स चाद्यप्रतिमायामन्नपानयोरेकैकां दत्तीं मासं यावद् गृह्णाति,एवं चैकैकदत्तिवृद्ध्या सप्तम्यां सप्त मासान् यावत् अन्नपानयोः प्रत्येकं सप्त दत्तीर्गृह्णाति, ततस्तिस्रः प्रतिमाः सप्तरात्रिक्यो भवन्ति, तत्राद्यायां चतुर्थभक्तैः पारणदिनविहिताचाम्लैरपानकैः प्रतिपद्यमानो ग्रामाद्बहिः स्थित उत्तानशयः पार्श्वस्थो निषण्णो वा निष्प्रकम्पो दिव्यादीनुपसर्गान् सहते, द्वितीयाऽपि सप्तरात्रिक्येवंरूपा, नवरं उत्कटुकासनी लगण्डशायी वा, लगण्डं बक्रकाष्ठं तद्वत् शिरः पादौ च भूमौ लगयति, न तु कटीतटमित्यर्थः, दण्डायतस्थानो वा तिष्ठति, तृतीयाऽप्येवं, नवरं वीरासनी वा गोदोहासनी वा कुब्जाम्रवद्वा तिष्ठति इति

तिस्रः प्रागुक्तसप्तकसहिता दश स्युः, एकादशी अहोरात्रिकी, तस्यां ग्रामनगराद्बहिः स्थितः प्रलम्बितपाणिरपानकषष्ठभक्तपूर्व प्रतिपद्यते ११ द्वादशी प्रतिमा त्वेकरात्रिकी, तां चाष्टमभक्तानन्तरं बहिरीषत्प्राग्भारगतोऽनिमिषनेत्र एकपुद्गलन्यस्तदृष्टिः संहतपादः प्रलम्बितभुजश्च स्थाने तिष्ठति इति द्वादश प्रतिमाः साधुना धार्याः, अनेकरूपा अभिग्रहा बहवः कार्या इति, तांश्चोत्तरार्द्धेन विवृणोति-द्रव्यक्षेत्रानुगताः काले भावे च बोद्धव्या इति संक्षेपार्थः ॥ व्यासार्थस्तु श्रीमहावीरोऽभिग्रहेषु दृष्टान्तः, अतस्तच्चरितं लेशतः प्रकाश्यते—

आस्तेऽपरविदेहान्तः, शत्रुमर्दनपालिता। स्वर्जयन्ती जयन्तीति, नगरी स्वर्गरीयसी ॥ १ ॥ राज्ञः पृथ्वीप्रतिष्ठानग्रामोऽस्ति ग्रामचिन्तकः। नयसार इति ख्यातो, व्यापारनयसारथिः ॥ २ ॥ सोऽन्यदा भूभृदादिष्टश्चारुदारुकृते कृती । सतक्षशकटोक्षः सन्नटवीमटति स्म च ॥ ३ ॥ वृक्षेषु लक्षणैः स्थित्वा, तक्ष्यमाणेषु तक्षभिः । नयसारे तरुच्छायासीने शासति तानलम् ॥ ४ ॥ क्षुधाक्रान्तास्तृषाक्रान्ताः, पथश्रान्तास्तदाऽऽगमन्। सार्थाद् भ्रष्टा महाकष्टाः, साधवः प्राणिबन्धवः ॥५॥ आतिथेयोऽतिथीनेतानभिगम्य प्रणम्य च। नयसारः कृपासारः, पानान्नैः प्रत्यलाभयत्॥६॥ पूर्वोपकारिणे तस्मै, प्रीत्य। प्रत्युपकारिणः। मुनयो नयसाराय, सारं रत्नत्रयं ददुः ॥७॥ अथ तेनेहलोकाध्वा, साधूनां निर्म्मलः पुरः। तैस्तस्य परलोकाध्वा, निज (दत्तो) देहेऽपि निःस्पृहैः ॥ ॥ ८ ॥ आनीय शस्यकाष्ठानि, रम्यकाष्ठामधिष्ठितः। आयुः प्रपाल्य सौधर्म्मेऽसौ धर्म्मरतधीरगात्॥ ९ ॥ च्युत्वा चैष विनीतायां, वृषभस्वामिजन्मनः। भरतस्याङ्गजो जज्ञे, मरीचिरिति नामतः ॥ १० ॥ जाते युगादिनाथस्य, केवले श्रुतदेशने । प्रव्रज्यां जगृहे शुद्धो, मरीचिर्भाववीचिभिः ॥ ११ ॥ बहु प्रपाल्य चारित्रं, तदावरणतोऽन्यदा । आशिरोऽघ्रि भृशं तप्तोऽर्ककरैः

क्ष्मारजोभरैः ॥ १२ ॥ वेषं सङ्कल्प्य स्वेच्छं तु, कषायवसनादिकम् । शिखामौण्ड्योर्म्मिकापादत्राणरूपं त्रिदण्डभृत् ॥ १३ ॥ युग्मम् ॥ यः कोऽपि बुद्ध्यते तस्मात्, जिनान्ते ग्राहिणोति तम् । प्रभोश्च परिवारेण, सार्द्धं विहरते सदा ॥१४॥ जिनस्य भाविनो जीवः, कश्चिदस्तीह पर्षदि । भरतेनेति पृष्टः सन्, जगाद जगदादिकृत् ॥ १५ ॥ अयं मरीचिः पुत्रस्ते, परिव्राजकवेषभृत् । चतुर्विंशो जिनो भावी, वर्धमानोऽभिधानतः ॥१६॥ त्रिपृष्ठाख्योऽर्द्धचक्री च, प्रथमोऽसौ भविष्यति । मूकायां प्रियमित्राख्यश्चक्रवर्त्ती च भाव्ययम् ॥ १७ ॥ ततश्च भरतो भक्तिभरतो भाविनं जिनम् । गत्वा प्रदक्षिणीकृत्य, ननामैनं वदन्नदः ॥ १८ ॥ पारिव्राज्यं न ते वन्दे, न वन्दे चार्द्धचक्रिताम् । चक्रित्वं च न ते वंदे, वन्दे भावी जिनोऽसि यत् ॥ १९ ॥ याते चक्रिणि वन्दित्वा, समेत्यासौ सभान्तरे । भुजामास्फोट्य चावोचदहो मे कुलमुत्तमम् ॥२०॥ पितामहो जिनेष्वाद्यः, पिता चक्रिष्वहं पुनः । अर्द्धचक्रिषु तद्धन्यमहो मे कुलमुत्तमम् ॥२१॥ तदा कुलमदाद्बद्धं, नीचैर्गोत्रं मरीचिना । कर्म यन्मर्म्मभिद्भावि, चरमेऽपि भवे विभोः ॥२२॥ मरीचिरन्यदा व्याधिबाधितः साधुमण्डलैः । प्रतिजागरितो वाचाऽप्यसंयततया न तैः ॥२३॥ सोऽध्यायद्यदि नीरोगो, भविष्याम्यहमेकदा । तदा शिष्यं करिष्यामि, स्वशुश्रूषाविधायकम् ॥ २४ ॥ दैवान्निरुजिते तस्मिन्, कपिलो राजपुत्रकः । धर्म्मं पृच्छन्ननेनोक्तो, धर्म्मोऽर्हदुदितः खलु ॥ २५ ॥ कपिलः प्राह धर्म्मोऽर्हद्व्रते किं नास्ति ते व्रते ? । मरीचिरूचे तत्रापि, कपिलात्रापि विद्यते ॥ २६ ॥ वदन्नित्यमयं वार्द्धिकोटीकोटिमितं भवम् । उपार्जयन्नभूवास्य, शिष्यस्तु कपिलस्तदा ॥ २७ ॥ आसुरिप्रमुखास्तेन, स्वशिष्या बहवः कृताः । मरीचिस्तमनालोच्य, ब्रह्मलोके सुरोऽभवत् ॥ २८ ॥ कपिलेनापि देवत्वे, दिव्यशक्त्या निजं मतम् । प्रसिद्धिं परमां नीतं, पंचविंशतितत्त्वभृत् ॥ २९ ॥ मरीचिः स्वर्गतश्च्युत्वा, पंचमात् पंचमे भवे । कोल्लाके कौशिको नाम, विप्रः

भ्रान्ते त्रिदण्डधभृत् ॥ ३० ॥ ततः पर्यट्य संसारं, स्तूणाख्ये सन्निवेशने । पुष्पमित्राभिधो विप्रः, प्राग्वदन्ते त्रिदण्डिकः ॥ ३१ ॥ सौधर्म्मेऽथ सुरो भूत्त्वा, वेददेशेऽष्टमे भवे । उद्योतनामको विप्रः, परिव्राडप्यजायत ॥ ३२ ॥ गत्वेशाने ततश्च्युत्वा, मन्दिराख्ये पुरे द्विजः । अग्निभूतिस्त्रिदण्ड्येष, तृतीयं त्रिदिवं ययौ ॥३३॥ श्वेतपुर्यां ततश्च्युत्वा, भारद्वाजाभिधो द्विजः । स प्राग्भवव्रतीभूत्वा, माहेन्द्रं कल्पमीयिवान् ॥ ३४ ॥ ततो भ्रान्त्वा भवं राजगृहे स्थावरमाहनः । पूर्ववती गतो ब्रह्मलोकं भ्रान्तो भवं पुनः ॥ ३५ ॥ षोडशेऽथ भवे राजगृहे श्रीविश्वनन्दिनः । राज्ञो विशाखभूत्याख्यो, युवराजोऽस्ति सोदरः ॥ ३६ ॥ भार्यायां तस्य धारिण्यां, ब्रह्मलोकाच्च्युतः सुतः । जीवोऽसौ नयसारस्य , विश्वभूतिरितीरितः ॥ ३७ ॥ युग्मम् ॥ राज्ञः प्रिया प्रियंगुश्च, सुषुवे सुतमन्यदा। विशाखनन्दिनं नाम्ना, प्राप्तौ द्वावपि यौवनम् ॥ ३८ ॥ सान्तःपुरो महाभूतिर्विश्वभूनिर्गतोऽन्यदा। मुदा क्रीडितुमुद्याने, नाम्ना पुष्पकरण्डके ॥ ३९ ॥ विशाखनन्दी पृष्ठेऽस्यायातः स च बहिः स्थितः । प्रियंगुदेव्या दासीभिरयं चार्थो निवेदितः ॥ ४० ॥ ततः सकोपां विज्ञाय, राज्ञीं राजा निजाज्ञया । ताडयित्वा महाभेरीं, चक्रेऽलीकप्रयाणकम् ॥४१॥ भेरीस्वरं तमाकर्ण्य, विश्वभूतिः ससंभ्रमः । किमेतदिति पप्रच्छ, स्वच्छचित्तो महीभुजम् ॥४२॥ राज्ञोचे वत्स ! वत्सस्त्वं, राज्ञामाज्ञा हि जीवितम् । सीमां पुरुषसिंहाख्यः, सामन्तो हन्तुमुद्यतः ॥४३॥ कुमारः प्राह ताताहं, सुतस्तेऽस्मि निदेशकृत् । मृगे महामृगारातेः, संरंभः शरभस्य कः ? ॥४४॥ इत्युक्त्वा दैत्यसैन्योऽयं, गतः प्राभृतपाणिना। तेनानतः समागत्य, नृपायार्पयदामिषम्॥४५॥ स्वावासे प्रेषितो राज्ञा, गतः पुष्पकरण्डके । विशाखनन्दिना रुद्धं, तद्वीक्ष्याचिन्तयंच्च सः ॥ ४६ ॥ निर्वासितोऽस्मि तातेन, च्छद्मनाऽहमिति क्रुधा। मुष्टयाऽऽहत्य कपित्थद्रोः, फलान्यलमपातयत् ॥ ४७ ॥ ऊचाचारक्षकांश्चैवं, रे रे रुष्यामि यद्यहम् । कपित्थानीव युष्माकं, तच्छिरांस्यपि

पातये ॥४८॥ गुरुभक्तिं तु नोल्लंघे, मर्यादामिव वारिधिः । इत्युदीर्यार्यसम्भूतपार्श्वे गत्वाऽग्रहीद्व्रतम् ॥४९॥ युग्मम् ॥ श्रुत्वेदमनुनेतुं
तमागतो नृपतिः स तु । न व्यावृत्तः परित्यक्तं, नाद्रियंते हि साधवः ॥ ५० ॥ गीतार्थो गुर्वनुज्ञातश्चैकाकी विहरन्नयम् । तपः-
कृशशरीरः सन्, मथुरामन्यदा ययौ ॥ ५१ ॥ सुतां तन्नगरीस्वामिपट्टराज्याः पितृस्वसुः । विशाखनन्दी तत्रास्ति, परिणेतुं
समागतः ॥ ५२ ॥ विश्वभूतिस्तु भिक्षार्थं, मासक्षपणपारणे । तदावासान्तिके गच्छन् , वृषेणोद्धुष्य पातितः ॥ ५३ ॥ विशाख-
नन्दिना तत्र, तं निरीक्ष्य तथा स्थितम् । समं स्वपरिवारेण, चक्रे कोलाहलो महान् ॥ ५४ ॥ विशाखनन्दी तद् वीक्ष्य, क्रुद्धो
मुनिवृषो वृषम् । विधृत्य शृंगयोः शीर्षे, त्रिरभ्रमयदम्बरे ॥५५॥ तं मुक्त्वोवाच रे पापाः!, किं कोपयत मां मुधा ? । तत् कपित्थ-
फलध्वंसि, बलं किं क्वापि मे गतम् ? ॥ ५६ ॥ तपसाऽनेन भूयासं, वधायास्य महाबलः । निदानी त्वब्दकोट्यायुः, प्रान्ते शुक्रे
सुरोऽजनि ॥ ५७ ॥ इतश्च भरतेऽत्रैव, पुरे पोतननामनि । राड् रिपुप्रतिशत्रुस्तद्राज्ञी भद्राभिधाऽस्ति च ॥ ५८ ॥ सूचितोऽस्या-
श्चतुःस्वप्न्या, बलो नाम्नाऽचलोऽङ्गजः । मृगावती मृगारातिमध्या रूपाद्भुता सुता ॥ ५९ ॥ उद्योतना च सा प्रैपि, जनन्या
पितुरन्तिके । तां च पश्यन् कुरंगोऽसौ, स्मरव्याधेपुबाधितः ॥६०॥महाजनं समाहूयापृच्छदन्तःपुरे पुरे। कस्य स्याद्रत्नमुत्पन्नं? स्यादे-
वस्येति तेऽवदन्॥६१॥युग्मम्॥ सोऽपि लज्जादि सन्त्यज्य, स्वसुतां परिणीतवान्। भोगासक्तो जनैरुक्तोऽन्वयनामा प्रजापतिः॥६२॥
भद्रा तु लज्जिता पुत्रेणाचलेन समं गता। माहेश्वरीं पुरीं कृत्वा, स्थिताऽगात् पोतनेऽचलः॥६३॥ विश्वभूतिश्च्युतः शुक्रान्नीचैर्गोत्रप्रभा-
वतः। आगान्मृगावतीकुक्षौ, साऽपश्यत् स्वप्नसप्तकम्॥६४॥ संविज्ञातार्द्धचक्रित्वो, जन्मकाले सुतोऽजनि । स त्रिपृष्ठकरण्डत्वात् त्रिपृष्ठ
इति विश्रुतः ॥६५॥ स चाशीतिर्धनुर्मानोऽचलेन हलिना सह । आद्येन हरिराजोऽयं, महास्नेहेन वर्तते ॥ ६६ ॥परिभ्रम्य भवे शंख-

पुरासन्नादिगह्वरे । विशाखनन्दिजीवोऽपि, सिंहत्वेनोदपद्यत ॥ ६७ ॥ इतो रत्नपुरेऽस्त्यश्वग्रीवाख्यः प्रतिकेशवः । भरता भरतार्धस्यापृच्छदैवज्ञमन्यदा ॥ ६८ ॥ स्वमृत्युं सोऽपि तस्याख्यद्, दूतं ते धर्षयिष्यति । यश्चण्डवेगं सिंहं च, दारुवद्दारयिष्यति ॥ ६९ ॥ यश्च शंखपुरासन्नं, तस्मात्ते मृत्युरित्यथ । सोऽपि शंखपुरे शालिरक्षायै राज्ञ आदिशत् ॥ ७० ॥ विशेषकम् ॥ त्रिपृष्ठाचलयोः ख्यातिं, श्रुत्वा शंकितमानसः । तं दूतं चण्डवेगाख्यं, प्राहिणोच्च प्रजापतेः ॥ ७१ ॥ प्रजापतिः सपुत्रोऽपि, तदा संगीतकस्थितः । दूतागमं यदुत्तस्थौ, रंगभंगस्ततोऽभवत् ॥ ७२ ॥ विसृष्टस्तेन सन्मान्य, दूतो राज्यपथं व्रजन् । गत्वा पृष्ठे त्रिपृष्ठेन, साचलेन स कुट्टितः ॥ ७३ ॥ आत्तं चामिषमाच्छिद्य, तद् ज्ञात्वा च प्रजापतिः । आकार्य द्विगुणं दत्त्वा, तत् सर्वं च विसृष्टवान् ॥ ७४ ॥ दूतेन स्वप्रभोर्गत्वा, यथावृत्ते निवेदिते । रुष्टेन शालिरक्षार्थं, तेनादिष्टः प्रजापतिः ॥ ७५ ॥ विनापि वारकं वत्सौ!, नियुक्तो युष्मदागसा । कुमारावित्युदित्वाऽसौ, नृपः शंखपुरेऽचलत् ॥ ७६ ॥ त्रिपृष्ठस्तमवस्थाप्य, रथेन बलयुग् ययौ । कर्षुकानाह रक्ष्यन्ते, शालयः सिंहतः कथम् ? ॥ ७७ ॥ ते प्राहुः सुभटैः सेभघटैः संनह्य रक्ष्यते । सिंह आशालिनिष्पत्ति, हलिनो हन्ति सोऽन्यथा ॥७८॥ त्रिपृष्ठोऽवक् क सिंहोऽस्तीत्युदिते दर्शि तद्गुहा । सोऽभि सिंहमथायासीद्रथारूढः ससारथिः॥७९॥ चक्रचीत्कारतः पंचमुखोऽसौ सम्मुखोऽचलत् । पद्गं व्यस्तं च तं प्रेक्ष्य, त्रिपृष्ठोऽपि तथाऽभवत् ॥ ८० ॥ ततः सविस्मयक्रोधोऽभिधावन्नखरायुधः । धृत्वा पाणिद्वयेनौष्ठद्वयं तेन द्विधाकृतः ॥ ८१ ॥ तथास्थोऽपि स्फुरन्नेष, सिंहः सूतेन शार्ङ्गिणः । श्रीवीराद्यगणाधीशजीवेनेत्थं प्रबोधितः ॥ ८२ ॥ मृगेषु त्वं नरेष्वेष, सिंहस्तत्तेऽमुतो मृतिः । श्लाघ्येति तद्गिरा शान्तक्रोधस्तुर्यां वनिं ययौ ॥ ८३ ॥ दूतं सन्दिश्य निश्चिन्तः, खाद शालीन् हयग्रीव! । सिंहकृत्तिं समर्प्यास्य, त्रिपृष्ठः स्वपुरं गतः ॥ ८४ ॥

पुनः सम्प्रेपितो दूतोऽश्वग्रीवेणेति सोऽवदत् । प्रेपयैतौ सुतौ राजन् !, युद्धसज्जो भवाथवा ॥ ८५ ॥ त्रिपृष्ठोऽस्यापि दूतस्य, कुट्टने- नोत्तरं ददौ । अश्वग्रीवः ससैन्योऽपि, पोतनं पुरमागमत् ॥ ८६ ॥ तदा ज्वलनजट्याख्यविद्याधरनृपेण सः । पुत्रीं स्वयंप्रभां नाम, त्रिपृष्ठः परिणायितः ॥ ८७ ॥ अनवद्यास्तथा विद्याः, स ददौ तस्य खेचरः । सोऽचलेन समं भ्रात्राऽथाश्वग्रीवमयोधयत् ॥ ८८ ॥ युध्यमानेपु सैन्येपु, प्राप्तदैन्येपु किंचन । रथारूढौ डुढौकाते, हरिप्रतिहरी रयात् ॥ ८९ ॥ द्वयोः क्षीणास्त्रयोरश्वग्रीव- श्चक्रं द्विपोऽक्षिपत् । पदं पदकवच्चक्रे, तत् त्रिपृष्ठस्य वक्षसि ॥ ९० ॥ चक्रे चक्रेण तेनैव, सोऽश्वग्रीवशिरश्छिदम् । उद्घुष्टं च सुरैराद्यो, वासुदेवो जयत्ययम् ॥ ९० ॥ साधितं भरतस्यार्द्धं, त्रिपृष्ठेनार्द्धचक्रिणा । कृतो ज्वलनजट्युच्चैः, श्रेणिद्वितयनायकः ॥ ९२ ॥ मगधेष्वागतो वामभुजेन च्छत्रवच्छिलाम् । भटकोटीसमुत्पाट्यामुद्धृत्यामुंचदच्युतः ॥ ९३ ॥ उपार्ज्य वैभवं तादृक्, तस्यायातस्य पोतनम् । सर्वैश्चक्रेऽर्द्धचक्रित्वाभिषेको भूधरैः परैः ॥ ९४ ॥ श्रीश्रेयांसस्य पार्श्वेऽसौ, सम्यक्त्वं प्रत्यपद्यत । स्वयं- प्रभार्यां तस्य श्रीविजयश्च सुतोऽजनि ॥ ९५ ॥ त्रिपृष्ठश्चैकदा शय्यापालमादिश्य सुप्तवान् । यदेते मयि निद्राणे, विसृज्या गायना- स्त्वया ॥ ९६ ॥ प्रबुद्धो गायतस्तांस्तु, श्रुत्वाऽभापत किं त्वया । नामी विसृष्टास्तेनोक्तं, कर्णयोः सुखदा इति ॥९७॥ तप्तत्रपु त्रिपृष्ठेन, क्षेपितं तस्य कर्णयोः । दुर्विपाकं तदा वेद्यं, कर्म्म तेनार्जितं घनम् ॥ ९८ ॥ चतुःसमन्विताशीतिं, वर्षलक्षाणि जीवितम् । पालयित्वाऽथ स क्रूरकर्म्माऽगात् सप्तमावनिम् ॥९९॥ सिंहीभूय गतस्तुर्यपृथ्वीं भ्रान्त्वा भवं ततः । बभूव मनुजश्चेत्थं, विभोर्द्वा- विंशतिर्भवाः ॥ १०० ॥ अथापरविदेहेपु, मूकाभिधपुरीपतेः । धनञ्जयस्य गेहिन्या, धारिण्या उदरेऽविशत् ॥ १०१ ॥ तया चतुर्दशस्वप्नवृपभाद्यैश्च सूचितः । प्रियमित्र इति ख्यातिं, पितरौ चास्य चक्रतुः ॥ १०२ ॥ क्रमादुद्योतनं तं च, राज्ये न्यस्य

धनंजयः । सद्गुरोराददे दीक्षां, कर्म्मनिर्म्मूलनक्षमाम् ॥१०३॥ उत्पन्ने चक्ररत्नेऽथ, पट्खण्डमपि लीलया । विजयं विजयं कुर्वन्, दिशामयमसाधयत्॥१०४॥ पालयित्वा चिरं राज्यं, तत्र न्यस्यान्यदा सुतम् । विरक्तः पाटलाचार्यान्तिकेऽसौ व्रतमग्रहीत् ॥१०५॥ तपस्तप्त्वा च पंचाब्दकोटीरनशनान्मृतः । अयं चतुर्युताशीतिपूर्वलक्षायुषः क्षये ॥ १०६ ॥ देवोऽजनि महाशुक्रे, च्युतस्तस्माद- जायत । छत्राग्रानगरीस्वामिजितशत्रुमहीपतेः ॥ १०७ ॥ भद्रायां नामतः पत्न्यां, नन्दनो नाम नन्दनः । त्रिवर्गसुखसक्तोऽपि, विशेषधर्म्मकर्म्मठः ॥ १०८ ॥ युग्मम् ॥ राज्येऽतीत्य चतुर्विंशत्यब्दलक्षीमयं नृपः । प्रव्रज्य पोट्टिलाचार्याद्, वर्षलक्षं व्यधात्तपः ॥ १०९ ॥ विंशत्या कारणैरर्ज्जयित्वाऽर्हन्नामकर्म्म च । स मासानशनी चक्रे, दशधाऽऽराधनामिति ॥ ११० ॥ चतुःशरणता १ पापगर्हा२श्रेयोऽनुमोदना ३ । व्रता४न्यालोचना५ पापस्थानोत्सर्गश्च६ भावनाः ७ ॥ १११ ॥ क्षामणा८नशनं९पंचपरमेष्ठिनम- स्कृतिः१० । इत्यमूः क्रमशो वक्ष्यमाणाः सम्यग्निशम्यताम् ॥ ११२ ॥ अर्हतस्त्रिजगद्वन्द्यान्, सिद्धान् विध्वस्तकर्म्मणः । साधूंश्च जैनधर्म्मं च, शरण्यान् शरणं श्रये ॥ ११३ ॥ यत् कृतं दुष्कृतं किंचिदिहामुत्र भवे मया । देवे धर्म्मे गुरौ यच्चाशातना काऽपि निर्म्मिता ॥ ११४ ॥ यच्चोत्सूत्रं कदाऽप्युक्तं, धर्म्मे च यदुदासितम् । पुस्तकार्हद्गुरुद्रव्यं, यद्भक्षितमुपेक्षितम् ॥११५॥ पृथ्वीका- येषु जातेन, लोहलोष्ठाश्मसूर्तिना । जलप्लवैर्जलत्वे वाऽग्निकाये च प्रदीपनैः ॥११६॥ वायुभावे च दण्डाद्यैर्वनस्पतितनौ तथा । कोदण्डदण्डकाराद्यैस्त्रसत्वेऽथ च येऽर्दिताः ॥ ११७ ॥ कारितं च यदस्त्राद्यं, कर्म्मबन्धश्च यः कृतः । रागाद् द्वेषात्तथा मोहात्, तद्गर्हाम्यात्मनोऽखिलम् ॥ ११८ ॥ ज्ञानदर्शनचारित्ररत्नत्रितयगोचरे । यत्कृतं सुकृतं तत्तु, स्वान्ययोरनुमोदये ॥ ११९ ॥ पृथ्वीत्वे जिनबिम्बादौ, जिनस्नात्रैरपां भवे । अग्नित्वे धूपदीपाद्यैर्जिनानां पुरतश्च यः ॥१२०॥ वायुत्वे श्रान्तसंघस्य, तीर्थाध्वन्यु-

पकारकः । कायसुराश्च यो ( वाने सुरालये ) धर्म्महेतुस्तमनुमोदये ॥ १२१ ॥ वन्दे नित्यानि बिम्बानि, मेरुनन्दीश्वरादिषु ।
शत्रुंजयादितीर्थेषु, तान्यनित्यानि वन्दये ॥ १२२ ॥ पंचस्वहं विदेहेषु, भरतैरवतेष्वपि । जिनान् जिनमुनींश्चापि, नमस्यामि
त्रिधाऽपि हि ॥ १२३ ॥ अर्हत्तामर्हतां सिद्धिसिद्धतां सूरिसूरिताम् । उपाध्यायसदध्यायं, साधुश्राद्धसुवृत्तताम् ॥ १२४ ॥ यच्च
विज्ञातमज्ञातं, धनं सद्धर्म्मकर्म्मसु । परेण स्वेन वाऽनायि, तत् सर्वमनुमोदये ॥ १२५ ॥ श्रीसम्यग्दर्शनाद्यानि, गुरूणां पुरतः
पुरा । अंगीकृतानि भूयोऽपि, व्रतान्यंगीकरोम्यहम् ॥ १२६ ॥ ज्ञानदर्शनचारित्राचारे भिन्नेऽष्टधाऽष्टधा । यो योऽभूदप्यतीचारस्तं
तमालोचयाम्यहम् । १२७॥ यद्विराद्धं तपः शक्तौ, सामर्थ्यं यच्च गोपितम् । मनो निर्म्माय निर्म्मायमहमालोचयामि तत् ॥१२८॥
पंचाश्रवा निशाभोज्यं, कषायाणां चतुष्टयम् । कलिर्मायामृषा रागद्वेषौ पिशुनताऽपि च ॥ १२९ ॥ अवर्णवादोऽभ्याख्यानं,
मिथ्यादर्शनशल्यकम् । इत्यष्टादश संख्यानि, पापस्थानानि वर्जये ॥ १३० ॥ सर्वमप्युपधिं बाह्यं, सावद्यं यौगमान्तरम् ।
उच्छ्वासे चरमे व्युत्सृजाम्यहं च पुराऽप्यदः ॥ १३१ ॥ अनित्यत्वं पदार्थानां, मृत्योरशरणं तथा । संसारस्य च वैचित्र्यमेकत्वं
कर्म्मसमर्पणे ॥ १३२ ॥ जीवस्यांगस्य चान्यत्वमशौचं च शरीरके । आश्रवं कर्म्मणां तेषां, संवरं कर्म्मनिर्जराम् ॥ १३३ ॥ धर्म्म-
स्वाख्याततां लोके, बोधिदुर्लभतामपि । भावना भावये मैत्र्यादिक्या अपि चतुर्मिताः ॥ १३४ ॥ संघं धर्म्मं गुरुं नाथं, पितरौ
सुहृदं रिपुम् । सधर्म्मं वा विधर्म्मं वा, खेदितं क्षमयाम्यहम् ॥१३५॥ स्वं कर्म्म भुज्यते कोऽपि, नोपकार्यपकार्यपि । तत्तयोस्तो-
परोपौ किं ?, क्षाम्यामि क्षमयामि तौ ॥ १३६ ॥ क्षमयाम्यखिलान् जीवान्, सर्वे क्षाम्यन्तु ते मयि । तेषु सर्वेषु मैत्री मे, विरोधो
न च केनचित् ॥ १३७ ॥ येन मेरुमितेनापि, तृप्तिर्जन्तोर्न जायते । षड्जीवकायघातेन, यस्योत्पत्तिश्च निश्चिता ॥ १३८ ॥ यः

सुप्रापो यथौचित्यं, चतुर्गतिभवे भवे । तं चतुर्विधमाहारं, त्यज त्वं तन्वरागतः ॥१३९॥ युग्मम् ॥ पापीयानपि यं प्राप्य, प्रान्ते देवगतिं व्रजेत् । दुर्लभो यश्च चक्रित्वदेवत्वेभ्योऽपि जन्मिनाम् ॥१४०॥ यस्मात् मुख्यानि सौख्यानि, भवाब्धिर्गोष्पदं यतः । तं स्मरामि नमस्कारं, पञ्चानां परमेष्ठिनाम् ॥ १४१ ॥ युग्मम् ॥ विधायाराधनामित्थं, प्राणतेऽजनि निर्जरः । पुष्पोत्तरविमानेऽसौ, विंशत्यतरजीवितः ॥ १४२ ॥ जम्बूद्वीपेऽत्र भरते, ग्रामे ब्राह्मणकुण्डके । विप्रस्यर्षभदत्तस्य, देवानन्दाऽस्ति गेहिनी ॥ १४३ ॥ तस्याः कुक्षौ शुचेः शुक्लषष्ठ्यां हस्तोत्तरर्क्षगे । चन्द्रे नन्दनजीवोऽवततार प्राणताच्च्युतः ॥ १४४ ॥ तया मुखे विशन्तश्च, दृष्टाः स्वप्नाश्चतुर्दश । ततःप्रभृति तद् गेहं, जातिमद्यद्धिभूति च ॥ १४५ ॥ प्रभोर्नीचकुलोत्पत्तिं, तदा कुलमदार्जिताम् । विज्ञायावधिना शक्रो, नैगमेषिणमादिशत् ॥ १४६ ॥ पुरे क्षत्रियकुण्डग्रामनामन्यस्ति विश्रुतः । सिद्धार्थः पार्थिवः शौर्यनिर्जितारातिपार्थिवः ॥ १४७ ॥ जिष्णोः श्रीरिव तस्यास्ति, प्रिया जिनमतप्रिया । त्रिशलाख्या शलाकेव, स्त्रीषु शीलवतीषु या ॥ १४८ ॥ तत्कुक्षावचतीर्णाऽस्ति, पुत्रिका त्वं विधेहि तत् । परस्परविपर्यासमनयोर्गर्भयोर्द्वयोः ॥ १४९ ॥ अयं हि नः समाचारः, पूर्वकर्म्मवशाज्जिनः । यन्नीचकुलमायातो, नीयते ह्युत्तमे कुले ॥ १५० ॥ नयैनं त्रिशलाकुक्षौ, द्विजीकुक्षौ च पुत्रिकाम् । मणिस्त्रपुणि काचश्च न चारुः काञ्चने क्वचित् ॥ १५१ ॥ नैगमेषीन्द्रनिर्देशाद्, द्व्यशीतिदिनमानकम् । कृष्णाश्विनत्रयोदश्यां, चन्द्रे हस्तोत्तरास्थिते ॥ १५२ ॥ पुत्रीं धूलिमिवाकृष्य, देवानन्दां प्रति क्षिपन् । तत्कुक्षिशुक्तितो धामनिधानं स्वामिनं न्यधात् ॥ १५३ ॥ युग्मम् ॥ एकाऽऽस्यान्निर्गतः स्वप्नानपरा विशतो मुखे । चतुर्दश निशम्यैतान्, क्रमादाप शुचं मुदाम् ॥ १५४ ॥ सौधर्म्मेन्द्रसमादिष्टमपरैरतिदुष्करम् । दिव्यशक्त्या विधायेदं, नैगमेष्यगमद्दिवम् ॥ १५५ ॥ गर्भायाते प्रभौ स्वर्णरत्नवृष्टिं वितेनिरे । तदानीं जृम्भका

देवाः, पितरौ दध्यतुस्ततः ॥१५६॥ वयं वर्धामहे स्वर्णरत्नधान्यधनैर्ध्रुवम् । अस्मादस्य करिष्यावो, वर्धमानाभिधां ततः ॥१५७॥ नाम्लैर्न कटुभिर्नातितीक्ष्णैर्नातिमधूलकैः । रसैः पालयति बालं, गर्भे स्वं त्रिशला प्रसूः ॥ १५८ ॥ गर्भयोगी जिनो मातुः, पीडारक्षणदक्षिणः । तथा संकुचितस्तस्थौ, यथा नास्तीति लक्ष्यते ॥ १५९ ॥ ततश्च त्रिशलादेवी, दध्यावत्यन्तदुःखिता । हृतो मृतो वा मे गर्भो, यन्न स्फुरति कुत्रचित् ॥ १६० ॥ जीवितादधिकं तं च, विना मे जीवितेन किम् ? । ध्यायन्तीति शुचा बाढं, हृदि तापमवाप सा ॥ १६१ ॥ अनन्दिवर्द्धनो नन्दिवर्द्धनोऽभूत् सुदर्शना । कुदर्शना तदा देव्या, गर्भाभावार्दिते हृदि ॥ १६२ ॥ तं ज्ञात्वाऽजनि सिद्धार्थोऽप्यसिद्धार्थः स्वचेतसि । युतोऽपत्ययुगेनाप्यगमच्च ननु वेदनाम् ॥ १६३ ॥ तत्तापेन भृशं तप्तः, सावधानोऽवधौ विभुः । देशेन स्फूर्त्तिमान् मातुर्मुदः स्फूर्त्तिमजीजनत् ॥१६४॥ देव्यभ्युत्थाय पत्यै साऽऽकथयत्तत्तथाऽथ सः । महोत्सवं ततानान्तःपुरमन्तःपुरं च तत् ॥ १६५ ॥ स गर्भात् सप्तमे मासि, चित्तेऽभिग्रहमग्रहीत् । यन्मादास्ये व्रतं पित्रोर्जीवतोरसमाधिकृत् ॥ १६६ ॥ अथोच्चस्थे ग्रहव्यूहे, विलोकितुमिव प्रभुम् । आयाते सप्रकाशासु, दिक्षु विश्वस्य हृद्यपि ॥ १६७ ॥ चैत्रशुक्लत्रयोदश्यां, चन्द्रे हस्तोत्तरास्थिते । स्वामिनी सुषुवे सूनुं, स्वर्णाङ्गं सिंहलाञ्छनम् ॥१६८॥ क्षणं दत्तसुखं तत्र, क्षणे श्वभ्रजुषामपि । निष्कम्पानि दिक्कुमारासनानि च चकम्पिरे ॥१६९॥ भक्त्याऽनवधयोऽभ्येत्य, प्रयुक्तावधयोऽथ ताः । षट्पञ्चाशद्दिक्कुमार्यः, सूतिकर्म्माणि चक्रिरे ॥ १७० ॥ अथ शक्रः प्रभोर्जन्म, विज्ञायासनकम्पतः । एत्य स्वं पञ्चधाकृत्वा, निन्ये तं मेरुमूर्द्धनि ॥ १७१ ॥ त्रिषष्टिरपरेऽपीन्द्रा, अहंपूर्विकयाऽऽययुः । तत्र स्नात्रेऽल्पगात्रेशे, शक्रः स्वामिन्यशङ्कत ॥ १७२ ॥ भेत्तुमद्रिभिदो भ्रान्तिं, पादाङ्गुष्ठेन पीडयन् । स्नात्राय वेत्रिवन्मेरुं, संकेतेनादिशज्जिनः ॥ १७३ ॥ तेनापि स्वशिरःकम्पेनैष संदेशितो मया ।

श्रीमहावीर इत्याख्यां, दत्त्वा स्नात्रे प्रवृत्तवान् ॥ १७४ ॥ सर्वेषां पृष्ठतः शक्रः, स्नात्रं कृत्वा जिनेशितुः । अर्चित्वाऽऽरात्रिकं कृत्वा, स्तुत्वा निन्ये च तद्गृहे॥१७५॥प्रातः सिद्धार्थराजेन,कृतेऽनणुमहोत्सवे। स्वर्णरत्नाम्बरैर्वृष्टिः, पुनर्देवैर्विनिर्मिता ॥१७६॥ वृद्धिरस्माद्धनादीनां, वर्द्धमानस्ततो विभोः । पितृभ्यां निर्ममे नाम, महावीरस्तु वज्रिणा ॥ १७७ ॥ क्रमेण ववृधे स्वामी, सेव्यमानः सुरासुरैः । अष्टोत्तरसहस्राङ्गलक्षणैरुपलक्षितः ॥१७८॥ अन्यदाऽधिसभं शक्रो, वीरमाहात्म्यमस्तवीत् । कोऽपि देवोऽसहिष्णुस्तत्, प्रभुं क्षोभितुमागमत् ॥ १७९ ॥ कुर्वत्यामलकीकेलिं, सवयोभिः समं विभौ । क्रीडातरौ स सर्पोऽस्थात्, कुमारांस्त्रासिवान् परान् ॥१८०॥ वीरोऽतुच्छबलोऽतुच्छसन्धिं धृत्वा तमाक्षिपत् । किं चित्रं यदसौ क्षेप्ता, कषायाशीविषानपि॥१८१॥ मिलितेषु कुमारेषु, मिलितः सोऽप्यथो प्रभुः । लोकाग्रगामी किं चित्रं?, वृक्षाग्रं प्रथमं गतः ! ॥ १८२ ॥ पृष्ठमारुह्य सर्वेऽपि, स्वामिना वाहिताः परे । पणोऽयमत्र यज्जेत्रा, वाहनीयाः किलापरे ॥ १८३ ॥ आरूढे सोऽथ देवस्तु, वर्द्धमानो जिनेन्दुना । मुष्ट्याऽऽहत्य कृतः खर्वः, स्वाभिधामत्सरादिव ॥ १८४ ॥ नत्वा च क्षमयित्वा च, गतेऽस्मिन्नथ पार्थिवः । शिष्यीकुर्वन् विभुं शक्रेणागत्यात्र निषेधितः ॥ १८५ ॥ विज्ञप्तश्च प्रभुः शिष्यीभूयेन्द्रेण यदादिशत् । तच्च व्याकरणं जैनैर्जैनेन्द्रमिति गीयते ॥ १८६ ॥ विवाहार्थितो नाथः. पितृभ्यां तद्वशंवदः । सुतां समरसिंहस्य, यशोदां परिणीतवान् ॥ १८७ ॥ अग्रे यशोदयायुक्तः, पुनर्युक्तो यशोदया । स्वामी ख्यातिमिव प्राप, पुत्रिकां प्रियदर्शनाम् ॥ १८८ ॥ परिणीता च सा राजतनयेन जमालिना । अष्टाविंशे विभोर्वर्षे, पितरौ दिवमीयतुः ॥ १८९ ॥ प्रभौ राज्यानिरीहेऽथ, मन्त्रिभिर्नन्दिवर्द्धनः । स्थापितस्तद्गिरा गेहे, वर्षं यावत् प्रभुः स्थितः ॥ १९० ॥ कायोत्सर्गकरो ब्रह्मचारी प्रासुकभोजनः । लोकान्तिकैश्च विज्ञप्तो, दानं सांवत्सरं ददौ ॥ १९१ ॥ युग्मम् ॥ ततश्च

त्रिंशदब्दान्ते, कृतषष्ठतपाः प्रभुः । शक्रेशानादिभिर्देवैः, कृतनिष्क्रमणोत्सवः ॥ १९२ ॥ ज्ञातखण्डवने यातो, हित्वा चन्द्रप्रभां
शिबीम् । सहश्यामदशम्यां च, विधौ हस्तोत्तरर्क्षगे ॥ १९३ ॥ एकाकी वासवन्यस्तदूष्यभृत् पंचमुष्टिकम् । लोचं कृत्वोज्झिता-
वद्यश्चारित्रं प्रतिपन्नवान् ॥ १९४ ॥ विशेषकम् ॥ तुर्यं ज्ञानं प्रभोर्जज्ञे, शक्रः क्षीराम्बुधौ कचान् । क्षिप्त्वा नन्दीश्वरे यात्रां, कृत्वा
च त्रिदिवं गतः ॥ १९५ ॥ नन्दिवर्द्धनमापृच्छ्य, गच्छन्नन्यत्र च प्रभुः । सिद्धार्थनृपमित्रेणायातेन बहुकालतः ॥ १९६ ॥ निर्भ-
र्त्सितेन निर्भर्त्स्या, निर्भाग्य इति भार्यया । अनन्यगतिकेनैत्य, सोमविप्रेण याचितः ॥ १९७ ॥ युग्मम् ॥ निर्ग्रन्थोऽपि विभुर्देव-
दूष्यार्द्धं तस्य दत्तवान् । तद्दशाकर्त्तनायासौ, तुन्नवायान्तिकं गतः ॥ १९८ ॥ कुत एतज्जिनाल्लब्धामित्युक्ते सोऽवदत्पुनः । पश्चार्द्धं
निःस्पृहादस्मात्, पतितं पुनरानय ॥ २०० ॥ लक्ष्यमूल्यं करिष्यामि, स्वकलाकौशलादहम् । इत्युक्ते तुन्नवायेनानुससार प्रभुं
द्विजः ॥२०१॥ निश्यस्यां भगवान् कक्षे, कायोत्सर्गेण तस्थिवान् । गोपेन हन्तुमारब्धः, पश्चाद् दृष्ट्वा च तान् वृषान् ॥२०२॥
निषेध्य तमुवाचेन्द्रो, विभो ! द्वादशवार्षिके । तवोपसर्गवर्गेऽस्मिन्, स्यामहं पारिपार्श्वकः ॥ २०३ ॥ प्रभुः प्राहान्यसाहाय्य-
मर्हन्तोऽर्हन्ति न क्वचित् । तथाऽपीन्द्रोऽस्य रक्षार्थं, सिद्धार्थं व्यन्तरं न्यधात् ॥ २०४ ॥ द्वितीये दिवसे स्वामी, कौलाके सन्नि-
वेशने । बहलद्विजधिष्ण्येऽधात्परमान्नेन पारणम् ॥ २०५ ॥ पञ्च दिव्यानि तत्रासन्, विजहारान्यतः प्रभुः । अन्यदाऽगाच्च
दूइज्जंतकाख्ये तापसाश्रमे ॥ २०६ ॥ बाहुः कुलपतेस्तत्र, पितृमित्रस्य पूर्ववत् । भर्त्रा प्रसारितोऽस्थाच्च, प्रतिमामेकरात्रिकीम्
॥ २०७ ॥ तेनार्थितस्ततो गत्वा, वर्षा शस्फोटजे स्थितः । गोतृणाकर्षणात्राणात्तदप्रीतौ च निर्ययौ ॥ २०८ ॥ पक्षान्ते प्रावृषः
पंचाभिग्रहानग्रहीदिमान् । कायोत्सर्गश्च मौनं च, पाणिपात्रे च भोजनम् ॥ २०९ ॥ नाप्रीतिमद्गृहे स्थानं, गृहस्थविनयो न च ।

ततो गतोऽस्थिकग्रामं, ग्राम्यानुज्ञापनां व्यधात् ॥ २१० ॥ युग्मम् ॥ वर्षा वसाम्यहं यक्षशूलपाणेर्निकेतने । तेऽप्यूचुर्नैव सामान्यो, यक्षोऽयं शृणु तत्कथाम् ॥ २११ ॥ ग्रामेऽत्र वर्द्धमानाख्ये, वणिजः पण्यसम्भृता । अनःपंचशती कृष्टा, वृषेणैकेन पंकतः ॥ २१२ ॥ सोऽत्रुटत्पालनायास्य, वणिग्वेतनमार्पयत् । ग्राम्याणां तैश्च नो किंचित्तस्य दत्तं तृणाद्यपि ॥ २१३ ॥ क्षुत्तृपार्त्तो मृतः सोऽभूच्छूलपाणिरयं व्यधात् । मारिं जनेऽस्थिकूटैश्च, ग्रामोऽभूदस्थिकाभिधः ॥ २१४ ॥ तोषितैश्च जनैः शेषैर्धूपोत्क्षेपात् जगाद तम् । प्रासादेऽत्रास्थिकूटस्थे, कृत्वा मां वृषमर्चत ॥ २१५ ॥ इत्यादिश्योपशान्तोऽयमकालस्थं जनं पुनः । निहन्ति यत्तदेवासौ, वासो वो नात्र युज्यते ॥ २१६ ॥ स्वाम्यन्याश्रयलाभेऽपि, तत्र प्रतिमया स्थितः । यक्षोऽपि साट्टहासः सन्, युगपत् सप्त वेदनाः ॥ २१७ ॥ शिरोऽक्षिश्रुतिनासाग्रदन्तपृष्ठनखेष्वधात् । तथाऽप्यक्षुभितं यक्षः, प्रणम्याक्षमयत्प्रभुम् ॥ २१८ ॥ युग्मम् ॥ सम्यक्त्वं ग्राहितः सिद्धार्थेन संगीतकं व्यधात् । प्रातर्ग्राम्याः समाजग्मुर्दैवज्ञश्चोत्पलाभिधः ॥ २१९ ॥ स प्राह योगनिन्द्रान्तः, स्वामिन् ! स्वप्ना दशेक्षिताः । तेषां फलं प्रभुर्वेत्ति, किंचित्तत् कथयाम्यहम् ॥ २२० ॥ पिशाचस्य वधे मोहक्षः कोकिलयुग्मके । शुक्लध्यानं सिते चित्रे, द्वादशांगीविनिर्म्मितिः ॥ २२१ ॥ अर्के केवलमंत्रैस्तु, मानुषोत्तरवेष्टने । यशो मेर्वधिरोहे तु, सिंहासनसमाश्रितिः ॥ २२२ ॥ संघश्चतुर्द्धा गोवर्गे, देवाः पद्मसरस्यलम् । अब्ध्युत्तारे भवोत्तारो, वेद्मि दामद्वयं न तु ॥ २२३ ॥ प्रभुः प्राह फलं स्वप्नद्वयस्य शृणु यन्मया । प्रकाश्योऽगारिणां धर्मः, यतिधर्म्मोऽपि निर्म्मलः ॥ २२४ ॥ तत्रैवं श्रावकीकृत्य, शूलपाणिं व्यतीत्य च । तच्चतुर्मासकं पक्षक्षपणैरन्यतोऽगमत् ॥ २२५ ॥ विभोर्दक्षिणवाचालाद्यतो वाचालमुत्तरम् । तत् त्रयोदशमास्यन्ते, पपातांशुकमंशतः ॥ २२६ ॥ मा भूत्पतितमस्थाने, स्वामिने-

त्येतदीक्षितम् । गृहीतं तेन विप्रेण, तन्तुवायस्य चार्पितम् ॥ २२७ ॥ तद्योजयित्वा लक्षेण, विक्रीय भ्रातराविव । अर्द्धमर्द्धं सुवर्णस्य, मुद्रा जगृहतुश्च तौ ॥ २२८ ॥ अन्यदा श्वेतवीं गच्छन्, विभुर्गोपैरभाष्यत । देवार्य ! दृग्विषोऽत्राहिस्तदन्येनाध्वना व्रज ॥ २२९ ॥ स्वामी तस्योपकाराय, समेत्य सरलाध्वना । कायोत्सर्गे स्थितस्तेन, दृष्टो दष्टोऽपि नापतत् ॥ २३० ॥ विस्मितं तं प्रभुः प्राह, मौनाभिग्रहवानपि । ननु बुध्यस्व बुध्यस्व, चण्डकौशिक ! मा मुहः ॥ २३१ ॥ त्वं हि पूर्वभवे भेकं, विराध्य क्षुल्लकेरितः । तं हन्तुमुद्यतः स्तंभेऽथास्फाल्य गतजीवितः ॥२३२॥ ज्योतिष्कीभूय संजातः, सुतः कुलपतेरथ । कौशिको नाम रोषात्तु, ख्यातोऽभूच्चण्डकौशिकः ॥ २३२ ॥ युग्मम् ॥ मृते कुलपतौ च त्वामदातारं प्रकोपनम् । हित्वा तपस्विनो जग्मुः, कः शुष्कं सेवते सरः ? ॥ २३३ ॥ वृत्यर्थमन्यदाऽऽनेतुं, कण्टकान् व्रजिते त्वयि । श्वेतवीतः समागत्य, कुमारैर्विद्रुतं वनम् ॥ २३४ ॥ तज्ज्ञात्वा च समागच्छन्, समुद्यतपरश्वधः । गर्त्तेऽपतः कुठारेण, शिरो दीर्णं च ते द्विधा ॥ २३५ ॥ मृतोऽहिर्दृग्विषो जातस्तत्रैव च वने भवान् । विराधितं हि श्रामण्यं, बह्वनर्थप्रदायकम् ॥ २३६ ॥ इत्थं स्वस्य भवान् श्रुत्वा, वीक्ष्य चासृक् सितं प्रभोः। जातिस्मरणमुत्पेदे, चक्रे त्वनशनं सुधीः ॥ २३७ ॥ स शान्तः स्वमुखं क्षिप्त्वा, बिले तिष्ठन्नशोभत । सविषाभ्यां निजाक्षिभ्यां, दुर्गतिं दग्धुमुद्यतः ॥ २३८ ॥ यष्टिलोष्टादिभिर्लोकास्तद्देहमुपदुद्रुवुः । तक्रविक्रयकारिण्योऽम्रक्षयंश्च मुहुर्मुहुः ॥ २३९ ॥ चक्रिरे चालनीप्रायं, तत्कायमथ कीटिकाः । जीवात् तत्तादृशं कर्म्म, कथं स्यादन्यथा पृथक् ? ॥ २४० ॥ उपसर्गान् विषह्यैवं, गतोऽहिः कल्पमष्टमम् । उत्तरीतुं प्रभुर्गङ्गां, नावं समधिरूढवान् ॥२४१॥ कौशिकोक्तिं तदा श्रुत्वा, शाकुनः क्षेमिलोऽवदत् । नाद्य भद्रं महर्षेस्तु, प्रसादादस्य सुन्दरम् ॥ २४२ ॥ यस्त्रिपृष्ठे भवे सिंहो, हतस्तज्जन्तुना तदा । दृष्टो नागकुमारेण, तं नावं भेत्तुमुद्यतः ॥ २४४ ॥

निवार्योपद्रवन्तं तं, भिन्दन्तं च ररक्षतुः । कम्बलसबलजीवौ, नव्यौ नागकुमारकौ ॥ २४५ ॥ तत्कथा मथुरापुर्यां, जिनदासोऽस्ति धार्मिकः । बालत्वे तेन चाब्रह्म, निषिद्धं विषमे तिथौ ॥ २४६ ॥ अर्हद्दास्यभिधा तत्र, कुलीनाऽस्ति च बालिका । गुरोः पुरो न्यषेधीच्च, साऽप्यब्रह्म समे तिथौ ॥ २४७ ॥ दैवात्तयोर्विवाहोऽभूत्, प्रतिज्ञाश्वरतोर्जुषोः । ब्रह्मव्रतमकालुष्यं, द्वयोर्निर्वहति स्म च ॥ २४८ ॥ प्रवर्द्धमानसंवेगौ, भावात्तद्द्वादशव्रतौ । चतुष्पदं सचित्तं च, स्वभोगे परिवर्ज्जतः ॥ २४९ ॥ आभीरी दुग्धदध्यादि, या सदाऽऽनयते गृहे । जाता तया सह प्रीतिरन्यदा तत्तनूभुवः ॥ २५० ॥ विवाहे श्रेष्ठिना वस्त्रालंकारादि समर्पितम् । विवाहानन्तरं सा तु, वृषयुग्मोपदामदात् ॥ २५१ ॥ युग्मम् ॥ तदा नासीद् गृहे श्रेष्ठी, मुक्त्वाऽऽभीरी तु तद्गता । आगतस्तौ वृषौ वीक्ष्य, श्रेष्ठी चित्ते व्यचिन्तयत् ॥ २५२ ॥ एतौ वराकौ वाह्येते, वराकी सा च दूयते । तत्प्राशुकतृणाम्भोभिः, पोषयामि वृषाविमौ ॥ २५३ ॥ ध्यात्वेति धर्म्माख्यानेन, तेन तौ श्रावकीकृतौ । कुर्वाते सर्वदा पर्वतिथिष्वाहारवर्जनम् ॥ २५४ ॥ जातावतिमृदू तौ चावाह्यमानौ गतेऽन्यदा । बहिः श्रेष्ठिनि मित्रेण, नीत्वा तौ वाहितावति ॥ २५५ ॥ मुक्तौ तौ पुनरानीय, श्रमार्तौ निःसहांगकौ । पतितौ वीक्ष्य च श्रेष्ठी, जातस्तद्दुःखदुःखितः ॥ २५६ ॥ कारिताऽऽराधनावात्तानशनौ नागतां गतौ । ज्ञात्वाऽवधेः सुदंष्ट्रोत्थोपसर्गं स्वामिनो द्रुतम् ॥ २५७ ॥ आगत्यैकेन नौरुत्तारिता गंगाप्रवाहतः । अपरेण सुदंष्ट्रस्तु, युद्धे जित्वा प्रणाशितः ॥ २५८ ॥ युग्मम् ॥ गन्धाम्बुपुष्पवृष्टिं च, द्वाभ्यामपि कृता विभौ । सर्वैर्नमस्कृतः स्वामी, नौलोकैरथ तौ गतौ ॥ २५९ ॥ गतो राजगृहे तंतुवायशालैककोणके । द्वितीयां प्रावृषं मासक्षपणैरत्यगाद्विभुः ॥२६०॥ इतश्चाजनि भद्रायां, सुतो मंखस्य मंखलेः। स गोशालाप्रसूतत्वाद्गोशाल इति कीर्त्तितः॥२६१॥मंखा हि गदिताश्चित्रपट्टिकाजीविनो जनाः।दुःशीलोऽपि प्रकृत्याऽ-

सौ, तेनोपायेन जीवति ॥२५२॥ सोऽपि द्वितीयकोणेऽस्थान्मासक्षपणपारणे। विभो रत्नादिवृष्टिं च, दृष्ट्वा चेतस्यचिंतयत् ॥२६३॥
न सामान्यो ह्यसौ शिष्यस्तदेतस्य भवाम्यहम्। ध्यात्वेति मुण्डीभूयासौ, पर्यगात् स्वामिना समम् ॥ २६४ ॥ तृतीयां प्रावृषं
स्वामी, द्विमासक्षपणोऽत्यगात्। कायोत्सर्गेण चम्पायामुद्गुहा(त्कटा)द्यासनस्तथा॥२६५॥ चतुर्थीं प्रावृषं पृष्ठचम्पायां पंचमीं पुनः।
श्रींभद्रिलपुरे चक्रे, चतुर्मासीमुपोषितः ॥ २६६ ॥ माघमासेऽन्यदा कायोत्सर्गस्थं कटपूतना। दृष्ट्वा त्रिपृष्ठजन्मस्त्री, वैक्रियित्वा
तपस्विनीम् ॥ २६७ ॥ जटावल्काम्बुभिः स्वामिगात्रं शीतादुपाद्रवत्। सहन् श्रुतावधिज्ञाने, सविशेषत्वमाप सः ॥ २६८ ॥
युग्मम् ॥ चतुर्मासोपवासैश्च, षष्ठीसप्तमिकाष्टमीः। सप्तिकाऽऽलभिकाराजगृहेषु प्रावृषोऽत्यगात् ॥२६९॥ लाढाद्यनार्यदेशेषु, शीतो-
ष्णादिसहः प्रभुः। नवमीं प्रावृषं तस्थौ, द्रुतले वसतिं विना ॥ २७० ॥ भ्रमन् वभौ सगोशालः, कुशालः सप्तवत्सरीम्।
यतोऽध्वन्यन्यदा (प्रोचे,) गोशालो बालचेष्टितः ॥ २७१ ॥ (वात्स्यायनं तपस्यन्तं, दृष्ट्वा यूकासमाकुलं) यूका
शय्यातरत्वेन, शान्तात्मानं पुनः पुनः ॥२७२॥ दुर्वाचा तस्य दग्धेन, तं दग्धुं मुमुचेऽमुना। तेजोलेश्या प्रणश्यायं, स्वामिपादा-
नुपागमत् ॥ २७३ ॥ भर्त्राऽऽयुःप्रकृतेरस्य, कृपां कृत्वा कृपालुना। प्रकृत्या शीतलेश्येन, सा हृता शीतलेश्यया ॥ २७४ ॥
तद्वीक्ष्य क्षमयामास, स्वामिनं मुनिरानमन्। युष्मदीयो मयाऽज्ञायि, नायमित्यसकृद्वदन् ॥ २७५ ॥ गोशालेन पुनः पृष्टस्तेजो-
लेश्योद्भवं जगौ। षण्मासी सनखमाषमुष्ट्याऽम्बुचुलुकेन च ॥ २७६ ॥ तत्कृत्वा प्रत्ययं वीक्ष्याष्टाङ्गज्योतिषवानयम्। पृथक्
पर्याट् गोशालो, जिनोऽहमिति विब्रुवन् ॥ २७७ ॥ दशमीं प्रावृषं स्वामी, श्रावस्त्यां पुरि निर्ममे। अप्येकपुद्गलन्यस्तदृष्टिः प्रति-
मया स्थितः ॥२७८॥ पेढालग्रामपार्श्वस्थः, शक्रेणेति प्रशंसितः। श्रीवीरः क्षोभ्यते नैव, सेन्द्रैर्देवासुरैरपि ॥ २७९ ॥ युग्मम् ॥

शक्रसामानिकस्तच्च, श्रुत्वा तत् सङ्गमाभिधः । कृतप्रतिज्ञस्तत्रागाद्वीरं क्षोभयितुं प्रभुम् ॥ २८० ॥ तेन च प्रथमं चक्रे, रजोवृष्टिः पिपीलिका । दंशा घृतेलिका पश्चाद्, वृश्चिका नकुला अपि ॥ २८१ ॥ सर्प्पाश्च मूषका हस्ती, पिशाचव्याघ्ररूपके । पित्रोश्च रूपं कटकं, पादयोरग्निदीपनम् ॥२८२॥ पक्षिणां लम्बनं काये, महावातेन पातनम् । ततः संवर्त्तवातेन, चक्रवद् भ्रमणं परम् ॥२८३ ॥ सङ्गीतं वरदानं च, प्रतिगेहमनेषणा । लोहभारसहस्रस्य, चक्रं शीर्षे च चिक्षिपे ॥ २८४ ॥ आजानु भगवानुर्व्यां, मग्नोऽप्यस्मिन् कृपापरः । निराहारोऽपि षण्मासीमुपसर्गान् शमोऽसहत् ॥ २८५ ॥ कुलकम् ॥ स निर्विण्णः समागच्छन्; सौधर्म्मे शक्रताडितः । निजं निर्वाहयत्यायुरब्धिमानं सुराचले ॥ २८६ ॥ षण्मास्यन्ते प्रभुर्गत्वा, गोकुले पारणं व्यधात् । वत्सपालप्रसूदत्तपायसेनोज्झितेन तु ॥ २८७ ॥ सञ्जाते पारणे चास्य, विभुं वन्दितुमाययुः । सौख्यसंयमिकाः सार्ववासनावासनाभृतः ॥ २८८ ॥ वैशाल्यां पुरि सम्पूर्णचतुर्मासोपवासिना । प्रावृडेकादशी चक्रे, स्वामिना सिद्धिगामिना ॥२८९॥ जीर्णश्रेष्ठी प्रभुं नित्यपारणाय न्यमन्त्रयत् । नवश्रेष्ठिगृहे माषैः, स्वामीचक्रे तु पारणम् ॥ २९० ॥ पंच दिव्यानि तत्रासन्नन्यतो विहृतो विभुः । श्रीपार्श्वनाथशिष्योऽत्र, केवली समवासरत् ॥ २९१ ॥ वन्दित्वाऽपृच्छि राज्ञाऽसौ, को धन्यः श्रेष्ठिनोर्द्वयोः? । केवल्याह नवस्यास्य, वसुधारैहिकं फलम्॥२९२॥ जीर्णो नाकर्णयिष्यच्चेत्, पारणादुन्दुभिध्वनिम् । केवलं तन्मुहूर्त्तेनावाप्स्यद्यातोऽच्युतेऽधुना ॥२९३॥ तत् श्रुत्वा गहवो बुद्धाः, शिशुमारपुरेऽन्यदा । कायोत्सर्गे स्थिते नाथे, चमरोत्पतनं त्वभूत् ॥ २९४ ॥ कोशाम्ब्यामथ नाथोऽगाज्जगृहेऽभिग्रहं परम् । चतुर्द्धा द्रव्यतो माषाः, कौशाम्बी क्षेत्रतः पुनः ॥ २९५ ॥ कालतो यामयुग्मे तु, भावतो राजनन्दना । प्रपन्ना दासतां मुण्डा, कुमारी रुदती तथा॥२९६॥ यन्त्रितांह्रिद्वयान्तःस्थदेहली षष्ठ(त्यष्टम)पारणे । सूर्प्पकोणेन दत्ते चेत्ततोऽहं पारयामि तैः ॥२९७॥

विशेषकम् ॥ एवं साभिग्रहः कर्म्मक्षपणाय क्षमानिधिः । प्रतिधिष्ण्यं चरन् वीरः, शीतरोचिरिवाययौ ॥ २९८ ॥ तत्र राजा शता-
नीकस्तस्य राज्ञी मृगावती । परमश्राविका पुत्री, श्रीचेटकमहीभुजः ॥ २९९ ॥ तस्य मन्त्री सुगुप्तोऽस्ति, नन्दानामास्य गेहिनी ।
स्नेहो नन्दामृगावत्योः, परमः समशीलयोः ॥ ३०० ॥ श्रेष्ठी धनावहश्चास्ति, स्वभावादृजुमानसः । तस्य भार्याऽस्ति मूलाख्या,
प्रतिकूला ऋजुष्वपि ॥ ३०१ ॥ अन्यदा सचिवावासात्, प्रविश्य निस्सृते विभौ । ज्ञापितो नन्दया मन्त्री, मृगावत्या च भूपतिः
॥ ३०२ ॥ तेन मन्त्री समादिष्टः, शास्त्रज्ञास्तेन भाषिताः। अभिग्रहो न केनापि, ज्ञातस्तु प्रभुचेतसः ॥ ३०३ ॥ नौसैन्येन पुरा
गत्वा, शतानीकनृपोऽरुणत् । चंपां तदाऽऽकुलेऽनेशत्तत्पतिर्दधिवाहनः॥ ३०४ ॥ यो यद् गृह्णाति यद्घुष्टे, उद्घुष्टे तच्चमूचरैः ।
चम्पा मुषितसर्वस्वा, क्षणेनापि कृता भटैः ॥ ३०५ ॥ तदौष्ट्रिकेण चैकेन, दधिवाहनगेहिनी । धारण्याख्या समं पुत्र्या, वसु-
मत्या समाददे ॥ ३०६ ॥ तेनोक्तं पथि लोकाग्रे, भार्येयं मे सुतां पुनः । विक्रेष्ये सा तदाकर्ण्य, विदीर्णहृदया मृता ॥ ३०७ ॥
कौशाम्ब्यां तेन विक्रीतां, सुतां लात्वा धनावहः । गृहं नीत्वाऽथ मूलाया, भुजिष्यत्वेन चार्पयत् ॥३०९॥ तस्याः शीलेन वाचा
च, शैत्यादाप्यायितः पिता । तां सुतां चन्दनेत्यूचे, मूला तस्यास्तु शंकते ॥ ३१० ॥ बालां रूपवतीमेतां, श्रेष्ठी चेत्परिणेष्यते ।
तदाऽहं निहता मूलान्मूला चिन्तयतीति च॥३११॥ शुशुभे बर्हिबर्हाभकेशी सा मृगलोचना। नवीनयौवनारम्भा, रम्भा भुवमिवा-
गता ॥ ३१२ ॥ अन्यदाऽन्यपरीवारे, व्याकुले गृहकर्मभिः । वातायने च सुप्तायां, मूलायां निद्रया विना ॥ ३१३ ॥ ग्रीष्मार्क-
तापसन्तप्ते, श्रेष्ठिन्याश्रयमागते । स्वपितुश्चन्दना भक्त्या, पादशौचं व्यधादियम्॥३१४॥ तदा च कचभारोऽस्याः, श्रस्तो माऽऽर्द्रो
भवत्विति । श्रेष्ठिना कम्बया धृत्वा, बद्धो मूला ददर्श तत् ॥३१५॥ ततोऽध्यायन् मयाऽध्यायि, यत्पूर्वं तत्तथा ध्रुवम् । श्रेष्ठिनश्रे-

ष्टितं स्पष्टं, पुत्रीत्वं छलनं परम्॥३१६॥ मुण्डयित्वाऽक्षिपद् यंत्रे, निगडेन नियंत्रिताम्। दिनत्रये गते श्रेष्ठी, ज्ञात्वा तद्बहिरानयत्। ॥ ३१७ ॥ क्षुधितायाः समर्प्यास्याः, कुल्माषान् सूर्पकोणके। अगान्निगडभंगाय, लोहकारस्य हूतये ॥३१८॥ रुदत्यां जिन आयासीत्, पारणं कारितं तया। दिव्यानि पंच तत्रासन्, निगडौ नूपुरौ वृतौ ॥ ३१९ ॥ मातृष्वसुर्मृगावत्या, मिलको वृष्टिमीप्सुकम्। निवार्य नृपतिं प्रादाद्धनं तत् श्रेष्ठिने मघा ॥३२०॥ नृपस्य चन्दना दत्ता, देवेन्द्रेण विभोरियम्। भाविनी प्रथमा शिष्येत्युक्त्वा स्वर्गमुपेयिवान् ॥ ३२१ ॥ तपो वीरविभोरेवं, षण्मासक्षपणं पुरा। साभिग्रहात्तु षण्मासी, न्यूनाऽभूत्पंचभिर्दिनैः ॥३२२॥ चतुर्मास्यो नवाभूवन्, त्रिमास्यौ द्वे बभूवतुः। सार्द्धद्विमासिके द्वे च, द्विमासक्षपणानि षट् ॥३२३॥ द्वे सार्द्धमासिके जाते, मासिकान्यर्कसंख्यया। पक्षा द्वासप्ततिश्चासन्, भद्रादिप्रतिमात्रयम् ॥ ३२४ प्रतिमाश्चैकरात्रिक्यो, द्वादशाष्टमभक्ततः। एकोनत्रिंशदधिके, षष्ठानां द्वे शते मते ॥३२५॥ नित्यभक्तं चतुर्थं च, कदाचिदपि नाजनि। सर्वमेव तपःकर्म्म, जलहीनं प्रभोरभूत् ॥ ३२६ ॥ जातं सैकोनपंचाशत्, पारणाहःशतत्रयम्। द्वादशाब्दी च षण्मासी, पक्षं छद्मस्थताऽजनि ॥ ३२७ ॥ एवं विहृत्य श्रीवीरः, समेत्य ऋजुपालिकाम्। नद्यां तलेऽथ कंकेल्लेः, कृतषष्ठतपाः स्थितः ॥ ३२८ ॥ तत्रोत्कटासनस्थस्यातापनास्थस्य माधवे। प्रभोर्दशम्यां शुद्धायां, चन्द्रे हस्तोत्तरास्थिते ॥ ३२९ ॥ अपराह्णे चतुष्कर्म्मक्षयादजनि केवलम्। क्षणं जातं सुखं तत्र, क्षणे नैरयिणामपि ॥ ३३० ॥ सेन्द्रैर्देवैः समागत्य, प्राकारत्रयमादधे। आद्यायां देशनायां तु, प्रतिबोधो न कस्याचित् ॥ ३३१ ॥ मातंगनाम्ना कृतसन्निधानो, यक्षेण सिद्धायिकया च देव्या। श्रीवीरनाथो विजहार भव्याम्बुजप्रबोधेऽम्बुजबन्धुबन्धुः ॥ तुर्यद्वार इति तुर्यगाथार्थः ॥ अथ पुनरपि प्रव्रज्यादुष्करत्वमेव व्यनक्ति,

जावज्जीवममज्जणमणवरयं भूमिसयणमुद्दिट्ठं । केसुद्धरणं च तहा निप्पडिकम्मत्तणमपुव्वं ॥ ५ ॥
यावज्जीवं अमज्जनं-अस्नानं, उद्दिष्टमिति द्वितीयपदगतं चतुर्ष्वपि पदेषु योज्यते, यदुक्तमुक्त्या पूज्यश्रीहरिभद्रगुरोर्मेया ।
समरादित्यसंक्षेपे, साधुस्नानोज्झनक्षणे ॥ १ ॥ कृते स्नाने क्षणं शौचं, रागमानौ च चेतसि । स्त्रीजनप्रार्थनीयत्वं, ब्रह्मचर्यस्य
दूषणम् ॥ २ ॥ घातो जलस्थजीवानामन्यसत्त्वविबाधनम् । क्षीरक्षालनमंगारे, इवाज्ञानप्रकाशनम् ॥ ३ ॥ अस्नाने तु न दोषास्ते,
मत्वेति मुनिपुंगवैः। वर्ज्यं स्नानं ततः सिद्धिवधूसंगमसस्पृहैः ॥ ४ ॥ तथा अनवरतं भूमिशयनमुद्दिष्टं, न तु पल्यंकादिशयनं,
केशोद्धरणं च, तथा निष्प्रतिकर्म्मत्वं अपूर्वं, विशिष्टमित्यर्थः, समासतो गाथार्थः, व्यासार्थस्तु निष्प्रतिकर्म्मत्वे श्रीसनत्कुमार-
चक्रवर्त्तिमुनिरुदाह्रियते, तथाहि-श्रियं कांचन विभ्राणे, श्रीकांचनपुरेऽभवत् । ( श्रीविक्रमयशोव्यासः ) श्रीविक्रमयशा नृपः
॥ १ ॥ अन्तःपुरपुरन्ध्र्योऽस्य, सन्ति पंचशतीमिताः । स चिक्रीड समं ताभिर्वशाभिरिव वारणः ॥ २ ॥ तत्रेभ्यो नागदत्तोऽस्ति,
तस्य लोकोत्तराकृतिः । विष्णोः श्रीरिव विष्णुश्रीः, प्रिया प्राणप्रियाऽस्ति च ॥३॥ साऽन्यदा दृग्गवाक्षेण, प्रविश्य नृपहृद्गृहम्।
विवेकादीनि रत्नानि, चिरत्नान्यप्यपाहरत् ॥ ४ ॥ ज्ञात्वा दस्युमुदास्यैनां, न्यास्थदन्तःपुरे नृपः । बद्धा च बाहुपाशेनामुंचन्ना-
त्तरसामपि ॥ ५ ॥ तामेव पीडयन्नंगे, रक्षत्यन्याः स चौरसूः । राज्ञः संवननं चौरनिग्रहश्च यतो नयः ॥ ६ ॥ निजप्रियावियोगा-
द्विग्रहग्रस्तोऽन्यचेतनः । उन्मत्तो नागदत्तोऽभूद्दत्तदुःखो नरेन्दुना ॥ ७ ॥ चतुष्के चत्वरे मार्गे, द्विपथे च चतुष्पथे। वैष्णवो
विष्णुवद्विष्णुश्रियमेकाममंस्त सः ॥ ८ ॥ तामेव हृदये बिभ्रद्बहिरन्तश्च सन्ततम् । न कांचनपुराधीशो, मेने कांचन किंचन
॥ ९ ॥ प्राणेश्वरापहारिण्यास्तस्याः प्राणापहारकम् । निर्ममुः कार्मणं राजपत्न्योऽन्याः कामनिष्ठुराः ॥ १०॥ कार्मणेन मृतामेता-

मजानन् मोहमोहितः । कुपतिः कुपितां ज्ञानवह्निप्रलग्नश्चट्टन्यधात् ॥ ११ ॥ चटुभिः पटुभिर्नाल्पैरजल्पंतीमिमामयम् । अंके कृतां(त्वा) क्षमाभर्त्ता, ( निजावस्थां ) कृपालीको न्यवेदयत् ॥ १२ ॥ तद्वीक्ष्य सोऽन्यतो निन्ये, मन्त्रव्याजेन मन्त्रिभिः । विष्णुश्रियः शरीरं तु, भुजिष्यैः प्रेषितं बहिः ॥ १३ ॥ मन्त्रिभिर्मन्त्रयित्वाऽसौ, वासवेश्मन्युपागतः । तया हीनं तु तद्वीक्ष्य, हा हतोऽस्मीति मूर्च्छितः ॥ १४ ॥ अग्रे विष्णुश्रिया छिन्नचैतन्यं मूर्छयाऽथ तम् । शोच्यशोच्यमशोचन्त, सचिवाः शुचिबुद्धयः ॥ १५ ॥ चन्दनादिहृता मूर्च्छा, यदा स प्राह मन्त्रिणः । यत्र क्वापि प्रिया मेऽस्ति, ततोऽप्यानीय दीयताम् ॥१६॥ इयमत्रोपविष्टाऽस्ति, वदद्भिः सचिवैरपि । द्वित्रिदिन्यनन्तरं निन्ये, नृपः कुणपसन्निधौ ॥१७॥ तदाऽगोपितगोप्यांगं, कृमिकीर्णं कलेवरम् । वीक्ष्य क्षोणिपतिर्दध्यौ, विवेकसदृशं हृदि ॥१८॥ कुलं शीलं यशः पुण्यं, यत्कृते सर्वमुज्झितम् । तस्या एतच्छरीरस्य, परिणामोऽयमीदृशः ॥१९॥ मलमूत्रनिधानेऽत्र, गात्रेऽसृग्विस्रगन्धिनि । तत्तच्छुपिरमेध्येऽस्मिन्, मेध्यबुद्धिर्मया कृता ॥ २० ॥ अविक्रमेण कामस्य, जयेऽपयशसा जने । स्वं नामापि मयाऽनर्थकारिणाऽनर्थकं कृतम् ॥२१॥ यथेदं नश्वरं देहं, तथेदमपि निश्चितम् । तदस्य लाभं गृह्णामि, कर्म्मनिर्मूलकं व्रतम् ॥ २२ ॥ ध्यात्वेति स व्रती सूरेः, सुव्रताद् दुस्तपं तपः । तप्त्वा सनत्कुमारेऽभूत्, कल्पे देवो महर्द्धिकः ॥ २३ ॥ ततो रत्नपुरे जातो, जिनधर्म्माभिधो वणिक् । नागदत्तस्त्वभूद् भ्रान्त्वा, भवसिंहपुरे द्विजः ॥ २४ ॥ स त्रिदण्डयग्निशर्म्माख्यो, द्विमासक्षपणव्रती । राज्ञा रत्नपुरेशेन, तत्रायातो निमन्त्रितः ॥ २५ ॥ तत्रैव जिनधर्म्मं स, वीक्ष्य तद्वृद्धिद् द्विधाऽवदत् । भोजनं भाजनं न्यस्य, कुर्वे पृष्ठेऽस्य नान्यथा ॥ २६ ॥ हृदयं जिनधर्म्मस्य, जिनधर्म्मेण वासितम् । राजाऽऽज्ञयाऽप्यतः प्राप, पृष्ठं तस्यान्यतीर्थिकः ॥ २७ ॥ तप्तपायसपात्रेणादाहि पृष्ठं न हृत्पुनः । तत्पृष्ठेऽस्योद्धृता तेन, छविर्नतु मुखच्छविः ॥ २८ ॥ गत्वा-

ऽऽश्रयमयं संघचैत्यपूजां विधाय च। व्रतमादाय शैलाग्रे, कायोत्सर्गेण तस्थिवान् ॥ २९ ॥ पृष्ठमांसादिभिर्गृद्धैर्बाध्यमानोऽपि निश्चलः। पूर्णायुरिन्द्रः सौधर्मे, जिनधर्मोऽजनिष्ट सः ॥ ३० ॥ स त्रिदण्डी तु मृत्वाऽस्य, यानमैरावणोऽजनि। ततश्च्युतो भवं भ्रान्त्वा, सिताक्षो गुह्यकोऽभवत् ॥ ३१ ॥ इतश्च जम्बूद्वीपस्याभरणे कुरुनीवृति। इहास्ति हस्तिनपुरं, पुरं सुरपुरप्रभम् ॥ ३२ ॥ रम्यश्च सेत इत्याख्याख्यातस्तत्राभवन् नृपः। सहदेवी महादेवी, चास्य देवीव रूपतः ॥ ३३ ॥ तत्कुक्षौ जिनधर्मस्य, जीवः सौधर्म्मकल्पतः। चतुर्दशमहास्वप्नसूचितः समवासरत् ॥ ३४ ॥ कालेऽसूत सुतं सा तु, महेनाथ महीयसा। सनत्कुमार इत्याख्यामस्य ख्यातां पिताऽतनोत् ॥ ३५ ॥ मूर्त्तो मनोरथः पित्रोरयं सूनुरवर्द्धत। कुशलः कलयामास, क्रमशः सकलाः कलाः ॥ ३६ ॥ स सुभ्रूभ्रूलतावासवनं प्राप्तश्च यौवनम्। मैत्रीं महेन्द्रसिंहेन, कालिन्दीसूरजेन च ॥ ३७ ॥ स च सार्द्धैकचत्वारिंशद्धनुस्तनुमानभृत्। अद्भुतरूपस्वर्णाभः, सर्वलक्षणलक्षितः ॥ ३८ ॥ अन्यदा मकरन्दाख्योद्याने मित्रेण संयुतः। गतो रन्तुं वसन्तेऽसौ, वसन्तेनेव हृन्मथः ॥ ३९ ॥ तदा चाश्वपतिप्रत्नप्राभृताश्वव्रजान्नृपः। नाम्ना जलधिकल्लोलमश्वं प्रैषीत् सुतोचितम् ॥ ४० ॥ त्यक्तक्रीडः समारोहत्, कुमारस्तं हयं रयात्। चलाचलनमात्रेणोत्प्लुत्य दूरं गतः स तु ॥ ४१ ॥ चलन् सनत्कुमारोऽथ, निरुणद्धि यथा यथा। शिक्षायां विपरीतोऽश्वः, स धावति तथा तथा ॥ ४१ ॥ अन्वयासीत् कुमाराश्वमश्वसेनोऽश्वसेनया। तदा च त्यपावन्त्या ( वारयया गत्या ) ऽपमृत्युर्नेत्रयोरभूत् ॥ ४३ ॥ ततो महेन्द्रसिंहेन, महानिर्बन्धतो नृपः। निन्ये सुतवियोगार्त्तो, व्यावृत्य नगरं प्रति ॥ ४४ ॥ स्वयं नृपमनुज्ञाप्यानुमित्रं सांध्यरागवत्। महेन्द्रसिंहः कान्तारं, द्वीपान्तरमिवाविशत् ॥ ४५ ॥ अशरण्येष्वरण्येषु, निविडाद्रिषु वादिषु। निम्नगासु सुदुर्गासु, बभ्राम सुहृदः कृते ॥ ४६ ॥ न शीतं शीत-

कालस्य, नोष्णमुष्णागमस्य च । नाम्बु चाम्बुदकालस्यानलस्योऽयं व्यजीगणत् ॥ ४७ ॥ महेन्द्रसिंहः सर्वत्र, मित्रमेवं विलोकयन् । ससारसारसारावैरासार सरः सरन् ॥ ४८ ॥ पद्मिनीनिलयं स्वच्छफलदैः परिवारितम् । समित्रमिव तद्वीक्ष्य, तापं तत्याज वर्त्मजम् ॥ ४९ ॥ तच्चातिथेयमातिथ्यमस्य चक्रे फलैर्जलैः । अर्जितं सर्वसामान्यं, धनं धान्यं सरश्च सन् ॥ ५० ॥ तरीतुमिव दुःखाब्धिमारूढस्यास्य संवरम् । दक्षिणेनेक्षणेनोच्चैः, पस्पन्दे बाहुनाऽपि च ॥ ५१ ॥ ततो हर्षसमुत्कर्षरोमहर्षः पुरो व्रजन् । बेणुवीणाध्वनिस्फीतं, संगीतमशृणोदसौ ॥ ५२ ॥ ददर्श दर्शनीयांगमृगाक्षिमध्यवर्त्तिनम् । कण्ठपीठलुठद्धारं, सादरं सुहृदं निजम्॥५३॥ दूरादुद्दण्डमुद्दण्डप्रणामं स्रवयन्नयम्। समुत्थाय कुमारेण, सहर्षं परिषस्वजे॥५४॥ तयोर्मिलितयोः कालाद्वारम्भोधरयोरिव । स्नेहयुक्तिरभूद् व्यक्त्या, बाष्पमुष्णं विमुंचतः ॥ ५५ ॥ प्राग्वृत्तं तेन पृष्टश्च, कुमारः कथने प्रियाम् । आदिश्य च कुलमतिसंज्ञां शेते स्म कैतवात् ॥ ५६ ॥ साऽप्याह च तुरंगेणापहृतस्तत्र सुहृदः । द्वितीयेऽह्नि श्रमेणार्त्तः स च निश्चेष्टतां गतः ॥ ५७ ॥ मुक्तः सख्यादथोत्तीर्य, मुक्तः प्राणैरपि क्षणात् । राजापथ्यकृतः प्रार्थ्यः, प्राणनाशो यथा तथा ॥ ५८ ॥ आर्यपुत्रोऽपि मूर्छालः, सुप्तस्तरुतले क्षणम् । तदाधिष्ठातृयक्षेणाभ्यागतोऽयं महापुमान् ॥ ५९ ॥ विचार्येति जलैः सिक्तः, प्रबुद्धः पायितः पयः । ऊचे कस्त्वं कुतश्चैतत्, पयः पीयूषसोदरम् ? ॥ ६० ॥ ॥ युग्मम् स प्राहैवमहं यक्षः, पथश्रान्तस्य ते कृते । सत्कृपो मानसे मानिन् !, मानसमढौकयं पयः ॥ ६१ ॥ त्वत्सखा प्राह दाहाय, बहवोऽपि दवा इव । सन्ति शान्त्यै पुनस्तस्य, भवानेको घनाघनः ॥ ६२ ॥ तापस्त्वेष ममात्यन्तं, मानसेऽमानसेवनात् । शान्तिं यास्यति तत्त्वं मां, नय तत्र नयाध्वग ! ॥६३॥ ततः पुण्यजनेनामुं, नीतं पुण्यजनोत्तमम् । कैलासे मानसान्तःस्थं, धृत्वा तापमपाहरत् ॥६४॥

यावदुत्तरति स्नात्वा, तावत् प्राग्जन्मवैरिणा। वीक्ष्यासिताक्षयक्षेण, क्रोधतो योधितश्चिरम् ॥ ६६ ॥ युद्ध्वा चिरं च ते सख्या, वज्रसारेण मुष्टिना। हतः प्रहतदर्पः स, गतोऽथ धृतमत्सरः ॥६७॥ ततस्त्वदीयमित्रस्योपरिष्टात्तुष्टितः कृता। पुष्पवृष्टिश्च हृष्टिश्च, सुरस्त्रीभिर्विकस्वरा ॥ ६८ ॥ तदा च भानुवेगस्य, विद्याधरपतेः सुताः। अष्टसङ्ख्यास्तमभ्यर्च्य, निन्यिरे नगरं निजम् ॥ ६९ ॥ तासां च पितृदत्तानां, पाणिग्रहमयं व्यधात्। पूर्वभाग्यप्रदत्तानामष्टानां दिक्श्रियामिव ॥७०॥ सुप्तस्त्वाभिः समं द्वेषियक्षेणाक्षेपि सोऽन्यतः। प्रबुद्धः सौधमालोक्यारूढस्तं सप्तभूमिकम् ॥७१॥ सुदतीं रुदतीमेकां, तत्र प्रेक्ष्य मम प्रियः। तामुवाच किमेका त्वं?, का च? कस्माच्च रोदिषि? ॥ ७२ ॥ सोचे साकेतभूपालसुराष्ट्रस्य सुताऽस्म्यहम्। सुनन्दा नाम दत्ता चाश्वसेननृपसूनवे॥७२॥ कौरव्योऽस्मीति पित्रा सनत्कुमाराय, हृत्वा विद्याधरेण तु। मुक्ताऽस्म्यत्र गतश्चैप, न जाने किं करिष्यति? ॥ ७३ ॥ युग्मम् ॥ मा भैर्षारित्युक्त्वा तां सुहृत्तव। वज्रवेगं प्रियाचौरं, हन्ति स्माशनिवेगजम् ७४॥ ततःसुनन्दां स्त्रीरत्नं, प्राग्वेतृवज्जनि(जन)वेदितम्। उपयेमेऽश्वसेनाङ्गजनिर्जनितसम्मदम् ॥७५॥ वज्रवेगस्वसा सन्ध्यावली वव्रेऽमुमेव च। भ्रातृघाती पतिर्भावीति ज्ञात्वा ज्ञानिनो वचः ॥ ७६ ॥ जनको वज्रवेगस्याशनिवेगोऽथ मत्प्रियम्। अभ्यषेणयदस्यादाद्विद्यां सन्ध्यावली तदा ॥ ७७ ॥ तत्कालसिद्ध-विद्योऽयं, विद्याभुजबलोर्जितः। युयुधेऽशनिवेगेन, भानुवेगादिभिर्वृतः ॥ ७८ ॥ चिरं युद्ध्वा च चक्रेणाशनिवेगशिरोऽच्छिदत्। त्वन्मित्रेऽतः सुरैर्मुक्ता, पुष्पवृष्टिः पपात च ॥७९॥ वैताढ्याद्रौ ततो नीत्वा, चण्डवेगादिकैर्नृपैः। चक्रे खेचरचक्रित्वाभिपेकोऽस्य विवेकिनः ॥ ८० ॥ वन्दित्वा पूजयित्वा च, प्रतिमाः शाश्वतार्हताम्। क्रीडार्थमत्रायातोऽयं, मिलितश्च भवानिति ॥ ८१ ॥ प्रबुद्धोऽथ कुमारस्तं, वैताढ्यं सममानयत्। तेनापि तत्रायातेन, चक्रे चैत्येषु वन्दना ॥ ८२ ॥ ततः सखेचरः सान्तःपुरोऽसौ हस्ति-

नापुरे। समं महेन्द्रसिंहेन, समायातोऽश्वसेनभूः॥८३॥पिता राज्ये प्रमोदेन,स्थापयित्वा निजाङ्गजम्। राजर्षेः सुव्रतात् सम्यग्भवोत्तार्य-ग्रहीद्व्रतम् ॥८४॥ राजा सनत्कुमारोऽथ, सुहृदं सौहृदाश्रयः। महेन्द्रसिंहं सेनाधिपतित्वेऽतिष्ठिपन्मुदा ॥ ८५ ॥ चक्ररत्ने समुत्पन्ने, स षट्खण्डमसाधयत्। दशवर्षसहस्र्याऽसौ, वर्षं भरतनामकम् ॥८६॥ सम्पूर्णचक्रवर्तित्ववैभवः स्वपुरान्तिके। सनत्कुमारनामासौ, तुर्यश्चक्री समाययौ ॥८७॥ सौधर्मेन्द्रस्ततस्तस्मै, श्रीदेनाप्रेषयन्मुदा। चामरे कुण्डले देवदूष्ये द्वे पादुके अपि ॥८८॥ हारोडुमालां श्वेतातपत्रं च मुकुटं मणीन्। सपादपीठं पंचास्यपीठं भूरि च भूर्यपि ॥ ८९ ॥ प्रवृत्तेऽप्सरसां नृत्ते, कलं गायति तुम्बरौ। चक्रीश उत्सवप्रीतो, धनदेन प्रवेशितः ॥ ९० ॥ नृपैः समस्तैरभ्येत्य, कृते द्वादशवार्षिके। चक्रिणश्चक्रवर्तित्वाभिषेकस्य महोत्सवे ॥९१॥तव प्राग्जन्ममित्रस्य, शक्रेण प्रेष्य मामिह। उत्सवो विदधे श्रीदस्तमित्युक्त्वा तिरोदधे॥९२॥ युग्मम्॥ दध्रे सनत्कुमारस्य, लक्ष्म्या रूपेण तेजसा। सौभाग्येन च भाग्येन, न कोऽपि प्रतिरूपताम् ॥ ९३ ॥ एकदा च सुधर्मायां, नाटकक्षिप्तचेतसः। शक्र-स्येशानतोऽभ्यागात्, सुरः कोऽप्यतिभासुरः ॥ ९४ ॥ तेजांसि निजतेजोभिस्तेन देवेन नाकिनाम्। तिरोहितानि ताराणां, भानुनेव स्वभानुभिः ॥९५॥ गतेऽस्मिंस्त्रिदिवं तत्र, देवे देवैर्दिवस्पतिः। प्राचुर्यकारणं पृष्टस्तेजसां प्राह तान् प्रति ॥९६॥ जन्मन्ये-तेन पूर्वस्मिंस्तपस्तप्तं सुदुस्तपम्। आचामाम्लवर्द्धमानं, तत्प्रभावोऽयमद्भुतः ॥ ९७ ॥ पुनः पृष्टः सुरैः कोऽपि, सम्प्रत्यस्ति परो नरः। तेजस्वी रूपवांश्चेति?, ततः प्रोवाच वासवः ॥ ९८ ॥ चक्री सनत्कुमारोऽस्ति, यादृग् रूपेण तेजसा। तादृशः कोऽपि नैवास्ति, नरेष्वपि सुरेष्वपि ॥ ९९ ॥ तत्प्रत्ययार्थं द्वौ देवौ, भूत्वा भूदेवरूपिणौ। श्रीमत्सनत्कुमारस्य, द्वाःस्थानागत्य चोचतुः ॥ १०० ॥ द्विजावावां समायातौ, चक्रिरूपं निरूपितुम्। दूरदेशान्तगदेतच्चक्रिणे त्वं निवेदय ॥ १०१ ॥ तदानीं कृतसर्वांगा-

भ्यंगं तेन च चक्रिणम्। विज्ञप्य तौ समानीतौ, समीपे चक्रवर्त्तिनः ॥१०३॥ रूपमप्रतिरूपं तत्, तस्य ताभ्यां निरूप्य च। धुतौ मौली निषेद्धुं वा, रूपं नरसुरद्वये ॥१०२॥ उक्तं च देव! रूपं ते, प्रसिद्धेरधिकं ध्रुवम्। कृतार्थौ सर्वथाऽप्यावां, लोचने सफले च नौ ॥ १०४ ॥ चक्री प्राह द्युतिः का मे, लावण्येऽभ्यंगभंगुरे?। स्नातस्य काव्यवद् दृश्यं, सालंकारं वपुर्मम १०५ ॥ तौ विसृज्य कृतस्नानः, कल्पितानल्पभूषणः। साडम्बरोऽम्बरसिंहासनासीनः सभास्थितः ॥ १०६ ॥ अभितो वारनारीभिर्दूयमानप्रकीर्णकः। तावाकार्य द्विजन्मानौ, निजरूपमदर्शयत् ॥ १०७ ॥ तौ तन्निध्याय विध्यातदीपवन्मलिनाननौ। जातौ रूपाविरूपत्वप्रतिरूपवशादिव ॥ १०८ ॥ अध्यायतां मदानन्यानपि धीमान् करोति न। विशेपतस्तु रूपेण, जराक्षुद्रोगनाशिना ॥ १०९ ॥ चक्रिणा चिन्तयन्तौ च, पृष्टौ वैवर्ण्यकारणम्। शक्रस्तुतिं रुजाक्रान्तिं, देहस्याख्याय स्वर्गतौ ॥११०॥ चक्री न्यस्य सुतं राज्ये, विनयन्धरसूरितः। गृहीत्वा व्रतमन्यत्र, विजहार महातपाः ॥ १११ ॥ पुरमन्तःपुरं मन्त्रिमण्डलं चापि पृष्ठतः। षण्मासीममुना सार्द्धं, परिभ्रम्य न्यवर्त्तत ॥ ११२ ॥ स षष्ठपारणेऽभुंक्त, छागीतक्रं सचीनकम्। तेन तस्याभवत् सप्त, वेदनाः खेदनाधिकाः ॥ ११३ ॥ कच्छूशोपज्वरश्वासारुचिकुक्ष्यक्षिवेदनाः। सप्तवर्षशतीं सप्ताधिसेहेऽसौ महामुनिः ॥ ११४ ॥ सहमानस्य तस्यान्यानुपसर्गान् परीषहान्। लब्धयो विविधा जातास्ता नैवोपजिजीव सः ॥ ११५ ॥ पुनर्निष्प्रतिकर्म्मत्वप्रशंसां शक्रनिर्मितम्। श्रुत्वा सुरौ परीक्षार्थं, भिषग्रूपौ समागतौ ॥ ११६ ॥ तावूचतुर्मुनिं स्वामिन्नावां निजकभेषजैः। चिकित्सकौ चिकित्सावश्चिकित्सां तद्विधापय ॥ ११७ ॥ मुनिराह द्विधा रोगा, द्रव्यभावविभेदतः। भावरोगहरौ तच्चेद्युवां तन्मां चिकित्सताम् ॥ ११८ ॥ द्रव्यरोगहरौ चेत्तद्गलत्पामां ममांगुलिम्। पश्यतं श्लेष्मजस्पर्शस्वर्णवर्णीकृतां मया ॥ ११९ ॥ तद्देहश्यामले रोगैस्तपःस्वर्णकशाश्मनि। प्रति-

भाति स्म रेखेव, जातरूपनिभांगुली ॥१२०॥ तौ तद्वीक्ष्योचतुः शक्रार्थवादान्त्वत्परीक्षणम् । कर्त्तुमावामिहायातौ, न सामान्योऽसि सर्वथा ॥ १२१ ॥ तमुक्त्वेति सुरावेतौ, नत्वा स्तुत्वा मुहुर्मुहुः । गतौ सनत्कुमारस्तु, स्वनाम्ना स्वर्गमासदत् ॥ १२२ ॥ इति पञ्चमगाथार्थः ॥ अथ प्रव्रज्यादुष्करत्वं षष्ठगाथया विवृणोति—

**गुरुकुलवासो य सया खुहापिवासाइया य सोढव्वा । बावीसं च परीसह तहेव उवसग्ग दुव्वाइं ॥ ६ ॥**

गुरुकुलवासश्च सदा, गुरुकुलवासो हि स्मारणावारणाप्रेरणाप्रतिप्रेरणाहेतुरिति तत्रैव विनयः सम्भवति, ततो विनयविधौ साधुविषये आर्यचन्दना प्रवर्त्तनीविषये मृगावती च दृष्टान्तौ, तथाहि- स्वामिनः केवलज्ञानस्योत्पत्तौ गौतमादिषु । एकादशसु शिष्येषु, त्रिपदीसूत्रवाक्यतः॥१॥ सूत्रितद्वादशांगेषु, लंभितेषु गणेशताम्। अपापापुरि शक्रेणानीतोपस्वामि चन्दना ॥२॥ (युग्मम्) सा च कन्याशतैर्युक्ता, तयैव प्रतिबोधितैः । दीक्षिता शिक्षिता सर्वमाचारं स्वामिना स्वयम् ॥ ३ ॥ श्राविकाव्रतिनीधर्म्म-प्रवर्त्तकतया कृता । प्रवर्त्तिनीत्वे नाथेन, कौशाम्ब्यामन्यदाऽगमत् ॥ ४ ॥ कलापकम् ॥ तत्रागतश्च चम्पायां, निःस्वः श्वेतवकाभिधः । श्राविकाव्रतिनीवृन्दवृतां नृपतिवर्त्मनि ॥ ५ ॥ हित्वा सुखासनाश्वादि, सम्मुखैर्मन्त्रिभिर्नृपैः । समुत्थायापणेभ्यश्च, वन्द्यमानां महाजनैः ॥ ६ ॥ ददर्श दर्शनीयां तां, चन्दनां दृष्टिनन्दनाम् । पप्रच्छ स्थविरं चैकं, केयं पूज्यपदद्वया? ॥ ७ ॥ विशेषकम् ॥ स प्राह पुत्री चम्पेशदधिवाहनभूपतेः । श्रीवीरस्याद्यशिष्या च, स्वामिनः चन्दनाभिधा ॥ ८ ॥ प्रवर्त्तिनीपदस्थाऽसौ, वसतौ याति वन्दितुम् । मुमुक्षूः त्रिपदीस्थैर्यसुस्थितं सुस्थितं गुरुम् ॥ ९ ॥ तदाकर्ण्य स तद्वृन्दमन्वितो गुरुमानमत् । वन्दित्वा चन्दना सूरीन्निजोपाश्रयमागमत् ॥ १० ॥ गुरुप्रोक्तः स च प्रोचे, दृष्ट्वाऽमुं चन्दनागमम् । समेत्याहं

श्रितः पूज्यपादान् कल्पद्रुमोपमान् ॥ ११ ॥ ज्ञानात्तमुचितं ज्ञात्वा, सूरिभिर्गुणभूरिभिः । स सितासितया वाचा, क्षैरेय्याऽपि च तर्प्पितः ॥ १२ ॥ व्रतेच्छुः स व्रतं दत्त्वा, प्रहितः साधुभिः सह । चन्दनोपाश्रयं तैश्च, विधिनाऽन्तः प्रवेशितः ॥ १३ ॥ अभ्युत्थाय तया पीठे, निवेश्य च स वन्दितः । तत्पुरश्चार्यिकानीतमासनं नादृतं तया ॥ १४ ॥ उक्तं च किंच पूज्यानामागमः? स व्यचिन्तयत् । अहो व्रतं यतोऽमुष्या, मय्यप्येवं विनीतता ॥ १५ ॥ ध्यात्वेत्याहादिशत्पूज्या, युष्मद्वार्त्तार्थमत्र माम् । आपृच्छ्य साधुभिः सार्द्धं, गतो धर्मे स्थिरोऽभवत् ॥ १६ ॥ सतो वैमुख्यगान् कृत्वाऽधान्मदाँश्चन्दना दमान् । यथा तथा च साध्वीनामन्यासामपि युज्यते॥१७॥ इतः सुरप्रियो यक्षः, साकेतेऽस्ति स उत्सवे । चित्रितश्चित्रकृद्घाती, ग्रामघाती त्वचित्रितः॥१८॥ नश्यँश्चित्रकृतां वर्गो, धृत्वा बद्ध्वाऽवलग्नकैः । राजा तन्नामपत्रस्य, क्षिप्त्वा कुम्भेऽनुवत्सरम् ॥ १९ ॥ कन्यकायां चकर्षत्यां, यन्नाम्नाऽभ्येति पत्रकः । स चित्रयति यक्षं च, प्रयाति च यमालयम् ॥२०॥ युग्मम् ॥ कौशाम्ब्यां चित्रकृच्चित्रकौशलार्थमुपागतः । तत्रास्थाच्चित्रकृद्वृद्धागृहे एकसुतांचिते ॥२१॥ तत्सूनुपात्रिकाऽऽकृष्टा, कुमार्या वृद्धया श्रुता । रुदन्तीं तां निवार्यासौ, परोपकृतिधीर्ययौ ॥ २२ ॥ कृत्वा षष्ठं पवित्रांगवस्त्रश्चित्रकरः स च । गन्धाधिवासितैर्नव्यवर्णकैः कूर्चकैरपि ॥ २३ ॥ पट्ट्याऽष्टपुट्या संछन्नमुखघ्राणमचित्रयत् । यक्षमक्षमयद्दक्षस्ततश्चैष कृतानतिः ॥ २४ ॥ स्वमागः क्षमयन्नुक्तो, देवेन वरहेतवे । प्रोवाच मा जनान् मार्षीः, प्रीतो देवोऽब्रवीदिति ॥ २५ ॥ तद्धि सिद्धं तव त्राणादिति यक्षोदितेऽवदत् । दृष्टेऽशेऽपि यथारूपं, रूपं चित्रेऽस्तु मे ततः ॥ २६ ॥ इत्थं लब्धवरो यक्षात्, कौशाम्बीं स समागतः । शतानीकः समादिक्षत्, तदा चित्राय चित्रकान् ॥ २७ ॥ स्थानेषु च विभक्तेषु, स शुद्धान्तान्तिकास्थितः । दृष्ट्वाऽङ्गुष्ठं मृगावत्या, रूपं निरुपमं व्यधात् ॥ २८ ॥

रूपस्योरौ मषीविन्दुरुन्मृष्टोऽपि मुहुर्मुहुः । त्रिः पपात विमृश्याथ, तदवस्थमधारयत् ॥ २९ ॥ देव्या रूपात्, नृपस्तुष्टो, रुष्टो विन्दोस्तदूरुगात् । तं वध्यमादिशन्नन्यैर्विज्ञप्तश्चित्रकारकैः ॥ ३० ॥ देव ! यक्षप्रसादोऽयं, कुब्जिकास्यं ततो नृपः । अदर्शयद्यथावस्थं, तद्रूपं स लिलेख च ॥ ३१ ॥ तथापि च्छिन्नतज्जन्यंगुष्ठेऽमर्षी नृपं प्रति । यक्षमाराध्य सिद्धिं तां, स लेभे वामपाणिना ॥ ३२ ॥ ततो रूपं मृगावत्याः, पटे न्यस्तमदर्शयत् । प्रद्योतस्यैष पप्रच्छ, तं केयं मनुजामरी ? ॥ ३३ ॥ स च प्राह शतानीकप्रिया सेयं मृगावती । राजा तं याचितुं दूतं, प्राहिणोदथ तत्पतेः ॥ ३४ ॥ तथ्यं स स्वामिसंदिष्टं, वदन् दूतो गले धृतः । गत्वा न्यवेदयच्च चक्रे, प्रद्योतश्च प्रयाणकम् ॥ ३५ ॥ तदागमनवार्त्तार्तिः, शतानीकेन धारिता । अपथ्याप्यस्य पथ्यावदतीसारं चकार सा ॥ ३६ ॥ परलोकं गते भूपे, शीलरक्षाकृते सुधीः । प्रैषीत् मृगावती दूतमनुशिष्यास्य भूपतेः ॥ ३७ ॥ नत्वा गत्वा च स प्राह, प्रद्योतं यन्मृगावती । वदति त्वां शतानीकं, विना त्वं शरणं मम ॥ ३८ ॥ किन्तु बालः सुतो मुक्तः, परैः परिभविष्यति । प्रद्योतः प्राह को नाम, धर्षयेत्तं ममाश्रितम् ? ॥३९॥ दूतो ब्रूते तदेवैतदेव देव्याऽप्युदीर्यते । किन्तु दूरस्थमालस्थैः, क्षेत्रं त्रातुं न शक्यते ॥ ४० ॥ तदवन्तीष्टिकाभिस्त्वं, वप्रं कारय पूरय । तृणधान्यैर्धनैः पूत्रं, निर्वर्तय यथेहितम् ॥ ४१ ॥ चतुर्दशनृपानीकश्रेण्यानीतेष्टिकोत्करैः । प्राकारं कारयित्वाऽथ, यथोक्तं सोऽकरोद् द्रुतम् ॥ ४२ ॥ ततो द्वारनिरोधेनाग्रहात्तस्य विकर्म्मणः । अन्तर्निश्चलचित्ताऽस्थाद्योगिनीव मृगावती ॥ ४३ ॥ हंसवन्निर्मले शालप्रभाजाले प्रसर्प्पति । प्रद्योतोऽजनि खद्योत, इव सन्नप्यसन्निव ॥ ४४ ॥ युद्धप्रवुद्धवैराग्या, चित्ते देवीत्यचिन्तयत् । भवाच्चास्माच्च मुच्येऽहं, न वीरस्वामिना विना॥४५॥ तद्भावविज्ञे श्रीवीरेऽभ्यागतेऽथ मृगावती । निर्गत्यैत्य निरातंका, वन्दित्वैशानमाश्रयत्॥ ४६ ॥ पुरीरोधं विरोधं च, विमुच्यार्हत्-

प्रभावतः। प्रद्योतोऽपि समागत्य, प्रभुं नत्वा न्यविक्षत ॥ ४७ ॥ तदा भव्योपकाराय, देशनां तन्वति प्रभौ। धन्वी कोऽपि समागत्य, पप्रच्छ मनसा प्रभुम् ॥ ४८ ॥ प्रभुणोक्तो गिरा पृच्छ, या सा सा सेति सोऽवदत्। या सा सा सेति च स्वाम्युत्तरे पप्रच्छ गौतमः ॥ ४९ ॥ इदं प्रश्नोत्तरं कीदृग् ?, नाथ! नाथोऽप्यथावदत्। चम्पायां स्वर्णकारोऽभूद्यां यां कन्यां स चैक्षत ॥ ५० ॥ स्वर्णपंचशतीं दत्त्वा, कान्तां तां तां व्युवाह सः। इत्थं पंचशतीमेष, महेलानाममेलयत् ॥ ५१ ॥ गृहत्वप्रवदेतासां, वासौकांसि विधाप्य सः। एकद्वारे च तत्राभूदीर्ष्यालुर्यामिकः स्वयम् ॥ ५२ ॥ वारकर्त्रीं विना नान्याः, शृंगारिण्यस्तदाज्ञया। स्त्रियामत्यर्थगृद्धस्य, तस्यैवं यान्ति वासराः ॥ ५३ ॥ नीतो भोक्तुं गृहे क्वापि, मद्दे सख्या बलादयम्। तत्पत्न्योऽथ व्यधुः सर्वाः, स्नानभूषां विलेपनम् ॥५४॥ सज्जकज्जलताम्बूलाः, सर्वाभरणभूषिताः। विलोकयन्त्यो वक्त्राणि, तस्थुर्दर्पणपाणयः॥५५॥ स्वर्णकृत्तास्तथा प्रेक्ष्य, निहत्यैकां व्यसुं व्यधात्। पराभिर्दर्पणैरेवाहत्य स्वोऽभिहतः पतिः॥५६॥ सानुतापास्ततो गेहं, देहं प्रज्वाल्य ता मृताः। मर्त्यत्वे वर्त्तते चौर्यात्, सैकोना पंचशत्यपि ॥५७॥ स्त्री तु पूर्वहता रेरगृहे पुत्रतयाऽजनि। पंचाब्देऽस्मिन् स्वर्णकारजीवो जज्ञे च पुत्रिका॥५८॥सशब्दं सा तदाऽरोदीद्, भ्राताऽस्या बालधारकः।गुह्ये पस्पर्श तत्कालं,निवृत्ता रोदितादसौ॥५९॥पितृभ्यां स तथा कुर्वन्, दृष्टो निष्कासितो गृहात्।मिलितस्तस्करैर्जाता,पूर्णा पञ्चशती च सा॥६०॥आबाल्याद् बन्धुकी ग्रामे,क्वापि तस्य स्वसा गता। ग्रामो भग्नः स तै स्तेनैर्धृता भार्या कृता च सा॥६१॥तैश्च तत्कृपयाऽऽनिन्येऽन्याऽपि चौर्याय तेषु तु। गतेषु वञ्चयित्वा तामृजुं कूपे शठाऽक्षिपत् ॥६२॥पृष्टा तैरागतैः सोचे,स्वस्त्रीमपि न रक्षथ। द्विजोऽध्यायदथो किंनु, स्वसा माऽसौ? यदीदृशा॥६३॥ततोऽत्रैत्य हृदाऽपृच्छत् ,सन्देहं स्वसृलज्जया। गिरा पृच्छेति च प्रोक्तोऽस्माभिर्गुप्तगिराऽवदत्॥६४॥ या सा सा सेत्यथास्माभिर्दत्तमुत्तरमप्यदः। इत्थं जना विन-

च्यन्ते, विपर्ययघातकैरिव ॥ ६५ ॥ श्रुत्वेति चौरः संविग्नः, समादाय व्रतं सुधीः । पल्लीं गत्वा निजान् सर्वांश्चौरान् प्राव्राजयच्च सः ॥ ६६ ॥ मृगावती प्रभुं प्राह, प्रद्योतानुज्ञया व्रतम् । ग्रहीष्ये पुत्रमुन्न्यस्य, पुण्याधिकृतमासदत् ॥ ६७ ॥ विहृत्यान्यत्र वीरस्तु, कौशाम्ब्यां यावदाययौ । महिष्योऽष्ट व्रतं चक्रुः, प्रद्योतप्रभुसाक्षिकम् ॥ ६८ ॥ मृगावत्यादयः सर्वाः, श्रीवीरस्वामिनाऽर्पिताः । चन्दनायाः प्रवर्त्तिन्याः, सामाचारीं शिशिक्षिरे ॥ ६९ ॥ विहृत्यान्यत्र वीरस्तु, कौशाम्बीं पुनरागतः । एतां स्वस्वविमानाभ्यां, तदाऽर्केन्दू द्युशेषके ॥७०॥ द्युमानं कोऽपि नो वेद, चरता तेजसा तयोः । चैतन्याच्चन्दना ज्ञात्वोपाश्रयेऽस्तं जगाम तु ॥ ७० ॥ पश्चेऽथ तस्मिन्नाश्चर्येऽनन्तकालसमुद्भवे । वीते भीतेव वेगेन, समुत्तस्थौ मृगावती ॥ ७२ ॥ ततो गुरुतमं भीतोभयथा सा यथा तथा । त्वरितोपाश्रयं यातोपालब्धा चन्दनार्यया ॥ ७३ ॥ कुलीने ! सकले! स्थातुं, युक्तं ते न बहिर्निशि । चन्दनापादयोर्मग्ना, स्वागसाऽक्षमयत्ततः ॥ ७४ ॥ गृह्णती मृदु तत्पादौ, निन्दंती च स्वदुष्कृतम् । अवाप केवलज्ञानं, निरागाः श्रीमृगावती ॥ ४५ ॥ संवाहनाप्तनिद्रायाश्चन्दनायाः कराम्बुजम् । उद्दध्रे चन्दनाऽवोचत्कुतोऽचालि करस्त्वया ? ॥ ७६ ॥ सा प्राहाहिभयादूचे, चन्दनाऽथ फणी कथम् । ध्वान्ते दृष्टस्तया प्रोक्तं, केवलज्ञानदीपतः ॥७७॥ केवल्याशातनामन्तुं, निन्दंती चन्दना निजम् । घातिकर्म्मक्षयात् सद्यः, केवलज्ञानमासदत् ॥ ७८ ॥



अथ क्षुधापिपासादयो द्वाविंशतिः परीषहाः सोढव्या इति द्वितीयतृतीयपादयोरुपरि दृष्टान्तः, परीषहेषु प्रथमं क्षुधापरीषहस्तत्सहने हस्तिमित्रदृष्टान्तः,-उज्जयिन्यां गृहपतिर्हस्तिमित्राभिधोऽभवत् । तस्य चातिप्रिया भार्या, हस्तिभूतिः सुतोऽस्ति च ॥ १ ॥ पुत्रे बालेऽस्य वनिता, शूलेन सहसा मृता । वैराग्यवानयं चित्ते, संसारासारतां दधौ ॥ २ ॥ सूरिं प्रबोधकं प्राप्य, सपुत्रो

व्रतमाददे । ज्ञाताद्विविधशिक्षः स, गीतार्थत्वमशिश्रियत् ॥ ३ ॥ अन्यदोज्जायिनीपुर्याः, प्रस्थितः साधुभिः सह । पुरे भोजकटे गंतुमस्ति चारण्यमध्वनि ॥४॥ चरणत्राणहीनोऽयं, चरणत्राणवानपि । कीलेन चरणे विद्धे, नाभूत् संचरणक्षमः ॥ ५ ॥ भणिताः साधवस्तेन, यूयं निस्सरताटवेः । आहारपरिहारं तु, निराकारं करोम्यहम् ॥ ६ ॥ ते प्रोचुर्मा विधाः खेदं, वहिष्यामः क्रमाद्वयम् । ग्लानभक्तिर्जिनेनोक्ता, स्वदर्शनसमा यतः ॥ ७ ॥ स प्राहैवमिदं किन्तु, कालप्राप्तोऽधुनाऽस्मि यत् । किं मद्वहनकष्टेन, सन्तापश्चापि मोह्यताम् ॥ ८ ॥ उक्त्वेति क्षमयित्वा च, साधूंश्चिर्बन्धतोऽवदत् । स्थातुमत्र न युक्तं वो, भयव्यूहघने वने ॥९॥ प्रेष्य साधूनयं तस्थावेकत्र गिरिगह्वरे । बलान्निन्ये च तैः पुत्रोऽपियासन् पितृमोहतः ॥ १० ॥ तान् विश्वास्यागतः पित्रा, प्रोचे चारु न ते कृतम् । ममेव क्षुधया मृत्युर्भविता भवतोऽपि यत् ॥११॥ स प्रोवाचास्तु यत्तद्वा, मया स्थेयं तवान्तिके । साधुः समाधिना नाधिरपि मृत्वा सुरोऽभवत् ॥ १२ ॥ विबुध्यावधिना गात्रं, तदेवानुप्रविश्य सः । पुत्रानुकम्पया प्राह, भिक्षस्व क्वेति सोऽवदत् ? ॥ १३ ॥ सुरः प्राह भ्रमाव्यग्रो, न्यग्रोधादिद्रुवासिनः । जना दास्यन्ति ते तेन, गत्वा ते धर्मलाभिताः ॥ १४ ॥ सालङ्कारः करो द्रुभ्यो, निर्गत्यास्मै प्रयच्छति । भिक्षां प्रतिदिनं चैवं, गृह्णन् शैक्षः स्थितः स तु ॥ १५ ॥ ऋजुत्वाद्वेत्त्ययं तातोऽनशनी नाहरत्यतः । अलाभेऽपि हि नाहं तु, ग्रहीष्यामि फलादिकम् ॥ १६ ॥ तस्यैवं तिष्ठतो वर्षे, गते तेनाध्वना पुनः । साधवस्ते समाजग्मुरवन्त्यां विजिहीर्षवः ॥ १७ ॥ तत्पृष्टः क्षुल्लकः प्राह, भिक्षालाभोऽन्तरे करात् । देवीभूतेन तेन स्यादनुकम्पा कृताऽस्य तु ॥ १८ ॥ ध्यात्वेति मुनिभिर्गत्वा, तत्करङ्कं निरीक्षितम् । करश्च न विनिर्याति, नीतः सोऽथ सहैव तैः ॥ १९ ॥ यथा सोऽनशनी क्षुल्लः, यद्वा सच्चित्तवर्जकः । आद्यं परीषहं सोढवन्तौ सह्यस्तथाऽपरैः ॥ २० ॥

अथ द्वितीयः-अवन्त्यां धनमित्राख्यः, श्रेष्ठी सहजधर्म्मधीः। प्रव्रज्यां जगृहे सार्द्धं, सुतेन धनशर्म्मणा ॥ १ ॥ एकदा मुनयस्ते तु, विहरन्तो महीतले। अत्येलकाख्यनगरं, भोजनोर्ध्वं प्रतस्थिरे ॥२॥ क्षुल्लस्तृष्णाभिभूतश्च, स समेति शनैः शनैः। स्नेहेन तत्पिता तस्य, स हि पश्चादुपैति च ॥ ३ ॥ पुरःस्थितेषु सर्वेषु, गच्छत्स्वपरसाधुषु। पथि वीक्ष्य नदीमेकां, पितोचेऽम्बु पिबाधुना ॥ ४ ॥ प्रायश्चित्तं पुनः पश्चाद्, गृह्णीयाः स तु नेच्छति। श्रोतः पिता समुत्तीर्य, दध्यावपसराम्यहम् ॥५॥ मदीयशंकया नैप, पयः पास्यति पुत्रकः। ध्यात्वेत्ययं रहस्यस्थान्नदीं सोऽपि समागमत् ॥ ६ ॥ तृपाऽधिबाधितो दध्यौ, विधाय जलमंजलौ। किं पिबाम्यथवा पीते, स्याद् व्रतस्य जलांजलिः ॥ ७ ॥ एकत्रोदकबिन्दौ ये, प्रज्ञप्ता जन्तवो जिनैः। अपि सर्षपमात्रास्ते, जम्बूद्वीपे न मान्ति यत् ॥ ८ ॥ जलं यत्र वनं तत्र, यत्र तत्तत्र चानिलः। वह्निवायू सहायौ च, त्रसाः प्रत्यक्षतः पुनः ॥९॥ परस्य प्राणितेनाहं, रक्षन् प्राणितमात्मनः। किं प्राणिष्यामि कल्पान्तं?, प्राणित्राणं ततो वरम् ॥१०॥ ध्यात्वेति जलमुत्सृज्य, तटिनीतटमागतः। त्यागादिवाऽस्वतस्यैप (म्बुनः सैप) मृतस्त्रिदशतामगात् ॥ ११ ॥ प्रयुक्तावधिरागत्य, स्वगात्रेऽनुप्रविश्य च। तातमन्वागमत्तं चायान्तं वीक्ष्यापरोऽचलत् ॥ १२ ॥ विज्ञाय त्रिदशस्तच, वनं द्वादशयोजनम्। विचक्रे गोकुलान्युच्चैर्मुनीनामनुकम्पया ॥ १३ ॥ तेषां यतां सदेशानां (शमेशानां), निर्जरः पश्चिमे व्रजे। एकां व्यस्मारयत् स्वस्य, ज्ञापनायैव वेष्टिकाम् ॥१४॥ तत्रायातौ मुनी द्वौ चापश्यतां कास्यपीतले। वेष्टिकां केवलां नैव, गोकुलं कुलसंकुलम् ॥ १५ ॥ तदीयाख्यानतो मुख्यैर्दिव्यशक्तिर्विचारिता। तातवर्जं च देवेन, वन्दिता मुनयोऽपरे ॥ १६ ॥ पृष्टश्चावन्दने हेतुं, स प्राहाम्बु पिबेत्ययम्। वदन् मां नरकेऽक्षेप्सीन्महाव्रतविलोपतः ॥ १७ ॥ मया तु न निपीतं तन्, मृत्वा तत् त्रिदशोऽभवम्। गिराऽस्य तु भवो मे स्यान्न वन्दे पितरं ततः ॥१८॥ इत्युक्त्वा स

ययौ देवो, विजहुर्मुनयोऽन्यतः । इत्थमेष विषोढव्यः, पिपासायाः परीसहः ॥ १९ ॥

अथ शीतपरीषहः— पुरे राजगृहे केचिच्चत्वारः सहचारिणः । वणिजः सुहृदः श्रीमद्भद्रबाहोर्व्रतं ललुः, ॥ १ ॥ ते चाधीतश्रुताः सत्त्ववन्तश्च बलशालिनः । एकाकित्वप्रतिमया, विहरन्तः क्रमात् पुनः ॥२॥ पुरे राजगृहेऽभ्येयुः, शीतकालोऽन्यदाऽस्ति च । द्विधा वह्निशिखानां यो, दत्ते सौभाग्यमद्भुतम् ॥३॥ वादयन्तो दन्तवीणां, वेपमानवपुर्लताः । प्रेक्षणीयक्षणं यस्मिन्, पुरस्कुर्वंति निर्धनाः ॥ ४ ॥ यत्र वाःक्षेत्रानां (व्रजं)वालः, प्रयालप्रतिमान्यदात् । हीणानामधनांहीणामंहिस्फोटैर्हृदस्फुत् ॥ ५ ॥ ( स्तनोपपीडमाश्लिष्टा ) ( दीप्तांगारशकट्योऽत्र ) जाड्योच्छेदनिबन्धनम् । हसन्तीव प्रिया यत्र, दूरीकर्त्तुं न शक्यते ॥ ६ ॥ नश्यन्ति पक्षवन्तोऽपि, शीतमारुतमारिताः । शुष्यन्ति हिमपातेन, कुमुदालिवनानि च ॥ ७ ॥ एवंविधे हिमर्त्तौ ते, तृतीयप्रहरे दिवः । भिक्षां भोजनमाधाय, न्यवर्त्तन्त ततः पुरात् ॥ ८ ॥ अमीषां चायमाचारश्चरमा यत्र पौरुषी । अवगाहेत तत्रैव, स्थेयं प्रतिमया स्थिरैः ॥ ९ ॥ पृथग्पृथगुपायातां, तेषां जाता स्वभावतः । वैभारादिगुहाद्वारे, तेन तत्रैव संस्थितः ॥ १० ॥ पुरोद्याने द्वितीयस्य, तदारादपरस्य च । चतुर्थस्य पुराभ्यर्णे, तत्र तत्र च ते स्थिताः ॥ ११ ॥ तेषु योऽद्रिगुहासन्नः, सन्नः शीतेन सोऽधिकम् । वपुषा वेपमानोऽपि, निर्वेपथुमनाः स ना ॥ १२ ॥ सहमानो महाशीतं, जातं पर्वतवाततः । मानशेषोऽभवद्यामे, यामिन्याः पूर्व एव सः ॥ १३ ॥ उद्यानस्थो द्वितीये चोद्यानासन्नस्तृतीयके । तुर्यस्तुर्येऽल्पं हि शीतं, पुरोपान्ते पुरोष्मणा ॥१४॥ सर्वेऽपि नित्यपर्वाणः, सुपर्वाणश्च तेऽभवन् । साधुभिस्तैर्यथा सोढं, सोढव्यमपरैस्तथा ॥ १५ ॥

अथोष्णपरीषहः- गरीयस्यस्ति नगरी, तगरा नगराजिता । अर्हन्मित्राभिधस्तत्रागमच्च मुनिपुंगवः ॥ १ ॥ तेन

देशनया दत्तबोधो दत्ताभिधो वणिक् । व्रतमादत्त दत्ताख्यभार्यार्हन्नयपुत्रयुक् ॥ २ ॥ अर्हन्नयमहाकष्टसहनाग्रयं विदन्नपि । अर्हन्नयं सुतं प्रेम्णा, न तं भ्रमयते पिता ॥ ३ ॥ पुष्णाति प्रेमदृष्ट्याऽतिशयात् तं वसतिस्थितम् । तद्वाञ्छितं पुरोभोज्ये, पश्चाद्भोज्ये च यच्छति ॥ ४ ॥ किमेष न समर्थोऽपि, भिक्षां भ्राम्यति शैक्षकः । इत्यप्रीतिभृतोऽप्यन्ये, प्रोचुर्नाप्रीतिभीतितः ॥ ५ ॥ दत्ते दिवं गतेऽन्येद्युर्दधार क्षुल्लकः शुचम् । द्वित्राणि वासराण्यन्नमानीयानीय भोजितः ॥ ६ ॥ अथावतारितो भिक्षा- कृतेऽन्यमुनिना सह । वाढं तदा निदाघश्च, वर्त्ततेऽर्त्तिकरो नृणाम् ॥ ७ ॥ चापं प्राप्यापि निस्तेजाः, सतेजाश्च वृषं चरन् । रविराख्याति शस्त्रेभ्यः, श्रेयः श्रेयस्करं परम् ॥ ८ ॥ रसानां शोषणे शूरः, सन्ध्यासन्धानवानिव । अंगादप्यंगिनां स्वेदच्छद्मना- ऽऽकृष्य शोषयेत् ॥ ९ ॥ मर्षित्वा वर्ष्मणो धर्ष, निर्धनः स्वजनो यथा । तापनिर्वापणं यत्र, कुरुते रोहणद्रुमः ॥ १० ॥ एवंविधे निदाघेऽसौ, सुकुमारशरीरकः । दह्यमानश्च तापेन, रवेरूर्ध्वमधोऽपि च ॥ ११ ॥ शरीरेण मुखेनैव, मनसा स तृषाकुलः । धिष्ण्ये वातायनच्छायामनपायामुपागमत् ॥ १२ ॥ तत्रस्थं तं च वाताय, वातायनमधिश्रिता । प्रिया धनाढ्यवणिजः, प्रैक्षत प्रोषितप्रिया ॥ १३ ॥ सुकुमारशरीरं तमुद्दामनवयौवनम् । समीक्ष्य साभिलाषा सा, प्रेष्यां प्रेष्य समाह्वयत् ॥ १४ ॥ समायातः स मायातः, प्रोषितप्रियया तया । पृष्टः किं याचसे? तेन, प्रोचे भिक्षामिति स्फुटम् ॥१५॥ सा दध्यौ येन कार्यं स्याद्, गृह्णीयादामिषेण तम् । यतः कृत्यमकृत्यं वा, कुर्यादामिषयन्त्रितः ॥ १६ ॥ विचिन्त्येति समुत्थाय, चानीय गृहमध्यतः । चित्तप्रमोदकास्तस्य, मोदका ददिरे तया ॥ १७ ॥ निरीक्ष्य स्निग्धया दृष्ट्या, प्रोक्तश्चेति स दुष्करम् । किं त्वया व्रतमग्राहि ?, स प्राह सुखहेतवे ॥ १८ ॥ तया प्रोचे मया सार्द्धं, भोगान् भुंक्ष्वानुरक्तया । इयं कष्टक्रिया कस्मात्, कठिनाङ्गजनोचिता ? ॥१९॥ प्रव्रज्यामपि कुर्यास्त्वमतो

वयसि पश्चिमे । अकाल इव सिद्धान्ताध्यायः सा नाधुनोचिता ॥ २० ॥ उष्णभग्नस्तयेत्युक्तः, स सुधासितया गिरा । खिद्यमानो व्रते सद्यः, प्रत्यपद्यत तद्वचः ॥ २१ ॥ तरुणी च सुरूपा च, विदग्धा सस्पृहापि च । चतुरस्यापि नो कस्य, धैर्यध्वंसाय जायते? ॥ २२ ॥ दृष्टा हरति या चित्तं, चित्रलेप्याश्मयप्यपि । नारी नराणां सा हन्त, किमुच्येत सचेतना ? ॥२३॥ भोगानथ स भुञ्जानस्तया भावानुरक्तया । गतं कालं न जानाति, दोगुन्दक इवामरः ॥ २४ ॥ इतः प्रतीक्ष्यमाणोऽपि, तमवीक्ष्य व्रती चिरम् । उपाश्रयमुपायातः, कथयामास तद्गुरोः ॥ २५ ॥ गुरुणाऽपि हि सर्वत्र, साधून् प्रेष्य गवेपितः । न तु दृष्टोऽभवत्तथ्यं, पुरेऽनश्यत्कुमारकः ॥२६॥ यतिनी तस्य माताऽथ, सुतोदन्तमजानती । अतिमोहेन वैकल्यं, प्राप तापवती हृदि ॥२७॥ हाऽर्हन्नयार्हन्नयेति, विलापकलिताऽथ सा । परितो बालजालेन, वेष्टिता भ्रष्टचेष्टिता ॥ २८ ॥ उपहासपरैर्दुष्टैरनुकम्पापरैः परैः । वीक्ष्यमाणा त्रिकेऽश्राम्यच्चतुष्के चत्वरेऽपि च ॥२९॥ यं यं पश्यति तं तं च, रुदती परिपृच्छति । अर्हन्नयस्त्वया क्वापि, किं महात्मन्! निरीक्षितः ? ॥ ३० ॥ आपतन्तं च सहसा, निजेन तनुजन्मना । समानवयसं प्रेक्ष्यार्हन्नयोऽसीत्यभाष्यत ॥ ३१ ॥ दध्यौ च प्रमदं नार्यं, स्यादतो विपसाद च । इति तस्याः सुतान्वेषे, व्यतीयुर्विषमाः समाः ॥ ३२ ॥ अर्हन्नयं सुतं चित्ते, दधती दधती शुचम् । अर्हन्नयवशस्मारसापस्मारवशाऽभवत् ॥ ३३ ॥ वातायनगतोऽन्येद्युस्तया क्रीडन् महेलया । कृतोल्लापकबालस्याश्रौषीत्कलकलं किल ॥ ३४ ॥ यावन्मुखं परावृत्त्य, किमेतादिति वीक्षते । तावत्तां जननीमीक्षामास बालकमालिताम् ॥ ३५ ॥ अर्हन्नयार्हन्नयेति, भाषमाणां मुहुर्मुहुः । प्रतार्यमाणां बालैश्चार्हन्नयोऽस्मीतिभाषिभिः ॥ ३६ ॥ मलिनं तालिनं जीर्णं, बिभ्राणां च शुचा सिचीम् । धूलीधूसरसर्वांगां, वीक्ष्य तां स व्यचिन्तयत् ॥ ३७ ॥ अहो अहमधन्योऽस्म्यकृत्यकृत्यविधायकः । अम्बां दुःखार्णवे स्वं च, भवे

पातक्यपातयम् ॥ ३८ ॥ किंच चित्ते जिनस्याज्ञा, चरित्रं च ममेदृशम् । असमंजसमीदृग् ही, विसंवदति दूरतः ॥३९॥ भवभूमी-भृतः साक्षाद्रवाक्षादवतीर्य सः । आजगाम समां भूमिमध्यक्षां समतामिव ॥ ४० ॥ जनन्याः सज्जनन्यायान्निपपात च पादयोः । सगद्गदमिदं चाह, वाष्पप्लुतविलोचनः ॥ ४१ ॥ मातः ! पातकिनां धुर्योऽनार्योऽस्मि कुलपांशनः । मातुरप्यार्त्तिकर्त्ता च, कुपुत्रो-ऽर्हन्नयस्तव ॥ ४२ ॥ प्रेक्ष्योपलब्धचैतन्या, पुत्रमाश्वस्तमानसा । अभूद्वालकजालं च, दूरतस्तदपासरत् ॥ ४३ ॥ अकष्टयाऽनया पृष्टः, पुत्रो मातुरनातुरः । यथा तथा कथां स्वस्य, कथयामास सप्रथाम् ॥ ४४ ॥ अम्बा सम्बोध्य तं प्राह, गृहाण त्वं पुनर्व्रतम् । क्षतव्रततया वत्स!, भवमेव भ्रमिष्यसि ॥ ॥ ४५ ॥ स प्राह पापकर्म्माहमसहः संयमार्जने । परं करोम्यनशनं, नाशनं पापकर्म्म-णाम् ॥४६॥ अम्बा प्राह भवत्वेवं, मा त्वं भूत्वा त्वसंयमी । तुच्छेन भोगसौख्येन, भूरि दुःखं समार्जय ॥ ४७ ॥ किंस्विद्वह्नि-प्रवेशोऽपि, वरं न व्रतभंजनम् । वरं मृत्युः सुशीलस्य, दुःशीलस्य न जीवितम् ॥ ४८ ॥ हित्वा सर्वं स सावद्यं, कृतदुष्कृत-निन्दनः । क्षमयित्वा च सत्त्वानि, चतुःशरणमाश्रितः ॥ ४९ ॥ संत्यज्य सकलं संगं, स्मरन् पंचनमस्क्रियाम् । सर्वाहारपरीहार-विशुद्धध्यानवानयम् ॥ ५० ॥ स्थित्वा शिलायां तप्तायां, पादपोपगमेन च । क्षणाद् व्यलीयतोष्णेन, मृदुलो नवनीतवत् ॥ ५१ ॥ विशेषकम् ॥ जगाम त्रिदशं धाम, यथा पश्चात् स सोढवान् । उष्णः सह्यस्तथा धन्यैरन्यैरपि परीषहः ॥ ५२ ॥

शीतकाले शीतं उष्णकाले उष्णं वर्षासु दंशमशकसम्भव इति तत्परीषहदृष्टान्तः,- आसीच्चम्पाधिराजस्य, जितशत्रुनरे-शितुः । सुतः श्रमणभद्राख्यो, युवराजो महामनाः ॥ १ ॥ गुरोः श्रीधर्म्मघोषस्यान्तिके धर्म्मं निशम्य सः । निर्विण्णकामभोगः सन्, परिव्रज्यामुपाददे ॥ २ ॥ सश्रुतश्च ससत्त्वश्चैकत्वयोग्यो गुरोर्गिरा । एकाकित्वविहारस्य, प्रतिमां प्रतिपन्नवान् ॥ ३ ॥

दधत् प्रतिमया स्थितः ॥ ४ ॥ स तत्र मशकैः खाद्य-
अन्येद्युः शरदाद्येषु, यत्रास्तमितवासकृत् । अटव्यामत्ययन् सत्त्वं,
मानः प्रवरवेदनः । न प्रमार्जयति स्मैतानन्यतो न जगाम च ॥५॥ दध्यौ चेदं कियद् दुःखमितोऽनन्तगुणं यतः । नरकेषु परायत्तै-
रसह्यमपि सह्यते ॥ ६ ॥ तथाहि फेरुरूपैस्तैर्वृकाचित्रकरूपिभिः । आक्षेप्य भक्षितस्नायु, भक्ष्यंते रुधिरोक्षिताः ॥ ७ ॥ श्वरूपैः
कालरूपैश्च, नारका भयविह्वलाः । खंडशः प्रविलुप्यन्ते, सततं शबलादिभिः ॥ ८ ॥ काकगृध्राहिरूपैश्च, लोहतुण्डैर्बलान्वितैः ।
विनिकृष्टाक्षिजिह्वांत्रा, विचेष्टंते महीतले ॥ ९ ॥ प्राणोपक्रमणैर्घोरैर्दुःखैरेवंविधैरपि । आयुष्यक्षपिते नैव, म्रियन्ते दुःखभागिनः
॥१०॥ शरीरमन्यज्जीवोऽन्य, ईदृशीं मतिमादधत् । छिन्द्धि देहे ममत्वं त्वं, जीव! दुःखकरं परम् ॥११॥ इति ध्यायन्नयं सम्यक्,
स सेहे तं परीषहम् । निश्यस्यामेव तत्पीतशोणितो दिवमासदत् ॥ १२ ॥ इत्थं महार्षिभिः सह्यमथाचेलपरीसहः । दंशाद्यैस्तुद्य-
मानोऽपि, न चेलं प्रार्थयेन्मुनिः ॥ १३ ॥ उक्तं च पंचभिः स्थानैराद्यन्त्यजिननाथयोः । अचेलत्वं वरं तत्र, प्रागल्पा प्रत्युपे-
क्षणा ॥ १४ ॥ रूपं विश्वासपात्रं च, तपश्चानुमतं भवेत् । लाघवं च विना भारं, भूरिश्चेन्द्रियनिग्रहः ॥ ११ ॥ यदल्पचेलकत्वं
तु, तद्धि धर्म्महितं मतम् । अग्न्याद्यारम्भविरतेस्तत् संयमफलं यतः ॥ १६ ॥
अथाचेलदृष्टान्तः-पुरे दशपुरे सोमदेवो नाम द्विजोऽभवत् । तत्पत्नी रुद्रसोमाख्या, सोमाख्या ह्रस्वशीलतः ॥ १ ॥
सुरक्षितगुणः पुत्रोऽभूत्तयोरार्यरक्षितः । प्रथमोऽथापरोऽफल्गुवचनः फल्गुरक्षितः ॥ २ ॥ यज्जानाति पिता तत्र, तदध्यैष्टार्य-
रक्षितः । तदूर्ध्वं पुनरध्येतुं, पाटलीपुत्रमभ्यगात् ॥ ३ ॥ तत्राधीत्य सुधीर्विद्यास्थानान्येष चतुर्दश । पुनर्दशपुरं प्राप, दिशादशक-
विश्रुतः ॥ ४ ॥ स राजविदितः स्वं तद्राज्ञेऽज्ञापयदागमम् । अथोच्छ्रितपताकं तन्नृपः पुरमचीकरत् ॥ ५॥ सद्यः संमुखमागत्य, तं

सत्कृत्य च गौरवात् । तस्य द्विजननाग्रस्यापहारं शासने ददौ ॥ ६ ॥ स्तुतिव्रतैरिव स्तूयमानोऽथ स घनैर्जनैः । सिन्धुरस्कन्धमारुह्य, निजं सदनमासदत् ॥७॥ तत्रापि तस्य बाह्याभ्यन्तरा चास्ति सभा वरा । उभे अपि हि कल्याणवेदिकाकलशायते ॥ ८ ॥ स बाह्यसंसदासीनो, जनस्यार्घं प्रतीच्छति । वयस्यान् स्वजनांश्चापि, तत्राऽऽयातान् निरीक्षते ॥ ९ ॥ तस्य भूजानिवत्पूजां, जनाः परिजनो व्यधात् । चतुष्पदाष्टापदाद्यैर्गृहं तस्य च पूरितम् ॥१०॥ स दध्यौ दृश्यते नाम्बा, मध्येऽण्यं गतस्तथा । ननाम मातरं प्रोचे, तया च स्वागतं सुत ! ॥ ११ ॥ उदासीनामिव प्रेक्ष्य, जननीं स पुनर्जगौ । मातः ! किं नाभवत्तुष्टिः?, तुष्टेऽपि नगरेऽत्र वः ॥ १२ ॥ चतुर्दशमहाविद्यास्थानाध्ययनतो मया । विस्मापितं पुरं सर्वं, राजराजसभान्वितम् ॥ १३ ॥ अम्बा प्राह कथं पुत्र !, मम तुष्टिः प्रजायताम्? । यदधीतं त्वया तद्धि, सत्त्वसङ्घातघातकम् ॥१४॥ भवो भवति दीर्घोऽस्मात्,तस्मात्तुष्याम्यहं कथम् ? । दृष्टिवादं पठित्वा किं, भवानस्ति समागतः ? ॥१५॥ स दध्यौ स कियान् भावी, तत् पठाम्येनमप्यहम् । यथा तुष्यति माता मे, तोषितेन जनेन किम् ? ॥ १६ ॥ ध्यात्वेत्युवाच कुत्राम्ब !, दृष्टिवादः स पठ्यते ? । सा प्राह परमा श्राद्धी, श्रीजिनेन्द्रस्य शासने ॥ १७ ॥ अप्येष दृष्टिवादाख्याक्षरार्थं ध्यातवानिति । दृष्टिवादो हि दृष्टीनां, वादस्तन्नाम सुन्दरम् ॥१८॥ अध्यापयति चेत्कश्चित्तदध्याये तमप्यहम् । दृष्टिवादं कृतेऽस्मिंश्च, जनन्यपि च तुष्यति ॥ १९ ॥ ध्यात्वेति सोऽब्रवीदम्ब !, दृष्टिवादविदः क ते ? । सोचे तोसलिपुत्राख्याचार्याः सन्तीक्षुधाम्नि नः ॥२०॥ स प्राह कल्येऽध्येष्येऽहं, मातर्मा तद्भवोत्सुका । उक्त्वेति निश्चयं तस्थौ, तन्नामार्थमनुस्मरन् ॥ २१ ॥ प्रातः स प्रस्थितस्तस्य, पितुर्मित्रं च वाडवः । द्यो न दृष्टस्ततः प्रेक्षे, भ्रातृव्यमिति शुद्धधीः ॥ २२ ॥ नवेक्षुयष्टीः सम्पूर्णाः, खण्डं च दशमं करे । विप्रदेष समायाति, निर्याति त्वार्यरक्षितः ॥ २३ ॥ युग्मम् ॥ सम्मुखः

सोऽवदत् कस्त्वं ?, स प्रोवाचार्यरक्षितः । पितृव्यः स्वागतं पृष्ट्वा, प्राह त्वं द्रष्टुमागमम् ॥ २४ ॥ परोऽवादीदहं कायचिन्तायां यामि तत्त्वया । समर्प्पणीया मे मातुः, स्पष्टमेवेक्षुयष्टयः ॥२५॥ कथ्यं मातुः मया दृष्टो, बहिर्यानार्यरक्षितः । पूर्वं दृष्टश्च तेनाहमित्युक्तः स तथा व्यधात् ॥२६॥ तुष्टाऽथ जननी दध्यौ, सुतस्य शकुनः शुभः । नव पूर्वाणि खण्डं च, दशमस्य ग्रहीष्यति ॥२७॥ अज्ञत्वात्तनयो दध्यावङ्गान्यध्यापनानि वा । अहं(नव)तस्य ग्रहीष्यामि, दशमं सकलं न तु॥२८॥ ध्यायन्निनीक्षुवाटौकःपार्श्वेऽगादार्यरक्षितः । पुनर्दध्यौ च विध्यज्ञो, ग्राम्यवद्याम्यहं कथम् ? ॥२९॥ तत्कोऽपि श्रावकोऽभ्येतु, यामि तेन समं यथा । विचिन्त्येति बहिर्भागे, तस्थौ तस्यौकसः सुधीः॥३०॥तदा च ढड्डरो नाम, श्राद्धस्तत्र समागतः।नैषेधिकीत्रिकं कृत्वा,साधुभ्यो वन्दनं ददौ॥३१॥ प्राज्ञत्वात् तत्कृतं तेनानुचक्रे वन्दनादिना। श्राद्धावन्दनतो ज्ञातं, सूरिभिः श्रावको नवः॥३२॥पृष्टश्च तैः कुतो धर्म्मागमः ? सोऽथ यथातथम् । कथयामास सूरीणां, श्राद्धस्यास्यैव मूलतः ॥ ३३ ॥ आख्यंश्च साधवः श्राद्धीरुद्रसोमासुतो ह्ययम् । यः कल्ये सिन्धुरस्कन्धमारूढः प्राविशत् पुरे॥३४॥किमेतदितिसूर्युक्ते, स वृत्तान्तं निजं जगौ। दृष्टिवादं तदध्येतुं, युष्मदन्तिकमाग(२०००)तः ॥ ३५ ॥ आचार्याः प्रोचुरस्माकं, दीक्षया स प्रपठ्यते । पाठ्यते परिपाट्या च, स प्राहैवं भवत्विति ॥ ३६ ॥ किंत्वत्र स्यान्न मे दीक्षा, सानुरागो यतो नृपः । सर्वो जनश्च ते तेन, बलादपि नयंति माम् ॥ ३७ ॥ तमादाय ततोऽन्यत्र, ययुस्तोसलिसूरयः । शैक्षनिस्फेटिका सेयं, प्रथमा प्रथिताऽजनि ॥ ३८ ॥ अयमेकादशांगानि, शीघ्रमेव पपाठ च । यावाँश्च दृष्टिवादोऽभूत्तत्र तावन्तमादित ॥ ३९ ॥ दशपूर्वी तदा वज्रस्वामीति स्वगुरोर्गिरा । तत्र गच्छन्नयं मध्येऽवंति संतिष्ठते स्म च ॥४०॥ तत्र श्रीभद्रगुप्ताख्यस्थविरोपान्तमागमत् । धन्योऽसि कृतकृत्योऽसीत्यश्लाघंत च तेऽनघम्॥४१॥ किञ्च संलिखितांगोऽस्मि, न मे निर्यापकोऽस्ति

तु । भव निर्यापकस्तत्त्वं, प्रपेदे स तथेति तत् ॥४२॥ आर्यैः प्रान्ते स तैः प्रोचे, श्रीवज्रस्वामिना समम् । मा वात्सीस्त्वमधीयेथाः, स्थितः पृथगुपाश्रये ॥४३॥ समं वसति यस्तेन, वसत्यां वासरेऽपि वा । एकत्र वसते तेन, समं तेनैव्द्रसत्यसौ ॥४४॥ तच्च प्रतिश्रुतं तेन, सूरौ सुरसदःश्रिते । वज्रस्वामिसमीपेऽगादस्थाच्च पृथगाश्रये ॥ ४५ ॥ पश्यन्ति स्म च ते स्वप्नं, क्षीरपूर्णः पतद्ग्रहः । मदीयोऽतिथिनाऽपायि, कियदप्युद्धृतं पयः ॥ ४६ ॥ प्रातर्यतीनामाख्यातं, तद् व्याख्यातेऽन्यथाऽन्यथा । परमार्थं न जानीतेत्युक्त्वा प्रोचे ततो गुरुः ॥४७॥ अद्य प्रत्येषकः प्रीतः, कश्चिदप्यागमिष्यति । सावशेषं श्रुतं मत्तः, सोऽप्रमत्तः पठिष्यति ॥४८॥ प्रातः समागतश्चार्यरक्षितः प्रणतः प्रभुम् । पृष्टस्तैस्त्वं कुतः ? प्राह, प्रभोस्तोसलिपुत्रतः ॥ ४९ ॥ किमार्यरक्षितः ? प्रोक्तो, गुरुणा प्रणतः पुनः । प्राहैवं गुरुरप्याह, साधु स्वागतमस्ति ते ? ॥ ५० ॥ क्व स्थितोऽसि स चोवाच, बहिः सूरिरथावदत् । बहिः स्थितैः किमध्येतुं, शक्यते ! त्वं न वेत्सि किम् ? ॥ ५१ ॥ स प्राह स्थविरश्रीमद्भद्रगुप्तैर्निदेशितः । अहं यत्त्वं बहिस्तिष्ठेस्ततोऽहं हि बहिः स्थितः ॥ ५२ ॥ वज्रस्वाम्युपयुक्तः सन्, प्राह युक्तमिदं वचः । निष्कारणं भणन्त्येव, न हि ते स्वहितेच्छवः ॥ ५३ ॥ पृथगावसथस्थोऽयमथाध्येतुं प्रवृत्तवान् । अचिरादपि पूर्वाणि, नवाधीते स्म शुद्धधीः ॥ ५४ ॥ प्रारब्धे दशमे पूर्वे, श्रीवज्रस्य निदेशतः । सूक्ष्माणि यमकाख्यानि, चतुर्विंशतिमाददे ॥ ५५ ॥ इतश्च पितरौ तस्य, खेदमेदस्विमानसौ । इति सन्दिशतो ध्वान्तघाते ध्वांताय नौ भवान् ॥ ५६ ॥ तथाऽप्यस्मिन्ननायाते, प्रेषितः फल्गुरक्षितः । प्रोवाच प्रव्रजिष्यन्ति, सर्वाणि भवदागमात् ॥ ५७ ॥ अप्रतीते स च प्राह, सत्यं चेत् त्वं परिव्रज । सोऽथ प्रव्रजितोऽध्येतुं, श्रुतं प्रावर्त्तत क्रमात् ॥५८॥ इतश्चातीव निर्विण्णो, यमकैश्चार्यरक्षितः । ऊचे दशमपूर्वस्य, कियच्छेषं ? गुरुर्जगौ ॥ ५९ ॥ शेषौ समुद्रस्वर्णाद्री, गृहीतौ बिन्दुसर्षपौ । विषण्णः सोऽवदत्

पारं, नास्य गन्तुं क्षमोऽस्म्यहम् ॥६०॥ भ्राता मेऽस्स्यागतो यामि, तदहं गुरुरब्रवीत् । अथाधीष्वाधीष्व पुनरप्यपृच्छत् गुरूनयम् ॥ ६१ ॥ गुरुर्दध्यौ व्यवच्छेदः, पूर्वस्यास्य भविष्यति । भव्यनेत्युपयोगेन, मत्वा तं प्राहिणोत् पुनः ॥ ६२ ॥ गत्वा दशपुरे न्यून-दशपूर्व्यार्यरक्षितः । आप्राजयज्जनन्यादीन्, स्वजनानखिलानपि ॥ ६४ ॥ पिताऽपि तैः सह स्नेहाद्वास्ते मुद्रां तु लाति न । वक्ति पुत्रीस्नुषादीनां, पुरो विवसनस्त्रपे ॥ ६५ ॥ आचार्यैर्बहुशः प्रोक्तः, सोऽवदत् प्रव्रजाम्यहम् । सिक्युग्मकुण्डिकाछत्रोपानद्यज्ञो-पवीतवान् ॥ ६६ ॥ भवत्वेवमिति प्रोच्य, पिता प्रव्राजितश्च तैः । सवल्कच्छत्रपत्राणयज्ञसूत्रकमण्डलुः ॥ ६७ ॥ बालाश्चैत्येऽन्यदा-चार्यसङ्केतादित्यभाषत । सर्वान् वन्दामहे साधून्, छत्रवन्तं विना त्वमुम् ॥ ६८ ॥ न व्रती किमहं तेन, प्रोक्ते बालाः पुनर्जगुः । व्रतिनां छत्रपत्राणब्रह्मसूत्रादि किं भवेत् ? ॥ ६९ ॥ स ध्यातवानिहार्थे मां, शिक्षयन्त्यर्भका अपि । ऊचे च पुत्रच्छत्रेणालमेवं ते वदंत्यथ ॥ ७० ॥ उष्णे क्षुपरि कर्त्तव्यः, कल्प एवं भवत्विति । किञ्च कुण्डिकया संज्ञाभूमौ मात्रेण गम्यते ॥७१॥ को विनाऽप्युं-पवीतं नो, न वेद ब्राह्मणानिह ? । तेनेत्थं तेषु मुक्तेषु, पुनर्बाला बभाषिरे ॥ ७१ ॥ सर्वान् वन्दामहे मुक्त्वा, कटिपट्टकधारिणम् । स रुष्टः प्राह वन्दध्वं, माऽमा पितृपितामहैः ॥ ७३ ॥ वन्दिष्यन्ते हि मामन्ये, न त्यजामि कटीपटम् । अन्यदाऽनशनी कश्चित् , मुनिः पञ्चत्वमासदत् ॥ ७४ ॥ मुमोचयिषवस्तस्मात् , कटीपट्टं तु सूरयः । मृतस्य वहने साधूनपरान् समकेतयन् ॥ ७५ ॥ तानुद्यतांश्च ते प्रोचुरिदं बहुफलं खलु । कथं स्वजनवर्गो न, त्वस्मात् प्राप्नोतु निर्जराम् ॥ ७६ ॥ वयमेव वहामो यत्, यूयं सर्वेऽपि जल्पथ । वृद्धोऽवादीत् कथं पुत्र !, निर्जराऽत्र बहुर्भवेत् ? ॥७७॥ सूरयः प्रोचिरे बाढं, किमत्र किल भण्यते?। सोमदेवोऽ-वदत्तर्हि, निर्जरार्थी वहाम्यहम् ॥ ७८ ॥ सूरयः प्राहुरत्र स्युरुपसर्गा निसर्गतः । लगन्ति चेटरूपाणि, सहसे चेत्ततो वह ॥ ७९ ॥

यदा नैवाधिसहसे, ततोऽस्माकं न सुन्दरम् । स्यादित्थं तं स्थिरीकृत्योत्क्षिप्तः सांधुस्तदा स तैः ॥ ८० ॥ पुरतो व्रजतां तेषां, संवृत्य पृष्ठतः स्थिताः । पूर्वसङ्केतितास्त्वर्भास्तत्कटीपट्टमाकृषन् ॥ ८१ ॥ ह्रिया सोऽथ शनं मुञ्चन्नूचेऽन्यैर्मुञ्च मा शवम् । अन्येन च पुरो भूत्वाऽग्रपूरोऽस्य न्यबध्यत ॥ ८२ ॥ प्रेक्षन्ते मां स्नुषा पृष्ठे, इति सापत्रपोऽपि सः । उत्तस्थावुपसर्गोऽयमिति बाढं विषोढवान् ॥ ८३ ॥ तथैव चागते प्राहुः, सूरयस्तात! किं त्विदम् ? । स प्राह पुत्र! सोऽयं द्राग्, उपद्रव उपस्थितः ॥ ८४ ॥ ससंभ्रमं च ते प्रोचुः, समानयत साटकम् । स प्राह साटकेनालं, द्रष्टव्यं दृष्टमेव हि ॥ ८५ ॥ चोलपट्टक एवास्तु, स इत्थं चोलपट्टकम् । प्राहितस्तेन पूर्वं न, सोढा सोढा त्वचेलता ॥ ८६ ॥

अथारतिपरीषहेऽर्हद्दत्तकथानिका, साऽपि दुर्लभबोधित्वप्रस्तावे उक्ता॥स्त्रीपरीषहे स्थूलभद्रकथा, सा अग्रे भणिष्यति॥ अथ चर्यापरीषहे श्रीसंगमस्थविरदृष्टान्तः, स च द्विचत्वारिंशद्दोषेषु धात्रीपिण्डे उक्तः॥नैषेधिकीपरिषहे दृष्टान्तः-हस्तिनापुरवास्तव्यः, कुरुदत्तसुताभिधः । इभ्यपुत्रोऽग्रहीद्दीक्षां, संविग्नः स्थविरान्तिके ॥ १ ॥ स चाधीतश्रुतः पंचप्रकारतुलनाक्षमः । एकाकित्वविहारस्य, प्रतिमां प्रत्यपद्यत ॥ २ ॥ अन्यदा तस्य साकेतनगरस्याविदूरतः । गच्छतोऽस्तो रविर्जज्ञे, स्थितः प्रतिमयाऽथ सः ॥ ३ ॥ चत्वरे तिष्ठतस्तस्य, हृत्वा ग्रामात्कुतश्चन । गावस्तस्य समीपेन, तस्करैर्निन्यिरेऽन्यतः ॥ ४ ॥ मार्गं विमार्गयन्तोऽथ, समेयुर्व्याहाराकराः । सन्दिग्धेऽथ द्वये साधुर्दृष्टः पृष्टश्च तैरयम् ॥४॥ भगवान्न बभाषे स, ततः प्रद्वेषभारिभिः । तच्छीर्षे विदधे पालिर्मृदा स्वसुगतेरिव ॥ ६ ॥ नरकाग्निपरिप्लोषसत्यंकारा इवात्मनः । अंगाराः प्रज्वलन्तोऽस्य, न्यस्ताः शिरसि तैः क्रुधा ॥ ७ ॥ कृत्वेति ते ययुः पापा, मुनिस्तु शमनिस्तुषः । दुःसहं सहमानस्तं, दध्यावध्यामधीरिति ॥ ८ ॥ अमी शिरोऽधि-

रूढानां, कर्म्मणां कृतकर्म्मणाम् । दाहायाग्निं विमुंचन्तौ, मम साहाय्यकारिणः ॥ ९ ॥ मदीये चरणे कर्म्म, स्थितं जाड्यसमुद्भवम् । विपादिकामिवांगारैस्तापयन्तौ हिता ह्यमी ॥ १० ॥ दहतो दहनेनैते, कर्म्मगुल्मं मदीयकम् । चिकित्सका इवातुच्छं, पूज्या इति विचिन्तय ॥ ११ ॥ दीप्यमानेष्टिकापाको, यस्याग्रे हिमशीतलः । सोऽपि सोढस्त्वया जीव !, पुरा नरकपावकः ॥ १२ ॥ सागरोपमसंख्यातं, कालं दुःखानि सासहि । मुहूर्त्तमात्रे दुःखे तत्, मा जीव! क्लीवतां कृथाः ॥ १३ ॥ चिन्तयन्नित्ययं नित्यभावनापावनात्मकः । ध्यानाग्निदग्धकर्म्मैधाः, परमं पदमासदत् ॥ १४ ॥

अथ शय्यापरीषहोदाहरणम्—वत्सनीवृति कौशाम्ब्यां, यज्ञदत्तद्विजन्मनः । सोमदत्तसोमदेवाभिधावात्मभुवावुभौ ॥१॥ निर्विण्णकामभोगौ तौ, सोमभूतिः मुनेः पुरः । व्रतं जग्रहतुः कालादभूतां च बहुश्रुतौ ॥ २ ॥ अन्यदा स्वजनान् द्रष्टुमागतौ तौ महामुनी । गतवन्तावन्त्यां स्तस्तयोस्तु पितरौ तदा ॥ ३ ॥ पिबन्ति विषये तत्र, ब्राह्मणोऽपि परिश्रुतम् । अविज्ञातस्वरूपत्वाद्गृहीतां च तां मुनी ॥ ४ ॥ ऋजुत्वाच्च निपीतायां, सानुतापौ तदार्त्तितः । दध्यतुः कृतमावाभ्यां, धिगेतदसमंजसम् ॥ ५ ॥ प्रत्याख्यानं ततो युक्तं, भक्तस्येति विचिन्त्य तौ । तटे तटिन्याः कस्याश्चित्, काष्ठानामुपरि स्थितौ ॥ ६ ॥ पादपोपगमं तत्र, यतिनोः श्रितयोस्तयोः । अकालवर्षणेनाशु, नदीपूरः समागतः ॥ ७ ॥ काष्ठारूढौ च सद्ध्यानकाष्ठारूढौ च तौ मुनी । हृतौ पूरेण दूरेण, नीतौ यावन् महार्णवम् ॥८॥ लहरीप्रेरणं पूरानीतकाष्ठाभिघातनाम् । यादोभिर्ग्रसनं चापि, सहेते तौ समाहितौ ॥९॥ असह्यं तौ विपद्येति, तथा शय्यापरीषहम् । स्वर्गतावित्थमपरैः, सह्यः शय्यापरीषहः ॥ १० ॥

अथाक्रोशपरीषहदृष्टान्तः, तथाहि क्षपकः कश्चिद्विकर्म्मप्रश्नोद्यतः । गुणावर्जितया देवतया नित्यं प्रणम्यते॥१॥ उच्यते

ष त्वया कार्यः, कार्यस्य कथनान्मयि । प्रसादः सर्वदा दत्तावसादः सर्वकर्म्मणाम् ॥ २ ॥ अपरेद्युः स केनापि, शप्तो मिथ्यादृशा दृशा । रक्तया वीक्षमाणस्तं, सोऽपि प्रत्यशपन्मुनिः ॥३॥ तेनाथ हन्तुमारब्धो?, मुनिः प्रतिजघान तम्। क्षुत्क्षामकुक्षिः स्थूलेन, परेण भुवि पातितः ॥ ४ ॥ ताडितश्च मुखे क्षिप्तं, रजोऽस्य च रजस्विना । गतेऽस्मिन् स मुनिस्त्वागान्, मन्दं मन्दमुपाश्रये ॥५॥ देवतापि दिवान्ते सा, तं वन्दितुमुपागमत्। श्रितश्च स मुनिर्मौनं, तया देवतयोदितः ॥ ६ ॥ अपराद्धं मया किंतु, धर्म्मलाभोऽपि यन्न मे । स प्राह न त्वया चक्रे, किञ्चिन्मदपकारिणः ॥७॥ साऽवादीद्युवयोः किञ्चिन्नोपलेभे मयाऽन्तरम् । शापेऽपि घातमापेऽपि, यतोऽभूतामुभौ समौ ॥ ८ ॥ क्षपकोऽथावदद्देवीं, साध्व्ययं प्रेरणा तव । कथेयं व्यतिरेकेणान्वये मालाकृदर्जुनः ॥ ९ ॥ तथा हि नगरे राजगृहेऽस्त्यारामिकोऽर्जुनः । स्कन्दमातेव सौभाग्यात्, स्कन्दश्रीर्नाम तत्प्रिया ॥ १० ॥ बहिः पुरस्य तस्यास्त्यर्जुनस्य कुलदेवता । यक्षो मुद्गरपाण्याख्योऽर्जुनोद्यानवनाध्वनि ॥ ११ ॥ स्कन्दश्रीरन्यदा भर्त्तुर्भक्तं दत्त्वाऽवचित्य च । पुष्पाणि मुद्गरपाणिप्रासादान्तिकमागमत्॥१२॥ तत्र दुर्ललितैः षड्भिः,पुरुषैः सा निरीक्षिता । समाहूता समायाता,गृहीता गृहिणीकृता॥१३॥ यक्षस्य पुरतस्तेषां, वसतां च तया समम् । तद्भर्ताऽभ्येति यक्षार्चानित्यार्चाकृत् तदाऽर्जुनः ॥ १४ ॥ तां वीक्ष्य च तया प्रोचे, मालाकारः समेत्ययम् । किं विसृजथ मां यूयं?, दध्युरस्या इदं प्रियम् ॥१५॥ भूयः सम्भूय तैः षड्भिरपि बद्धोऽर्जुनस्ततः । यक्षस्याथ पदे बद्ध्वा, भजंते तां तदग्रतः ॥ १६ ॥ स्कन्दश्रीरभ्यवस्कन्दास्थितेव कपटाद् जगौ । परायत्ता त्वदायत्ताऽप्यहं नाथ ! करोमि किम् ? ॥ १७ ॥ स निर्दम्भः सदंभां तां, विलपन्तीं निशम्य च । दध्यौ यक्षमहं नित्यं, कुसुमैः पूजयाम्यमुम् ॥ १८ ॥ तथाप्यस्यामवस्थायामेवं परिभवं लभे । यदहं तद्भवान्नास्ति, यक्षोऽप्यक्षोऽन्यथा कथम् ॥ १९ ॥ कर्म्मबद्धस्य मे जीवस्येवाग्रेऽपि

मतिः प्रिया । मत्तोऽन्यैर्भुज्यते सान्तःकरणैः करणैरिव ॥ २० ॥ युग्मम् ॥ एवं विचिन्तयत्यस्मिन्, यक्षोऽलक्ष्योऽपरैर्नरैः । अर्जुनकृतकूपस्तस्य, प्रविवेश शरीरके ॥२१॥ झटिति त्रोटयित्वाऽथ, बन्धनं धावितः क्रुधा । जग्राह मुद्गरं लोहं, सहस्रपलसम्भृतम् ॥२२॥ आविष्टोऽगेष्वसौ शीघ्रं, सर्वान् दुष्टांस्तया समम् । जघान जघनासक्तान्, घनघातेन तानथ ॥२३॥ षण् नरान् कामकोपाद्यान्, दुर्गतिं स्त्रीं च सप्तमीं । निघ्नतोऽस्य पुरः केऽपि, परे नास्थुर्यतेरिव ॥२४॥ स्त्रीलतासप्तमानां नृक्षोणिजानां क्षयङ्करः । तस्यागुर्बहवोऽप्येवं, वासराः कासरा इव ॥ २५ ॥ न निर्गच्छन्ति लोकोऽपि, तावद्राजगृहाद्बहिः । स्त्रीसप्तमानां नो नृणां, यावदाकर्णितो वधः ॥ २६ ॥ तदा च भगवांस्तत्र, श्रीवीरः समवासरत् । निर्याति नगरात् कोऽपि, न तु नन्तुमना अपि ॥ २७ ॥ श्रेष्ठी सुदर्शनो नाम, जिनेन्द्रदर्शनोद्यतः । निश्चिन्तो यक्षविष्यत्त्वे, प्रचचाल विवन्दिषुः ॥ २८ ॥ विलोक्यार्जुनकस्तं च, समुद्गिरितमुद्गरः । अधावत वधायास्य, क्रोधसम्बोधदुर्द्धरः ॥ २९ ॥ सोऽप्यर्हत्सिद्धनिर्ग्रन्थधर्म्माणां शरणंश्रितः । ऊचे जगद्गुरुः श्रीमान्, महावीरो गतिर्मम ॥ ३० ॥ अस्यां च मम वेलायां, प्रमादो यदि जायते । आहारोपधिदेहाद्यं, विसृष्टं त्रिविधेन तत् ॥३१॥ प्रत्याख्याय च साकारं, नमस्कारं विचिन्तयन् । कायोत्सर्गेण तस्थौ स, च्छद्मस्थ इव तीर्थकृत् ॥ ३२ ॥ तत्रपेयामिवैतं च, परितः स परिभ्रमन् । अक्षमो निर्निमेषेण, तं निरैक्षत चक्षुषा ॥ ३३ ॥ अथ मुद्गरमादाय, यक्षे प्रतिगते सति । पपातार्जुनकः क्षोणौ, क्षणान्निर्दोषपात्रवत् ॥३४॥ उत्थितस्तमपृच्छच्च, कथं कथमहं स्थितः ? । कृतं किं किं मयाऽवस्था, का च ? मे त्वं निवेदय ॥ ३५ ॥ प्राच्यं व्यतिकरं तं च, तस्याचक्षे सुदर्शनः । श्रुत्वा हा हाऽस्म्यहं पाप, इति वैराग्यमागमत् ॥३६॥ अपृच्छचार्जुनः क्व त्वं, प्रस्थितोऽस्यपरोऽवदत् । वन्दितुं स्वामिनं सोऽपि, समं तेन गतस्ततः ॥३७॥ नत्वा जिनं तदाख्यातं, धर्म्मं श्रुत्वा च तं नमन् । उवाच भगवन्! शुद्धिः, किं ममापि

प्रजायते ? ॥ ३८ ॥ भगवानाह तपसा; पापं विच्छेत्स्यते तव । सकलं कलधौतस्य, मलः किल यथाऽग्निना ॥ ३९ ॥ श्रुत्वेति व्रतमादाय, दायाद इव स प्रभोः । तत्रैव व्यहरद्राजगृहे कर्म्मक्षयोद्यतः ॥ ४० ॥ वैरी स्वजनहन्ताऽसौ, सर्वासौष्ठवकारणम् । निन्द्यमानो जनैनैवं, महात्मा सहते स्म सः ॥ ४१ ॥ रज्यमानो रजःपुञ्जैः, कुट्यमानश्च यष्टिभिः । दलिभिर्दल्यमानोऽपि, सहे देहे स निस्पृहः ॥ ४२ ॥ दध्यौ च संवराभावे, लग्नं कर्म्मप्रदीपनम् । मम विध्यापयन्त्येते, रजसा साधु साधु तत् ॥ ४३ ॥ कुवल्ल्यामिव वल्ल्यां मे, तनौ कर्म्मफलानमी । यष्टिघातैर्लघूकर्त्तुं, पातयन्तु पचेलिमान् ॥४४॥ उत्पत्त्या हसतः कर्म्मसरटान् ज्ञानभास्करम् । सदावृत्तिस्थितान् लोष्टैघ्नन्तु किं मम नश्यति ? ॥४५॥ अमी जाङ्गुलिकाः गालिजाङ्गुलीमन्त्रजापतः । कर्म्मनागकुलान्यष्ट, नाशयन्ति घनाद्बिलात् ॥ ४६ ॥ एतेऽष्टादशधा पापस्थानवृश्चिकजातिजम् । आक्रोशमन्त्रैर्निघ्नन्तो, हिता मे किल्बिषं विषम् ॥ ४७ ॥ नित्यं च षण्णरान्नारीसप्तमान् निघ्नता त्वया । रे जीव ! सप्ततत्त्वीव, निहता निहतात्मना ॥४८॥ यत्तत्र जीवोऽजीवश्चाप्याश्रवः संवरस्तथा । निर्जरा बन्धमोक्षौ च, षण्णराः स्त्री च सप्तमी ॥ ४९ ॥ परायत्ततया नित्यं, तत्तद्बन्धं विधायिनः । प्र यश्चित्तं भवेदित्थं, सहस्व निभृतस्ततः ॥ ५० ॥ एवं विचिन्तयन्नेष, विशेषध्यानसङ्गतः । सर्वकर्म्मक्षयात् प्राप. निष्पापः परमं पदम् ॥ ५१ ॥ इत्याक्रोशपरीषहः ॥

अथ वधपरीषहोदाहरणं, तथाहि–श्रावस्तीस्वामिनोऽस्तीह, जितशत्रोस्तनूरुहः । धारिण्यां सप्ततत्त्वज्ञः, कुमारः स्कन्दकाभिधः ॥१॥ पुरन्दरयशाश्चास्य, स्वसा दण्डकिभूभृता । परिणीता विनीताऽस्ति, कुम्भकारकटे पुरे ॥ २ ॥ दण्डकेराज्ञया राज्ञः, सचिवस्तस्य पालकः । तत्रागाद्वेत्रिमुक्तश्च, नृपं नत्वा निविष्टवान् ॥ ३ ॥ जामातृकुशलप्रश्नपूर्वं कौशलिकं नृपः । तेना-

पिंतं समादाय, तममानममानयत् ॥ ४ ॥ नृपास्थानेऽन्यदा वाक्यं, धर्मद्वेषि द्विजोऽवदत्। पालको बालकोऽभापि, स्कन्दकेन मनीषिणा ॥ ५ ॥ त्रिकालज्ञे जिने देवे, तदुक्तपथगे गुरौ । जिनप्रणीते धर्म्मे च, विसंवादः सतां कुतः? ॥ ६ ॥ तत्त्वत्रयं प्रतिष्ठाय, कृतः सद्यो निरुत्तरः । कुमारमेष वाग्मात्रात्तुष्टुवे गूढमत्सरः ॥ ७ ॥ स्कन्दकस्तु भवास्कन्दकरोऽसौ बालकालतः। श्रीसुव्रते समायाते, योधपञ्चशतीयुतः ॥ ८ ॥ जग्राह मोदतो दीक्षां, सूरित्वे च प्रतिष्ठितः। कुम्भकारकटं गन्तुं, पप्रच्छ प्रभुमन्यदा ॥९॥ युग्मम् ॥ प्रभुः प्राणान्तिकं प्राहोपसर्गं तत्र सोऽब्रवीत् । आराधकाः ? प्रभुः प्रोचे, त्वां विनाऽऽराधकाः परे ॥ १० ॥ ज्ञातेऽपि सपरीवारो, भवितव्यानुभावतः । जगाम स्कन्दकाचार्यः, कुम्भकारकटे पुरे ॥११॥ ज्ञात्वा स्कन्दकमायातं, पालकः स्वहितैर्नरैः । यतिवासोचितोद्यानेष्वायुधानि न्यधापयत् ॥१२॥ समायातं समाकर्ण्य, स्कन्दकं दण्डकिर्नृपः। प्रणन्तुमागमद् द्रेधा, पुरन्दरयशोयुतः ॥ १३ ॥ वन्दित्वा सादरं भक्त्या, तस्माच्चाकर्ण्य देशनाम् । स्तुवन् पुरान्तरायातो, विज्ञप्तस्तेन पाप्मना ॥ १४ ॥ नोपेक्ष्यः सेवकैर्भक्तैः, स्वस्वामी व्यसने पतन्। सर्वनाशोचितस्यास्य, तेन विज्ञप्यसे प्रभो: ॥ १५ ॥ स्कन्दकः सैष ते राज्यं, जिघृक्षुः समुपागतः । सहस्रयोधिभिः पञ्चशत्या पापण्डिभिर्वृतः ॥ १६ ॥ स स्कन्दके समारूढमत्सरच्छद्मसत्यदृक् । प्रत्याययितुं नृपं तत्रोद्याने शस्त्राण्यदर्शयत् ॥१७॥ तद् दृष्ट्वा दण्डकी रोपाद्दण्डायैषां तमादिशत्। पालकः स्वेच्छया यन्त्रे, सोऽपिषत्तांस्तिलानिव॥१८॥ सर्वे निष्पील्य कर्म्माणि, पील्यमानेऽङ्ककेऽथ ते। अन्तकृत्केवलीभावमाप्यागुः परमं पदम् ॥ १९ ॥ अथ बालमुनेः काले, पालकं स्कन्दकोऽब्रवीत् । मां पिष्ट्वा प्रथमं बालमेतं पिण्ढि ततः परम् ॥ २० ॥ पालको बालकं साधुं, तं यन्त्रे प्रथमं न्यधात् । स कृताराधनाध्यानसन्धानो निर्वृतिं ययौ ॥ २१ ॥ स्कन्दकः पीड्यमानस्तु, निदानं कृतवानिति । भूयासं देशभूपालपालकप्लोषहे-

तवे ॥ २२ ॥ धर्म्मध्वजं च रक्तात्तं, भुजभ्रान्त्या तदीयकम् । नमसा शकुनी नीत्वा, तत्याजान्तःपुरोपरि ॥२३॥ पुरन्दरयशादेवी, प्रत्यभिज्ञाय तं पुनः । उवाच किमिदं? ज्ञात्वा, कञ्चुक्यूचे च तत्तथा ॥२४॥ कर्म्मातिश्वपचं साधौ, दुर्वचं किमिदं त्वया? । विहितं दण्डके! देवी, क्रुधेति नृपतिं जगौ॥२५॥ कर्म्मचण्डालता चक्रे, प्रचण्डा दण्डके! त्वया । यद्वाक्येनेदृशी धिक् तं, द्विजातिं चाधमाधमम् ॥ २६ ॥ निन्ये शासनदेव्याऽसौ, वदन्तीति नृपान्तिकात् । व्रतं श्रीसुव्रतस्वामिसमीपे च समाददे ॥ २७ ॥ स्कन्दकोऽग्निकुमारेपूत्पद्यास्येत्य विरोधतः । सराष्ट्रं दण्डकं दग्ध्वा, दण्डकारण्यमातनोत् ॥ २८ ॥

अथ याच्ञापरीषहदृष्टान्तः, तथाहि द्वारकादाहे, सञ्जाते यादवक्षये । विष्णुलोकं गते विष्णौ, सिद्धार्थसुरबोधितः ॥१॥ श्रीमन्नेमिसमादिष्टचारणश्रमणान्तिके । आत्तदीक्षो बलः शैलशृङ्गस्थस्तप्यते तपः ॥ २ ॥ युग्मम् ॥ सप्तसप्तमिकाद्याः स, प्रतिमाः प्रतिपन्नवान् । तासां स्वरूपं विज्ञेयमित्थमागमभाषितम् ॥ ३ ॥ प्रथमे सप्तके दत्तिरेकैकाऽशनपानयोः । द्वितीये द्वे स्युरेवं च, सप्तमे सप्त सप्तके ॥ ४ ॥ एवमेकोनपञ्चाशद्दिनैर्भिक्षाशतेन च । षण्णवत्यधिकेन स्यादाराद्धाऽसौ यथाविधि ॥५॥ स्यादष्टाष्टमिकाऽप्येवं, चतुःषष्ट्या तु वासरैः । एकाशीत्या दिनैरेवं, भवेन्नवनवम्यपि ॥ ६ ॥ तृणहारकाष्ठहारवनच्छिद्भ्योऽन्नपानकम् । सोऽर्द्धमासादथो मासात्, प्राप्य पारणकं व्यधात् ॥ ७ ॥ तृणकाष्ठादिहारेभ्यस्तपःकाष्ठाजुषं च तम् । दिव्यरूपं परिज्ञायाक्षुभ्यन् सीमान्तपार्थिवाः ॥ ८ ॥ दध्युश्च कुरुते कोऽपि, तपोऽस्माकमुपर्ययम् । कष्टं करोति राज्येच्छुस्तत्तं विध्वंसयामहे ॥ ९ ॥ सन्नद्धबद्धकवचा, विविधायुधपाणयः । अनेकवाहनारूढास्ते श्रीराममुपागमन् ॥१०॥ ततः सिद्धार्थदेवेन, रामर्षिचरणान्तिके । महाविकरालवदना, महाभैरवदर्शनाः ॥ ११ ॥ क्षोदयन्तः क्षितिं कालायसाङ्कुशसखैर्नखैः । मुक्तस्कन्धसटाः सिंहव्यूहास्तत्र विनिर्मिताः ॥१२॥ युग्मम् ॥

स्थानं निजं निवृत्याऽगुर्नृसिंहाख्यां त्ववाप सः ॥ १२ ॥ तस्य साम्यजुषो ध्यानरतेः स्वाध्यायसंजुषः । शान्ताः स्नेहं व्यधुर्नित्यं, शत्रवोऽपि हि जन्तवः ॥१४॥ केचिद्भद्रकतां भेजुः, श्रावकत्वं च केचन । केचिच्चानशनं केचिच्छिष्यवत्पर्युपासते ॥ १५ ॥ एको मृगः पुनर्जातिस्मरः संवेगवांस्ततः । यत्र यत्र मुनिर्याति, तत्र तत्रानुयाति सः ॥ १६ ॥ अन्यदा बलदेवर्षिर्मासपारणकारणात् । प्राविशत्पुरि भिक्षार्थी, ददृशे चैकया स्त्रिया ॥ १७ ॥ साऽऽलोक्य कामपालर्षिं, काममूर्तिविडम्बकम् । जगाम कामबाणानां, निकाममपि वेध्यताम् ॥१८॥ निरूपयन्ती तद्रूपमसौ कूपतटास्थिता । कुंभकण्ठभ्रमात् क्षीरकण्ठकण्ठे गुणं न्यधात् ॥ १९ ॥ अद्दढीकृतपाशायां, तस्यां सोऽन्तिकमागमत् । तां संबोध्य निजं रूपं, निन्दन् व्यावृत्य निर्गतः ॥२०॥ निरियायाऽन्यदा चारुदारुग्रहणहेतवे । रथकारपरीवारः, पाथेयादिमुगाययौ ॥ २१ ॥ तदादेश्या नराः पारवध्याः सितपरश्वधैः । परःशतांस्तरूंश्छिन्नानर्द्धच्छिन्नांश्च चक्रिरे ॥ २२ ॥ बलर्षिरपि भिक्षार्थी, तेषु भोज्योद्यतेषु तु । पारणायागमत् पृष्ठे, सारङ्गोऽपि समागमत् ॥२३॥ निरीक्ष्य बलमायातं, रथकारो व्यचिन्तयत् । अहो पुण्योदयो मे यदतारीद् द्युतरुर्मरौ ॥ २४ ॥ अहो महानुपशमोऽस्याहो रूपमहो महः । तत् कृतार्थोऽस्म्यहं भिक्षाकृते यदयमागमत् ॥ २५ ॥ अकस्मादागतायास्मै, मदीयसुकृतैः कृती । प्रासुभिक्षाप्रदानेन, करोमि स्वं विकल्मषम् ॥ २६ ॥ ध्यात्वेति मूर्द्धनि करौ, किरीटीकृत्य भावतः । प्रणनाम महीन्यस्तजानुमस्तकहस्तकः ॥ २७ ॥ अन्नपाने समादाय, समुदेप समुत्थितः । ते चतुर्द्धा विशुद्धे ते, विज्ञाय मुनिरग्रहीत् ॥२८॥ मृगोऽपि भक्तिनिर्गच्छद्बाष्पप्लावितलोचनः । तावुभावपि निध्यायन्नध्यायदिति शुद्धधीः ॥ २९ ॥ धन्यात्मा धन्यमूर्द्धन्यो, मुनिरेष महामनाः । अप्रवेशमयो यस्य, तेन दानफलेनैष, रथकृत् सुकृतक्रमी । बबन्ध देवलोकायुः, पात्रदानेऽल्पकं हि तत् ॥ ३० ॥

नगरेऽभिग्रहग्रहः ॥३१॥ एवंविधमहापात्रप्रदानफलभाजनम्। वनच्छिदपि धन्योऽयं, येनैष प्रतिलंभितः ॥३२॥ अहं तु निजदुष्कर्मवशतः पशुतां गतः। सुरङ्गोऽपि कुरङ्गोऽस्मि, द्विधा दानाक्षमत्वतः॥ ३३ ॥ तावुभावपि यद् दृष्टौ, दृष्टिभ्यां तेन सम्मदात्। विशिष्टदृष्टिस्तज्जातिर्मन्ये जज्ञे तदाद्यपि॥ ३४ ॥ इति सद्ध्यानसन्धानसावधानमनःस्पृशः। सन्ति त्रयोऽपि ते यावदत्र योगभृतो मिथः॥ ३५ ॥ अर्द्धच्छिन्नस्तरुस्तावन्मरुता परिताडितः। तेषामुपरि सद्योऽपि, पपात पविपातवत् ॥ ३६ ॥ त्रयोऽपि पंचतां प्राप्य, त्रिदिवे पंचमे च ते। विमाने जज्ञिरे पद्मोत्तराः पद्मोत्तराभिधे ॥ ३७ ॥ प्रभावः कोऽपि भावस्य, स्पृश्यमानस्य पश्यतः। दातृसाधुसमानयां, मृगायापि ददौ गतिम् ॥३८॥ दातृग्राहकमेलापोऽगुण्यपुण्यो महाद्भुतः। यस्यावस्यायतामात्रादपि यत्र सुपर्वता ॥ ३९ ॥ कक्षे कक्षीकृतो दुष्प्रसहो याच्ञापरीषहः। तथा नैव यथा श्रीमन्मन्दिरे मन्दिरेगतैः ॥ ४० ॥ यथा श्रीबलभद्रेण, बलभद्रेण साधुना। याच्ञापरीषहः पोढस्तथा सह्यः परैरपि ॥ ४१ ॥

अथालाभपरीषहोदाहरणम्,— कृष्णस्य ढण्ढणापत्न्या, ढण्ढणो नामतः सुतः। बुद्धो देशनया श्रीमन्नेमेः स व्रतमग्रहीत् ॥ १ ॥ द्वारिकांतः स च भ्राम्यन्, भिक्षां न प्राप कुत्रचित्। ये चान्येऽपि समं तेन, मुनयो यान्ति ते तथा ॥ २ ॥ श्रीनेमिर्मुनिभिः पृष्टः, प्रभो! किं ढण्ढणो मुनिः। शिष्यो वः कृष्णसूनुश्च, नगर्यामृद्धिभाज्यपि ॥ ३ ॥ भ्राम्यन्न लभते भिक्षामप्येप सकलं दिनम्। हंति लब्धि परेषां च, तत्र किं नाथ! कारणम्? ॥ ४ ॥ प्रभुः प्राहाधिमगधं, ग्रामेऽभूद्धान्यपूरके। पुरे परासरो नाम, द्विजो राजनि भोगवान् ॥५॥ क्षेत्राणि क्ष्मापतेर्विधाग्रामीणैर्वापयन्नयम्। यामयुग्मे समेतेऽपि, भक्तेऽमुंचन्न खेटकान् ॥ ६ ॥ क्षुत्तृड्भ्रान्तैर्नरैः पंचशत्या तद्द्विगुणैर्वृषैः। क्षेत्रे प्रत्येकमेकैकां, सीतामयमकर्षयत् ॥ ७ ॥ सोऽथ मृत्वा भवं भ्रान्त्वा, ढण्ढणो

नामतोऽभवत्। तच्चान्तरायकर्म्मास्य, सम्प्रत्युदयमागतम् ॥ ८ ॥ श्रुत्वेत्ययं न भोक्ष्येऽहं, परलब्ध्येत्यभिग्रहम्। गृहीत्वा
पालयामास, दुष्पालमपि सात्त्विकः ॥ ९ ॥ गदाभृदन्यदाऽपृच्छन्नाथं दुष्करकारकः। कः साधुषु विशेषेण ?, ततः श्रीनेमिरब्रवीत्
॥ १० ॥ दुष्करं कुर्वते सर्वे, विशेषाद् ढण्ढणो मुनिः। बहोः कालाद्यतोऽलाभपरीषहसहः स हि ॥ ११ ॥ प्रभुं नत्वा विशन्
विष्णुः, पुरीं ढण्ढणमैक्षत। गजादुत्तीर्य तस्मै च, साधवे माधवोऽनमत् ॥ १२ ॥ तद्वीक्ष्यैको वणिग् दध्यौ, धन्योऽयं विष्णुना
नतः। तद्गृहे स गतस्तेन, मोदकैः प्रतिलाभितः ॥ १३ ॥ पप्रच्छ स प्रभुं नत्वा, क्षीणं तत् कर्म्म किं प्रभो ! । प्रभुः प्राह
हरेर्लब्धिरसौ लब्धिर्न ते मुने ! ॥१४॥ प्रतिज्ञातार्थस्मरोऽसौ, मृद्न (संमृद्नन्) मृदु मोदकान्। परिष्ठापयितुं शुक्लध्यानी केवलमासदत्
॥ १५ ॥ कृतपुण्यकपुत्रस्य, जलकान्तमणिर्यथा। तथाऽस्य केवलं प्रादुरभून्मोदकमर्द्दने ॥ १६ ॥ प्रभुं प्रदक्षिणीकृत्य, ततो
ढण्ढणकेवली। उपाविशत् सुरैः पूज्यमानः केवलिपर्षदि ॥ १७ ॥

अथ रोगपरीषहदृष्टान्तः, मथुरायां पुरा पुर्यां जितशत्रुरभून्नृपः। नाम्ना कालाऽप्यकालांगी, पण्यस्त्री तत्र तिष्ठति
॥ १ ॥ रूपेणाप्रतिरूपा सा, वीक्ष्य विश्वंभराभुजा। अवरोधे परिक्षिप्ता, रत्नं यत्नं यदर्हति ॥ २ ॥ तस्यां च तनयो जज्ञे, जित-
शत्रुमहीभुजः। कालावेश्यांगजत्वेन, स ख्यातः कालवैशिकः ॥ ३ ॥ तस्य स्वसा स्वसामर्थ्यप्रभावहतशत्रुणा। मुद्गशैलपुरेशेन,
व्यूढाऽस्ति हतशत्रुणा ॥४॥ स चान्येद्युः कुमारत्वे, श्रुत्वा गोमायुवासितम्। अपृच्छन्निजकान् पत्तीन्, यत् केषां श्रूयते स्वरः ?
॥ ५ ॥ तैरूचेऽमी वन्यजीवाः, फेरवा विहितारवाः। कुमारः प्राह बद्ध्वैकं, ममानयत कौतुकी ॥ ६ ॥ ते गत्वा पातयित्वा च,
पाशिके घोरवासिनम्। समानीयार्पयामासुराज्ञा मान्या यदीशितुः ॥ ७ ॥ स तं निहन्ति यष्ट्याद्यैः, खिखीति स च कूजति।

कुमारस्य स्वरेणास्य, जायते महती रतिः ॥ ८ ॥ हन्यमानोऽमुना क्रोष्टा, स क्रोशति यथा यथा । कुमारो मारयन्नेतं, प्रहृष्यति तथा तथा ॥ ९ ॥ अन्यदा हन्यमानोऽयं, तुद्यमानोऽग्रघाततः । मृत्वाऽभूद् व्यन्तरः क्रोष्टाऽकामनिर्जरया तथा ॥ १० ॥ अन्यदा स्थविराचार्ये, मथुरायामुपागते । द्विधापि त्यक्तमारः स, कुमारः प्राव्रजत् सुधीः ॥ ११ ॥ क्रमादेकत्वविहारप्रतिमाप्रतिपन्नकः । मुद्गशैलपुरेऽगच्छत्तत्र यत्रास्ति सा स्वसा॥१२॥ अर्शोरोगश्च तस्याभूद्बालत्वादपि कृच्छ्रकृत् । तत्रायातस्तदा बाढं, पीडितः सहसा तु सः ॥ १३ ॥ विज्ञा विज्ञाय तज्जामिरर्शोघ्नदलामिश्रिताम् । भिक्षां दत्तवती सोऽधिकरणं तद्विचिन्तयन्॥१४॥ रोगपीडौषधत्रीडौदासीन्यादशनादि सः । प्रत्याख्याति स्म तद्वेद, मृगालः व्यन्तरः स तु ॥ १५ ॥ स शिवामशिवायास्य, वद्धां बालकमीलिताम् । विधार्य कुर्वन् खीखीति, खादति स्म प्रसीदति ॥१६॥ हतशत्रुर्नृपस्तस्यासन्नसञ्ज्ञातमाश्रितः । रक्षणायोपसर्गाणां, मुंचति स्म निजान् भटान् ॥ १७ ॥ यावत्ते पुरुषास्तावदशिवाय शिवा न सा । दूरस्थेषु तु खीखीति, भाषमाणैव खादति ॥ १८ ॥ तेष्वासन्नेष्वदृश्यः स्यादयं तु सहते मुनिः । अर्शोऽर्त्तिं च स बाढं तु, महात्मा सोढवान् मुनिः ॥ १९ ॥ यथाऽयमर्शसां पीडां, सेहे नौषधमाददे । तथाऽन्यैरपि तद्विज्ञैः, सह्यो रोगपरीषहः ॥ २० ॥

अथ तृणस्पर्शपरीषहः, श्रावस्तीनगरीनाथजितशत्रुनृपात्मजः । भद्रोल्लसन्मतिर्भद्रो, नाम्नाऽस्ति क्रिययाऽपि च ॥ १ ॥ सोऽन्यदा गुरुपादान्ते, दान्तेन मनसाऽन्वितः । निविष्ट ईदृशं धर्म्मोपदेशं मसृणोऽशृणोत् ॥ २ ॥ मनुष्यं दुर्लभं मत्वा, संत्यज्य विषयादिकम् । यत्नो विधीयतां धर्म्मे, यावन्नायाति वार्द्धकम् ॥ ३ ॥ भ्वादीनां सर्वधातूनामन्तेऽधीताश्चुरादयः । तदन्ते यददन्वास्तदहो वार्द्धकवैशसम् ॥ ४ ॥ वलिभिः कलितं भाति, स्थविरस्य कलेवरम् । यमराजागमे दत्तस्वस्तिकं जरसा रसात् ॥ ५ ॥

श्रुत्वेति लघुकर्मैष, व्रतमादाय सद्गुरोः। अधीते स्म श्रुतं सर्वमज्ञासीन्निखिलाः क्रियाः ॥९॥ कालेनैकत्वविहारप्रतिमां प्रत्यपद्यत। विहरन्नन्यदा क्वापि, विराज्ये स समागमत्॥१०॥ हेरिकोऽयमितिभ्रान्त्या, विधृतो नृपपूरुषैः। पृष्टः कस्त्वं? स्पशत्वे च, नियुक्तः केन वा वद? ॥११॥ भगवानेष नो किंचिदभापत रुषा ततः। अनार्यैरविचार्यैव, स दुर्मोपैर्विभापितः ॥१२॥ ततः क्षारेण तक्षित्वा, वेष्टयित्वा कुशैः सितैः। अमुच्यत स तैः पापैरविपह्यन्यथाकरैः॥१३॥विलिख्यमानमांसोऽपि, कुशैर्लोहकुशैरिव। वेदनामाधिसेहेऽसौ, देहे दध्यौ तथेदृशम् ॥१४॥ प्रदीप्तांगारपूर्णेषु, वज्रकुण्डेष्वसान्धिषु। कूजन्तः करुणं केऽपि, दह्यन्ते नारकाग्निना ॥ १५ ॥ अग्निभीताः प्रधावन्तो, गत्वा वैतरणीं नदीम्। शीततोयामिमां ज्ञात्वा, क्षारांभसि पतन्ति ते ॥ १६ ॥ क्षारदग्धशरीराश्च, भयवेगोत्थिताः पुनः। असिपत्रवनं यान्ति, छायायां कृतबुद्धयः ॥ १७ ॥ शक्तियष्टिप्रासकुन्तैः, खड्गतोमरपट्टिशैः। छिद्यन्ते कृपणास्तत्र, पतद्भिर्वातकम्पितैः ॥१८॥ अहं परवशो बाढं, बहुशोऽपि हि वेदनाः। सोढवान्न पुनर्लाभः, स्ववशस्य तदस्तु मे ॥ १९ ॥ प्राणान्तिकोऽपि तेनैष, उक्तं चाशाश्वते काये, विज्ञाते जिनशासने। कर्म्मण्यवश्यवेद्ये च, लाभो दुःखे प्रतिक्षणम् ॥ २० ॥ तृणस्पर्शपरीषहः। यथा सोढस्तथा सह्यः, श्रमणैरपरैरपि ॥ २१ ॥

अथ मलपरीषहः- चम्पापुर्यां सुनन्दाख्यः, परमः श्रावकोऽभवत्। क्रयाणकानि सर्वाणि, सुप्रापाण्यस्य चापणे ॥ १ ॥ हेलयाऽपि ददात्येष, भेषजाद्यं यथोचितम्। सक्तुप्रभृतिकं चापि, मुनिभ्यः प्राशुकं सुधीः ॥ २ ॥अतो भीष्मेऽन्यदा ग्रीष्मे, क्षरत्स्वेदमलाविलाः। सुसाधवः समाजग्मुर्भेषजाय तदापणे ॥ ३ ॥ अमलानां मनस्येषां, मलगन्धः स गात्रजः। तदीयसुरभिद्रव्याण्यभिभूय प्रवृद्धवान् ॥ ४ ॥ न्यस्तकस्तूरिकः शीर्षे, स च चन्दनचर्चितः। हृतो गन्धेन नासायां, तेनाशासु प्रसारिणा

॥ ५ ॥ अचिन्तयच्च चित्तेऽसौ, मुनयोऽनुनयस्पृशः । सुन्दरं स्यान्मलं गात्रादुद्वर्त्योच्चारयन्ति चेत् ॥ ६ ॥ तच्चिन्तितमना-लोच्य, लेख्यशेषो बभूव सः । त्रिदिवे त्रिदशीभूतः, प्रभूतः सुखभागभूत् ॥ ७ ॥ ततश्च्युतश्च कौशाम्ब्यामिभ्यपुत्रतयाऽभवत् । निर्विण्णकामभोगोऽथ, धर्म्मं श्रुत्वाऽऽददे व्रतम् ॥ ८ ॥ तत्र कर्म्मण्युदीर्णे च, दुर्गं दुर्गन्धमाप सः । यत्र यत्र व्रजत्येष, तत्र तत्रोपहासिता ॥ ९ ॥ भणितः साधुभिः सोऽथ, मा निर्गच्छ प्रतिश्रयात् । यतः शासनमालिन्यं, गोपनीयं प्रयत्नतः ॥ १० ॥ नित्यं दुर्गन्धकायोऽयं, कायोत्सर्गं व्यधात्ततः । अंगभोगेन तत्कर्म्ममर्मभंगे समुद्यतः ॥ ११ ॥ कर्म्मण्युदीर्णे जीर्णेऽसौ, देवता-ऽवनतांह्रिकः । चक्रे देवतया दिव्यगन्धसम्बन्धबन्धुरः ॥ १२ ॥ सुगन्धिनिखिलद्रव्यगन्धन्यत्कारकारकः । काष्ठामुपागतः कायो, देवस्तस्याध्यवासयत् ॥ १३ ॥ सुगन्धत्वेऽपि दुर्गन्धरीत्या वाच्यं जने गतः । सुन्दरेऽसुन्दरे वापि, स्यात् सर्वत्रातिगर्हिता ॥ १४ ॥ कायोत्सर्गवतस्तस्य, पुनर्दैवतदर्शनात् । दुष्ठुसुष्ठुविहीनत्वाद्गन्धः स्वाभाविकोऽभवत् ॥ १५ ॥ नाधिसेहे यथा तेन, पुरा मलपरीषहः । साधुना नाधुना तद्वद्विधेयं विधिवेदिना ॥ १६ ॥

अथ सत्कारपुरस्कारपरीषहः-मथुरायां पुरा पुर्यामिन्द्रदत्तः पुरोहितः । स्वप्रासादगवाक्षस्थ, आयान्तं मुनिमीक्षते ॥१॥ तस्मिन्नधः समेतेऽसौ, लम्बमानं पदं व्यधात् । अमुष्य मस्तके न्यस्तः, स्यादित्याकूतदुष्टधीः ॥ २ ॥ श्रेष्ठिना स तथा दृष्टः, श्रावकेण च केनाचित् । अमर्षणः स सागारः, संगरं विदधाविति ॥ ३ ॥ यदि तेन पदश्चक्रे, वक्रेण मनसा मुनौ । छेदनीयस्ततोऽवश्यं, मया गतदयात्मना ॥ ४ ॥ मार्गयत्यन्वहं तस्य, छिद्रमुन्मुद्ररोपधीः । भूतः कृतात्मरक्षस्येवास्य तल्लभते न तु ॥ ५ ॥ अन्यदा विशदाचार्यपदान्नत्वाऽऽख्यदेष तत् । तैरूचे सह्यते ह्येष, दुःसहोऽपि परीषहः ॥ ६ ॥ स प्राह विदधे सेयं, प्रतिज्ञा

निर्दया मया। सूरयः प्राहुरधुना, किमोकस्यस्य वर्त्तते? ॥७॥ स जगादाज्ञानसिंधुरोधसोऽस्य पुरोधसः । प्रासादोऽस्ति नवो भावी,
तत्प्रवेशमहोत्सवः ॥ ८ ॥ भोजनाय जनाधीशमयमामन्त्रयिष्यति । समग्रपरिवारेण, सहितं पूजयिष्यति ॥ ९ ॥ आचार्या
जगदुस्तर्हि, प्रासादे प्रविशन्नृपः । तर्हि त्वया धृतेः नत्वा, विधातव्योऽतिदूरतः ॥ १० ॥ प्रासादोऽयं पतत्युच्चैरितिवाच्यं
नृपाग्रतः । तदाऽहं पातयिष्यामि, प्रासादं हृद्यविधया ॥ ११ ॥ तथा भूतेऽखिलेऽप्यर्थे, श्रेष्ठिना भणितो नृपः । यन्मारयितुमार-
ब्धा, यूयमेतेन पाप्मना ॥ ११ ॥ कुपितस्तस्य भूपालः, श्रावकस्य तमार्प्पयत् । तेनास्य चरणौ बद्ध्वा, चेन्द्रकीले प्रवेशितः
॥ १३ ॥ पश्चाद्दयोमयं कृत्वा, छित्वा चैनं दयामयः । पुरोहितमथो भूतदयः श्रेष्ठी व्यसर्जयत् ॥ १४ ॥ साधुना साधु एवैष,
विषोढव्यः परीषहः । न तु श्रावकवत्कार्यमकार्यमिदमीदृशम् ॥ १५ ॥

अथ प्रज्ञापरीषहः, धरावासपुरेशस्य, वैरिसिंहस्य नन्दनौ । अभूतां सुरसुन्दर्यां, कालकश्च सरस्वती॥१॥ कालकोऽन्ये-
द्युरुद्याने, वाहकेलिं गतो गुरोः । गुणाकराभिधाद् बुद्धः, प्राव्राजीदनुजायुतः ॥ २ ॥ शतसङ्ख्या नरा नार्यस्तावन्तु प्राव्रजन्नथ ।
कालकः स्वपदे न्यासि, गुरुभिर्गुरुभिर्गुणैः ॥३॥ प्रवर्त्तिनीत्वे तज्जामिरवन्त्यामन्यदाऽगमन् । श्रीमन्तः कामिकाचार्याः, साधु-
साध्वीसमन्विताः ॥ ४ ॥ गर्दभिल्लोऽन्यदाऽवन्तीपतिर्वीक्ष्य सरस्वतीम् । बलादन्तःपुरे न्यास्थत्, को विवेको हि कामिनाम्? ॥५॥
तस्मिन् बोधवचः सूरेः, सङ्घस्य च वृथाऽभवत् । पारधौ बन्धुवद्धवत् , क्षीणायुरपि जायुवत् ॥ ६ ॥ अथोन्मत्तकवेषेण, भ्रमन्निति
ललाप सः । गर्दभिल्लो यदि नृपस्ततः स्यात् किमतः परम् ? ॥ ७ ॥ भिक्षेऽहं यदि शून्ये वा, वसामि किमतः परम् ? । मत्वेति
बोधितोऽमात्यैर्नाबुध्यत नृपाधमः ॥ ८ ॥ श्रुत्वेति कुपितः सूरिः, सस्मारागमभाषितम् । सङ्घादिकार्ये यश्चक्रिसैन्यमप्यंतयेन्मुनिः

॥ ९ ॥ ध्यात्वेति शककूलेऽगात् , सामन्तास्तत्र शाखयः । नृपः शाखानुशाखिस्तु, कीर्त्यते देशभाषया ॥ १० ॥ शाखिमेकं च मन्त्रार्थस्तस्थुगवर्ज्य सूरयः । क्षुरिकाप्राभृतस्तत्रान्यदा दूतः समागमत् ॥ ११ ॥ शाखिः श्यामाननः पृष्टः, सूरिभिः प्राह नः प्रभुः । क्रुद्धः प्रेषयते शस्त्रीं, तया छेद्यं निजं शिरः ॥ १२ ॥ कृपाणिकायामेतस्यां, पण्णवत्यङ्कवीक्षणात् । मन्ये पण्णवतेः सामन्तानां क्रुद्धो धराधिपः ॥ १३ ॥ सर्वेऽपि गुप्तमाहूय, सूरिभिस्तेऽथ मेलिताः । तरीभिः सिन्धुमुत्तीर्य, सुराष्ट्रायां समाययुः॥१४॥ वर्षारात्रे तदायाते, गतेः प्रत्यूहकारिणि । विधाय पण्णवत्याऽंशैः, सुराष्ट्रं तेऽवतस्थिरे ॥ १५ ॥ गुर्वादिष्टैश्च शरदि, तैरूचे नास्ति शम्बलम् । गुरुश्चूर्णेन सौवर्णमिष्टिकापाकमादधे ॥ १६ ॥ शम्बलाद् बलवन्तोऽपि, मालवं लातुमिच्छवः । चित्रं गुरुगिराऽऽसंस्ते, गुर्वाज्ञा हि बलीयसी ॥ १७ ॥ गर्दभिल्लः ससैन्योऽपि, समेतस्तैर्महाबलैः । भग्नः प्रविश्य पुर्यस्थादेतां रुरुधिरे च ते ॥ १८ ॥ अथाष्टमीदिने दुर्गे, शून्ये पृष्टः शकैर्गुरुः । आचख्यौ गर्दभीं विद्यामधार्यं साधयिष्यति ॥ १९ ॥ तद्रवश्रवणाच्छत्रुसैन्यं स्यान्मूर्च्छितं यथा । गव्यूतः परतः सर्वं, शिविरं तन्निवेश्यताम् ॥ २० ॥ अष्टोत्तरं शतं शब्दवेधिनः सन्तु मेऽन्तिके । तथा कृतेऽथ तैः सूरिगदितैः शब्दवेधिभिः ॥ २१ ॥ तस्याः प्रसारितं वक्त्रं, तूणीचक्रे क्षणादपि । हतप्रभावा नष्टाऽथ, विद्याऽवद्यात्मनस्ततः ॥ २२ ॥ युग्मम् ॥ सूर्याज्ञया ततः पुर्यां, प्रविश्याऽऽनायितः शकैः । बद्ध्वा पाशैस्ततो गर्दभिल्लो गुरुपदान्तिके ॥२३॥ स तैरूचे तवान्यायतरोः पुष्पमिदं ननु । फलं त्वन्यभवे भावि, घोरा नरकवेदनाः ॥ २४ ॥ तद्धर्म्मं प्रतिपद्यस्वाधुनाऽपि जिनभाषितम् । इत्युक्तेऽथागसौ द्वेधा, चक्रे निर्विषयः स तैः ॥ २५ ॥ मित्रं शाखिं नरेन्द्रत्वे, सामन्तत्वे परानपि । सूरयः स्थापयामासुर्निजां जामिं च संयमे ॥ २६ ॥ अथ भृगुपुरे राजा, युवराजश्च तिष्ठतः । बलमित्रभानुमित्राभिधौ जामिसुतौ गुरोः ॥ २७ ॥ प्रधानं

प्रेक्ष्य ते सूरिमानाय्य प्राज्यमानतः । प्रवेशय चक्रतुश्चैत्योत्सवं जितशतक्रतू ॥ २८ ॥ श्रुतो नृपस्वसुर्मातुश्रियो धर्म्मं गुरोर्मुखात् । बलभानुः समाकर्ण्य, दक्षो दीक्षामुपाददे ॥ २९ ॥ भक्तं वीक्ष्य नृपं क्रुद्धः, पुरोधा विवदन्मुधा। निरुत्तरीकृतो भूपं, कैतवादित्यभापत ॥ ३० ॥ वन्द्यपादपदाक्रान्तिर्महादोषप्रपोषिणी । नृपोऽथ तद्गिरा मूढोऽनेषणां नगरे व्यधात् ॥ ३१ ॥ एवं निरीक्ष्य च घनागमेऽपि स घनागम । महाराष्ट्रकिरीटाभे, प्रतिष्ठानपुरेऽगमत्॥३२॥ शालिवाहनभूपेन, महत्त्र्या स प्रवेशितः। विज्ञसश्च ससंघेन, पष्ठ्यां पर्युषणाविधौ ॥ ३३ ॥ यतो लोकानुवृत्त्याऽत्रेन्द्रोत्सवः पंचमीदिने । सूरयः प्रोचिरे पर्युषणा नात्येति पंचमीम् ॥ ३४ ॥ जिना गणेशास्तच्छिष्या, पंचाशत्के दिने यथा । पुरा पर्युषितास्तद्वद्, गुरवो नस्तथा वयम् ॥ ३५ ॥ चतुर्थ्यामस्त्विति प्रोक्ते, नृपेण गुरवो जगुः । अस्तु प्रोक्तं हि सिद्धान्ते, परिवास्तव्यमारतः ॥ ३६ ॥ स्वच्छन्दानन्यदा शिष्यान्, प्रोज्झ्य शय्यातराग्रतः । आख्याय सागरचन्द्रं, प्रशिष्यं सूरयो ययुः ॥ ३७ ॥ तेन चाभ्युत्थिता व्याख्याक्षणे तेऽज्ञातवृत्तवत् । तस्थुस्ततत्पृष्टतद्व्याख्याचारुताप्रथनोद्यताः ॥ ३८ ॥ अथ शय्यातराद् ज्ञात्वा, मुनयोऽपि समाययुः । गुरूनक्षमयन् बाढमपुनःकरणेन च ॥ ३९ ॥ ज्ञात्वा सागरचन्द्रोऽपि, ह्रीभरानतकन्धरः । तस्थौ बाष्पजलैः पादौ, प्रभोः प्रक्षालयन्निव ॥ ४० ॥ उत्थाप्य वालुकाप्रस्थार्द्रमृद्दृष्टान्तदर्शनात् । तं सम्बोध्याबदन् ज्ञाने, त्वं गर्वं मा कृथा वृथा ॥ ४१ ॥ यथा रिक्तो भवेत्प्रस्थः, स्थाने स्थाने विरेचनात् । स्थाने २ विलगनाद्यथा च स्यान्मृदल्पिका ॥४२॥ तथा गणेशपूर्विभ्यो, वत्स! हीनोऽस्म्यहं क्रमात् । अस्मत्तस्ते गुरुस्तस्मात् त्वं च हीनतरस्तथा ॥ ४३ ॥ प्रज्ञापरीग्रहः सोऽयं, वत्स ! साम्रस्ततस्त्वया। इत्युक्तः स गुरोर्वाचं, तथेति प्रत्यपद्यत ॥ ४४ ॥ शक्रोऽन्यदा निगोदानां, व्याख्यां सीमन्धरप्रभोः । श्रुत्वा पप्रच्छ भरते, व्याख्यात्येवंविधं हि कः? ॥४५॥ विज्ञाय कालकाचार्यं,

विप्रवेषः समागतः । तद्व्याख्यानश्रुतेस्तुष्टः, पप्रच्छायुर्निजं नृपा ॥ ४६ ॥ सूरिः श्रुतेन विज्ञाय, शक्रोऽसीति जगाद तम् । हृष्टः सोऽथ निजं रूपं, प्रकाश्यैवं तमस्तवीत् ॥ ४७ ॥ जय प्रवचनाधार !, जय संसारतारक! । जय सीमन्धरस्वामिस्तुत ! श्रीमन्नमोऽस्तु ते ॥४८॥ स्तुत्वेतीन्द्रोऽन्यतो द्वारं, विधाय तदुपाश्रये । गतो दिवं सूरिरपि, तत् क्षमाश्रमणादिवत् ॥४९॥ षट्स्थानपतितां मत्वा, श्रुतकेवलिनोऽपि हि । न गर्वः सर्वथा कार्यः, सूरिः सागरचन्द्रवत् ॥ ५० ॥

अथाज्ञानपरीषहः—तथा हि जाह्नवीकूलवासिनौ द्वौ सहोदरौ । व्रतिनौ स्तस्तयोरेकः, श्रुतवानश्रुतः परः ॥१॥ श्रुतवान् सूरितां प्राप्तः, शिष्यैः सूत्रार्थलिप्सुभिः । विश्रामं लभते नैव, दिनेष्वपि निशास्वपि ॥२॥ अपश्रुतः पुनः स्वैरं, स्वैरंगैरतिपीवरैः । वासरे च रजन्यां च, शयानः सुखमेधते ॥ ३ ॥ निद्राविद्राणदृक् सूरिर्दध्यौ दुर्ध्यानमन्यदा । भ्राता मे पुण्यवानेष, भुक्त्वा शेते सुखेन यः ॥४॥ मन्दपुण्यस्य मे निद्राऽवकाशो नास्ति निश्यपि । इति प्रद्वेषतोऽबध्नाद्, ज्ञानावरणकर्म्मसः ॥५॥ तत्तादृशमनालोच्य, देवभूयं जगाम च । इहैव भरतक्षेत्रे, सोऽभूदाभीरदेहभूः ॥ ६ ॥ यौवने परिणीतस्य, तस्य जज्ञे च दारिका । कन्यका धन्यकायाऽऽसीद्, आसीत् रूपवती पुनः ॥ ७ ॥ स चैकदा समं पुत्र्या, भृतं घृतघटैरनः । आदाय नगरेऽचालीद्, घृतविक्रयकाम्यया ॥ ८ ॥ परेऽपि तत्सुतारूपनिरूपणसमीहया । आभीरदारकाश्चेलुर्घृतविक्रयकैतवात् ॥९॥ शकटे स्वे च सारथ्यजुषस्तस्या मुखद्युतिम् । मनांस्यनांस्यपि द्रष्टुमुत्पथेनैव तस्थिरे ॥ १० ॥ तेषामनांसि भग्नानि, न मनांसि पुनस्ततः । सा तैरशकटा प्रोक्ता, स चाप्यशकटापिता ॥ ११ ॥ पुनः पुनः सदैवेषु, व्याहरत्सु महाध्वनिम् । प्राप वैराग्यमाभीरः, पराभीरपराभवात् ॥ १२ ॥ परिणाय्य स तां तस्यै, गृहसारं प्रदाय च । पूर्वाभ्यासवशाद्दीक्षां, दीक्षापन्नः समाददे ॥ १३ ॥ तेन योगभृताऽधीते, चोत्तराध्य-

यनत्रये। तत् प्राच्यमप्रतिक्रान्तं, कर्म्मोदीर्णमजीर्णवत् ॥ १४ ॥ तुर्यमध्ययनं तस्य, पठतोऽप्यनवस्थितेः। नापतत्पदमप्येकं, पुण्यहीनस्य वस्विव ॥ १५ ॥ आचामाम्लद्वये जाते, सूरयः प्रोचिरे च तम्। तुर्यमध्ययनं तेऽनुजानामोऽथ वयं वद ॥ १६ ॥ स प्राह कीदृशो योगोऽध्ययनस्यास्य दिश्यताम्। ते प्रोचुर्यावदायाति, नैव तावत्तपः परम् ॥ १७ ॥ सत्त्ववृत्तिः स इत्यूचेऽनुज्ञया पूर्यते मम। यावदायाति मे तावदाचामाम्लानि संतु मे ॥ १८ ॥ तत्तपः कुर्वतस्तस्य, द्वादशाब्दा गतास्ततः। ज्ञानावरणं तत् कर्म्म, तत्क्षणं क्षयमाप च ॥ १९ ॥ तुर्ये तस्यागतेऽध्याये, विकर्म्माणि च निर्गते। सत्यं वचोऽभवद्वैद्यस्यागमो रोगनिर्गमः ॥ २० ॥ श्रुतं शेषं सुखेनैव, तेनाधीतमतो बुधाः !। सहन्तां तद्वदज्ञानपरीषहमुपागतम् ॥ २१ ॥

अथ विपक्षे दृष्टान्तः-बभूव पाटलीपुत्रे, नन्दो नाम नराधिपः। मन्त्र्यस्य शकडालाख्यस्तस्य लक्ष्मीवती प्रिया ॥१॥ स्थूलभद्रस्तयोराद्यः, सुतोऽन्यः श्रीयकाभिधः। तत्र वेश्याऽस्ति कोशेति, कोशः स्मरनरेशितुः॥२॥ द्वादशाब्दीं स्थूलभद्रस्तद्गृहेऽस्थात् सुखैकधीः। श्रीयकस्त्वंगरक्षत्वं, नन्दराजस्य निर्ममे ॥ ३ ॥ अभूद्वररुचिस्तत्र, वादी लाक्षणिकः कविः। सोऽष्टोत्तरशतेनास्तौन्नित्यं श्लोकैर्नवैर्नृपम् ॥ ४ ॥ मिथ्यादृगिति तं मंत्री, न प्राशंसद् द्विजं क्वचित्। प्राभृतैः सेवितुं मन्त्रिपत्नीमिप प्रचक्रमे ॥ ५ ॥ स तया हृष्टया पृष्टः, कार्यमाचष्ट शिष्टधीः। त्वत्पतिर्नृपतेरग्रे, कवितां मे प्रशंसतु ॥६॥ तयोक्तः सचिवोऽवोचन्न मिथ्यादृग्वचः स्तुवे। तयोक्तं साग्रहं मेने, कः स्त्रीवाक्ये पराङ्मुखः॥७॥ अन्यदा पठतस्तस्य, मन्त्र्यूचे साधु भाषितम्। नृपस्ततोऽस्मै दीनारशतमष्टोत्तरं ददौ ॥८॥ नित्यदाने नृपं मंत्री, प्रोचे कोऽयमसद्व्ययः?। नृपः प्राह स्तुतस्तेऽसौ, पुराऽस्माभिः कृतो नतु ॥ ९ ॥ मंत्री प्राह स्तुतं सूक्तं, मयाऽयं न कविः स्तुतः। एतस्य पठितं वाक्यं, यत्पठन्त्यपि बालिकाः ॥ १० ॥ यक्षाऽथ

यक्षदिन्ना च, भूताऽथ भूतदत्तिका । सेणा वेणा च रेणा च, सप्तासन् मन्त्रिपुत्रिकाः॥११॥ सकृदुक्तं वचो ज्येष्ठाऽग्रहीदन्या यथाक्रमम् । ताश्चोपावेशयन्मंत्री, सर्वा जवनिकान्तरे ॥१२॥ ऊचे वररुचिः श्लोकान्नृपस्याग्रे स्वयंकृतान् । अनूचिरे यथाज्येष्ठं, तास्तान् सप्तापि बालिकाः ॥ १३ ॥ द्वारं न्यवारयत्तस्य, नृपो वररुचिस्ततः । न्यास्थद्यन्त्रेण दीनारग्रन्थिं त्रिपथगाजले ॥ १४ ॥ अयं प्रागस्तवीद्गंगां, यन्त्रेण ग्रन्थिमग्रहीत् । जनाध्यक्षं जनोऽप्योचत्, कवेर्दूरे न किंचन ॥ १५ ॥ राजा तन्मन्त्रिणेऽथाख्यन्मंत्र्यूचे वीक्ष्यतां प्रगे । मंत्री स्वपुंसा दक्षेण, तद्ग्रन्थिं स्वकरेऽकरोत् ॥ १६ ॥ कविः स्तोतुमगाद्गंगां, नृपोऽपि सह मन्त्रिणा । प्रीतो वररुचिर्गंगां, कृतविस्तरमस्तवीत् ॥ १७ ॥ स्तुत्यन्ते तस्य यन्त्रेण, न दीनाराः करेऽपतन् । न पाणिस्पर्शनेनापि, हीनत्रास्यस्ततोऽभवत् ॥ १८ ॥ मन्त्र्यूचेऽन्यायिनी गंगा, न न्यस्तमपि तेऽर्पयेत् । तन्न्यायेन मया ते स्वमाप्तमेतद् गृहाण तत् ॥ १९ ॥ कविर्नृपजनाध्यक्षं, मंत्रिणेति लघूकृतः । नृपः आह त्वया छद्मास्य ज्ञातं साधु मन्त्रिप ! ॥ २० ॥ नृपः सविस्मयो वेश्मन्यगान्मंत्री जनोऽपि च । मंत्रिदासीमथामर्षाद्, द्विजो वित्तैरुपाचरत् ॥ २१ ॥ प्रीतां च तां स पप्रच्छ, प्रत्यहं मंत्रिचेष्टितम् । चेट्याह श्रावकोद्वाहे, नृपायास्त्रादि सज्यते ॥ २२ ॥ मन्त्र्युच्छेदरुचिस्तच्च, ज्ञात्वा वररुचिः कविः । सुखादिकाप्रदानेन, डिम्भरूपाण्यपाठयत् ॥ २४ ॥ न वेत्ति लोको यदयं, शकडालः करिष्यति । व्यापाद्य नंदं तद्राज्ये, श्रीयकं स्थापयिष्यति ॥२५॥ पठतां डिम्भरूपाणां, सर्वत्रापीदृशं वचः । जनश्रुत्या समाकर्ण्य, नृपश्चित्ते व्यचिन्तयत् ॥ २६ ॥ बालका यच्च भाषन्ते, यच्च जल्पन्ति योषितः । उत्पादिकी च या भाषा, सा भवत्यन्यथा न हि ॥ २७ ॥ ध्यात्वेत्याप्तो नरो राज्ञा, प्रेषितो मंत्रिमन्दिरे । आगत्याख्यन्नृपमित्याभूषणास्त्रादि सज्यते ॥ २८ ॥ रुष्टोऽथ मंत्रिणे भूपः, प्रणामेऽभूत् पराङ्मुखः । मंत्री श्रीयकमेकान्ते, प्राह रुष्टो

नृपोऽधिकम् ॥ २९ ॥ ततः कुलक्षयो मा भूदिति त्वं मद्वचः कुरु । नमतो मम राजानं, वत्स! च्छेद्यं त्वया शिरः ॥ ३० ॥
प्रभोरभक्तो वध्यो नः, पिताऽपीति ततो वदेः । श्रीयकः प्राह तातेदृक्, म्लेच्छोऽपीच्छति कर्म्म किम् ? ॥ ३१ ॥ मन्त्याह पितृ-
हत्याया, मा भैषीर्वत्स ! यद्विषम् । मुखे तालपुटं कृत्वा, ततो नंस्याम्यहं नृपम् ॥ ३२ ॥ बोधितो जनकेनैवं, स्त्रीचक्रे च चकार
च । राज्ञाऽपि किमिदं चक्रे ?, स्वामिशत्रुर्हतोऽवदत् ॥ ३३ ॥ कृतौर्ध्वदेहिको वप्तुर्विशुद्धः श्रीयकस्ततः । विज्ञो विज्ञपयांचक्रे,
सर्वव्यापारदं नृपम् ॥ ३४ ॥ मज्ज्येष्ठः स्थूलभद्रोऽस्ति, कोशावेश्यानिकेतने । तमाकार्य नृपः कार्यमेतत्तस्मै जगाद च ॥ ३५ ॥
पर्यालोच्य विधास्यामि, स्थूलभद्रो वदन्नदः । राज्ञाऽऽलोचयितुं प्रैषि, सोऽशोकवनिकान्तरे ॥ ३६ ॥ सोऽध्यायच्च नियोगश्रीः,
शाकिनीवच्छलेक्षिणी । भोगे नरस्य कस्यापि, न निजा जातु जायते ॥ ३७ ॥ आत्मरक्षाकरं मंत्रं, मंत्री त्रिश्रदपि च्छलात् ।
विनाशितोऽनयाऽत्रार्थे, तात एव निदर्शनम् ॥ ३८ ॥ न शरीरं धनं क्षेत्रं, न कलत्राणि नो सुताः । तस्य चित्ते सुखाय स्युर्यः
स्यादस्या वशे नरः ॥ ३९ ॥ सनिकारामिमां हित्वा, योगश्रियमहं श्रये । यद्वशा साऽपि मुक्तिश्रीरनन्यश्रीमनोरथैः ॥ ४० ॥
इति ध्यात्वा च कृत्वा च, स लोचं पंचमुष्टिकम् । रजोहरणभृद्रत्नकम्बलप्रान्तवर्त्तिभिः ॥ ४१ ॥ प्रावृत्य कम्बलीरत्नं, सभां
गत्वाऽऽह भूपतिम् । आलोचितं मयेदं ते, धर्म्मलाभः प्रवर्द्धताम् ॥ ४२ ॥ पंचभिः कुलकम् ॥ निःसृतेऽस्मिन्नृपोऽध्यायत्, किं
कोशावेश्म यात्ययम् । क्षणं गवाक्षदत्ताक्षस्तमैक्षिष्ट क्षमापतिः॥४३॥कोशागृहव्यतिक्रान्तमेकान्तसमताश्रयं । वीक्ष्य यातं क्षमाकान्तं,
क्षमाकान्तः शिरोऽधुनात् ॥ ४४ ॥ श्रुतकेवलिसम्भूतविजयाचार्यसन्निधौ । व्रतं सामायिकोच्चारपूर्वकं स समाददे ॥ ४५ ॥ मुद्रा-
मथ महीनाथः, श्रीयकस्य करेऽकरोत् । स बन्धुस्नेहतः कोशासदने याति सर्वदा ॥ ४६ ॥ स्थूलभद्रवियोगार्त्तामन्यदा ताम-

श्रोचत । देव ! किं क्रियते सर्वमिदं वररुचिर्व्यधात् ॥ ४७ ॥ एतेन नाशितस्तात !, स्थूलभद्रः प्रवासितः । तद्वैरपारं गच्छामि, देव ! चेत् त्वं प्रसीदसि॥४८॥ कथं त्विति तया प्रोक्ते, श्रीयकः प्राह स द्विजः । त्वज्जामिकामुको मद्यं, पाय्यते यदि तद्वरम्॥४९॥ तयैतत् प्रतिपन्नं च, कारितं च जवादपि । नित्यं पिबत्ययं मद्यं, ज्ञापितं चेति मंत्रिणः ॥ ५० ॥ शकडालात्यये विप्रः, प्राविशद्राजसंसदि । स कवित्वगुणान्नित्यं, पूज्यते च सभाजनैः ॥ ५१ ॥ स्मरन्नृपोऽन्यदा मंत्रिगुणानां श्रीयकं रहः । जगाद शकडालं यत्र श्रीमालं(ला)विनेति नु ॥५२॥ कलितापि सभा सद्भिः, सभा मे विगतप्रभा । रहिता शकडालेन, शशिनेव निशीथिनी॥५३॥ नृपः साश्रोऽवदन्नित्थं, व्यज्ञपि श्रीयकेन सः । स्वामिन्! वररुचिश्चक्रे, मद्यपस्तद्धि तादृशम् ॥ ५४ ॥ राज्ञा प्रोक्तं पिबत्येष, किं मद्यं ? श्रीयकोऽवदत् । प्रगेऽग्रे देवपादानामदः प्रकटयिष्यति ॥ ५५ ॥ प्रभातेऽधिसभं मंत्रिगुप्तशिक्षितमालिकः । सर्वेषामञ्जमेकैकमदाद्वररुचेः पुनः ॥ ५६ ॥ उन्माद्यन्मदनफलक्षोदव्याप्तोदरं करे । सर्वेऽब्जं स्वं समाजघ्नुः, प्रशशंसुश्च सौरभम् ॥ ५७ ॥ युग्मम् ॥ द्विजोऽपि हि निजांभोजगंधं तच्चूर्णगर्भितम् । उच्छ्वासेनाग्रहीद्रात्रिपीतं मद्यं ववाम च ॥ ५८ ॥ सभाया निर्गतो लोकैर्धिक्कृतो हक्कितश्च सः । प्रायश्चित्ते पपौ तप्तं, त्रपु प्राप च पंचताम् ॥ ५९ ॥ श्रीयकः पितृवैरस्य, पारगामी चिरादथ । सचक्रे मंत्रिभिर्नाथप्रजार्थानर्थबान्धवः ॥ ६० ॥ स्थूलभद्रस्तु संभूताचार्यक्रममुपासयन् । अधीतस्तत्र सूत्रार्थौ, दुस्तपं तपते तपः ॥ ६१ ॥ वर्षास्वभिग्रहान्नित्थं, जगृहुर्यतयस्त्रयः । जोषिता स्मश्चतुर्मासीं, कायोत्सर्गजुषो वयम् ॥ ६२ ॥ एकः सिंहगुहाद्वारे, दृग्विषाहिबिलेऽपरः । तृतीयः कूपमण्डूकासने स्थास्याम इत्यलम्॥६३॥ तेषां विज्ञाय सामर्थ्यमनुज्ञां गुरवो ददुः । स्थूलभद्रोऽथ जग्राहाभिग्रहं दुर्ग्रहं परैः ॥६४॥ कोशावेश्याश्रये चित्रशालायां षड्रसाशितः । स्थाता वर्षाः क्षमं मत्वा, त्वज्ञासीत्तत्र तं गुरुः ॥६५॥

ततो नत्वाऽथ सर्वेऽपि, ययुः स्थानं यथोचितम् । कोशाभ्युत्थाय नाथस्त्वं, किं करोमीत्युवाच च ॥६६॥ स्थूलभद्रोऽवदद् धर्म्मलाभस्तेऽस्तु ममार्प्यताम् । चित्रशालां चतुर्मासीं, निवासायार्पयच्च सा ॥ ६७ ॥ तत्रास्थादेष कोशा तु, दध्यौ भग्नो व्रतादयम् । समेतो मामिति ध्यात्वा, षड्रसैस्तमभोजयत् ॥ ६८ ॥ ततः सा स्फारशृङ्गारसारा सारावभूषणा । स्थिरा स्थिराशयं तं तु, धर्म्मे (दृष्ट्वा) धर्म्मेच्छुरेव सा ॥ ६९ ॥ ननाम काममुत्सृज्य, भावपावनमानसा । निर्नष्टकामनाकोटीप्रवेशा प्राप्तपोतिका ॥ ७० ॥ सा नताङ्गी ततो भक्त्या, रराजास्य मुनेः पुरः । पतिता कुण्ठतां प्राप्य, स्मरास्त्राऽऽलिरिवावनौ ॥ ७१ ॥ स्थूलभद्राच्च मन्येऽन्यं, वेश्याचशमिहापरम् । गुरोर्धर्म्ममपि प्राप्यानीयास्यै यः समार्पयत् ॥ ७२ ॥ कामो विषयपश्चास्यः, कटाक्षो दृग्विषः फणी । कूपः स्त्रीसन्निधिस्तेन, तत्त्रयं तत्र यन्त्रितम्॥७३॥श्राविका सा न शिश्राय, नृपादिष्टात् परं नरम्। बभूव च विवेकाश्वमन्दुरा सुन्दरा क्रमात् ॥ ७४ ॥ निर्व्यूढाभिग्रहाश्चागुस्ते गुरून् यतयस्त्रयः । प्रोक्तास्तैः स्वागतं वोऽस्ति, सदा दुष्करकारकाः ! ॥७५॥ आयान्तं स्थूलभद्रं त्वभ्युत्थाय गुरुरालपत् । सात्त्विक ! स्वागतं ते दुष्करदुष्करकारक! ॥ ७६ ॥ सापत्रपास्त्रयोऽप्येते, मुनयोऽथ मिथोऽवदन् । आमंत्रणं गुरोरत्र, मन्त्रिपुत्रत्वकारणम् ॥ ७७ ॥ यद्येवं षड्रसाहारः, कृतदुष्करदुष्करः । प्रतिपत्स्यामहे वर्षांतरे तद्वयमीदृशम् ॥ ७८ ॥ अष्टमासीमतीयुस्तेऽथ गुरोः पुरतोऽग्रहीत् । प्रावृषि स्थूभद्राभिग्रहं सिंहगुहामुनिः ॥ ७९ ॥ तत्कार्याक्षममाचार्या, विचार्याथ तमभ्यधुः । अभिग्रहग्रहोऽयं ते, प्राग्वृत्तस्यापि निग्रहः ॥८०॥ इत्थं गुरुनिषिद्धोऽपि, तत्रागाद् वेश्यया पुनः । एष श्रीस्थूलभद्रेण, स्पर्धावानित्यलक्ष्यत ॥८१॥ कोशा तां षड्रसाहारैरभोजयित्वा स्वयं पुनः । पर्युपास्ते स्म वक्रेन्दूल्लासितस्मेरया गिरा ॥ ८२ ॥ स्थूलभद्रं स्मरोऽप्राप्य, जघानैतं तपस्विनम् । नरः करभमप्राप्य, दामयेद्रासभं गतः ॥ ८३ ॥ स्मरार्थमर्थयन्तं तं, सोचे

सा घनिनां वयम् । स प्राह मृगनेत्रेऽर्थः, क्व मे खरविषाणवत् ? ॥ ८४ ॥ निर्वेदयितुमेतं सा, प्राह यद्रत्नकम्बलम् । दत्ते नेपाल-
भूपालोऽपूर्वसाधोस्तमानय ॥ ८५ ॥ अकालेऽपि चचालायं, नेपालाय तपोधनः । पङ्के निमग्नहत् पङ्के, मज्जन् पङ्क्तिर्न कौतुकम्
॥ ८६ ॥ कृतार्थे चलिते साधौ, पथि चौरपतेः शुकः । जगाद लक्षमेतीति, वीक्षिते नास्ति किञ्चन ॥ ८७ ॥ यथार्थे कथिते
मुक्ते मुनौ पुनः प्राह, लक्षं यातीति कीरकः । व्यावृत्य पृष्टः सोऽप्याख्यद्वंशस्थं रत्नकम्बलम् ॥ ८८ ॥ यथार्थे कथिते मुक्तः,
कोशायै तं ददौ च सः । प्रणालपङ्के निःशङ्कमानसा साऽक्षिपच्च तम् ॥ ८९ ॥ मुनिः प्राह: महामूल्यः, किं पङ्केऽक्षेपि
कम्बलः? । सा प्राह स्वव्रतं मूढ !, पङ्के मज्जन्न शोचसि ॥ ९० ॥ सोऽथ तस्या गिरा बुद्धः, प्रोचे साध्वस्मि बोधितः । गुरुकल्पे!
गुरून्नत्वाऽऽलोचयेद्दुष्कृतं निजम् ॥९१॥ कोशा जगाद यच्चक्रे, मया ब्रह्मस्थयाऽपि वः । आशातना प्रबोधाय, क्षम्यतां सा क्षमा-
पते ! ॥ ९२ ॥ इच्छामीति वदन्नत्वा, गुरूणामन्तिकेऽतनोत् । तपांसि विविधान्येषु, विहितालोचनः पुनः ॥ ९३ ॥ दत्ता राज्ञाऽ-
न्यदा कोशा, रथिने साऽभजन्न तम् । स्थूलभद्रगुणैर्भद्रं, स्तुवन्ती तत्पुरः सदा॥९४॥ गृहोद्याने स्वविज्ञानं, स तस्यै शयनस्थितः ।
अदर्शयदिषुं न्यस्याम्रलुम्ब्यो मथता शरैः ॥९५॥ अनुपुङ्खार्पितैर्योऽधश्चकार करगोचरम् । वृन्तं छित्वाऽर्द्धचन्द्रेणाकृष्यैतां स्वकरेऽ-
करोत् ॥ ९६ ॥ युग्मम् ॥ कोशाऽथ सार्षपे राशौ, न्यस्य सूर्चीं सुमावृताम् । ननर्त्त न च विद्धाऽङ्गे, ध्रुवप्रसवसर्षपा ॥ ९७ ॥
रथी तुष्टोऽवदत्कोशां, कान्ते! किं ते ददे ? वद । साऽवदज्ज्जातिसिद्धे वाऽभ्याससिद्धे च नाद्भुतम् ॥९८॥ अण्डजाः पुष्करे यद्व-
त्तरन्ति च रमन्ति च । सुमेषु वर्त्तनं तद्वात्सिद्धं नो किन्तु तुष्टिकृत् ॥ ९९ ॥ स्वभ्यस्ते दुष्करं किं स्यादनभ्यस्ते हि दुष्करम् ।
यत्पुराभुक्तभोगोऽस्थात्, स्थूलभद्रोऽक्षतव्रतः ॥ १०० ॥ स्थूलभद्रं विनाऽन्यस्य, सर्वस्य भ्रम्यते मनः । सप्तधातोः फणिकेव,

स्त्रीसमासत्तिचिर्भिटात् ॥१०१॥ भोज्यं च षड्रसं पूर्वक्रीडिताऽहं च सन्निधौ । चित्रशालानिवासश्चैकैकं केन विसह्यते? ॥ १०२ ॥
स्तुत्वा श्रीस्थूलभद्रं तं, कः स्तुयादपरं नरम् । कश्चिन्निपीय पीयूषं, काञ्जिकं किं समीहते ? ॥ १०३ ॥ रथी प्राह त्वया कोऽयं,
स्थूलभद्रोऽनुवर्ण्यते । साऽवदन्नन्दभूनेतृमन्त्रींदुशकडालजः ॥ १०४ ॥ रथी प्राहास्य दासोऽस्मि, तादृशस्तादृशश्च यः । अथाय-
मनयाऽबोधि, कथयन्त्या जिनोदितम् ॥ १०५ ॥ तयाऽऽख्याते स्वानियमे, रथी चित्ते चमत्कृतः । भद्रधीः स्थूलभद्रं सोऽन्वगात्त-
त्कथितोऽधुना ॥ १०६ ॥ स्थूलभद्रोऽपि भगवान्, कुरुते विविधं तपः । शास्त्रविस्मृतिकृच्चाभूद्, दुर्भिक्षं द्वादशाब्दिकम् ॥१०७॥
वीतेऽस्मिन् मिलितः सङ्घः, पाटलीपुत्रपत्तने । एकादशाङ्गी सम्पूर्णा, जज्ञे पूर्वगतं न तु ॥ १०८ ॥ द्वौ मुनी प्राहिणोत्सङ्घ-
स्तद्विदे भद्रबाहवे । सोऽज्ञापयन्महाप्राणध्यान्यहं नागमक्षमः ॥ १०९ ॥ सङ्घादिष्टौ मुनी चान्यौ, गत्वा तं सूरिमूचतुः । संघादेशं
न यः कुर्याद्दण्डः कोऽस्य विधीयते ? ॥ ११० ॥ संघबाह्यः क्रियेतासौ, सूर्युक्ते तौ तमूचतुः । तर्हि तद्दण्डयोग्योऽसि, सूरिरूचेऽथ
शुद्धधीः ॥ १११ ॥ प्रसद्य सद्यः श्रीसंघः, प्रहिणोतु मुनीनिह । तेभ्योऽहं वाचनां दास्याम्येकां भिक्षात आगतः ॥११२॥ द्वितीयां
कालवेलायां, तृतीयां च बहिर्भुवि । तुर्यां विकालवेलायां, तिस्रश्चावश्यकक्षणे ॥ ११३ ॥ इत्थं श्रीसंघकार्यं च, मत्कार्यं च प्रसे-
त्स्यति । इत्यागत्योदिते ताभ्यां, सूरिवाक्ये समादिशत् ॥११४॥ श्रीसंघः स्थूलभद्रादि, प्रज्ञालं शतपञ्चकम् । तेषां च वाचनाः
सप्त, दिदेश श्रुतकेवली ॥ ११५ ॥ पंचभिः कुलकम् ॥ वाचनाल्पतया त्वन्ये, स्थूलभद्रं विना ययुः । स प्रोक्तः सूरिणा ध्यानं,
पूर्णप्रायमिवास्ति मे ॥ ११६ ॥ इत्युक्तः सुस्थिरः पूर्णध्यानतो भद्रबाहुतः । द्विवस्तूनानि पूर्वाणि, पपाठ दश स क्रमात् ॥११७॥
भगिन्यः स्थूलभद्रस्याभ्येत्य नत्वा गुरुं जगुः । क्व ज्येष्ठार्यो? गुरुस्त्वाख्यदंतोऽपवरकेऽस्ति सः ॥ ११८ ॥ स ता निरीक्ष्य हर्यक्ष-

रूपोऽस्थात् ताः पुनर्गुरुम् । प्रापुर्मत्वोपयोगेन, गुरुः प्राहास्ति नो हरिः ॥११९॥ गता ववन्दिरे स्थूलभद्रं यक्षा जगाद च । भगवन्! सार्धमस्माभिः, श्रीयकोऽप्याश्रितो व्रतम् ॥ १२० ॥ स तु तीव्रक्षुधः पर्युषणापर्वणि मद्गिरा । यामादिप्रत्याख्यानेनोपवासं कृतवानलम् ॥ १२१ ॥ रात्रौ दिवं गते तत्र, साधुहिंसोत्थखेदयुक् । संघेनावाचि नाघं ते, जिनाख्याते धृतिर्मम ॥ १२२ ॥ कायोत्सर्गे स्थिते संघे, सीमन्धरजिनान्तिके । निन्ये शासनदेव्याऽहं, निर्दोषा भाषिताऽर्हता ॥ १२३ ॥ चूलिकायुगलं स्वामिदत्तं संघस्य चार्पयम् । इत्युदित्वा ययुः साध्व्यः, स्वाश्रये सपरिच्छदाः ॥ १२४ ॥ वाचनार्थमथायातं, स्थूलभद्रं गुरुर्जगौ । न योग्योऽसीति स स्वागो, व्रतादानाद् व्यचिन्तयत् ॥१२५॥ अस्मृतौ तं गुरुः प्राहः, संघाज्ञां ( कृत्वाऽघं ) त्वं न मन्यसे । सोऽघं पुनः का कारणस ( स्मरणतः ) पच्छन्नोऽक्षमयद् गुरुम् ॥ १२६ ॥ सर्वथापि निषिद्धो यः, अह्वः संघमसज्जयत् । तदभ्यर्थनयाऽभ्येत्य, संघः सूरिमभाषत ॥ १२७ ॥ श्रुतकेवल्यथ प्राह, विकारोऽस्यापि यत्किल । तदन्ये विकरिष्यन्ति, तस्मादेष न शिष्यते ॥ १२८ ॥ संघेनोक्तः पुनः स्थूलभद्रमित्यन्वशाद् गुरुः । न त्वया शेषपूर्वाणां, कार्यं क्वापि प्रकाशनम् ॥ १२९ ॥ स्थूलभद्रस्ततः सर्वपूर्वभृत् सूरितायुतः । आगतः पाटलीपुत्रं, मित्रावासं च संघयुक् ॥ १३० ॥ तत्पृष्टा प्राह मित्रेष्टा, भर्ता यातो वणिज्यया । तद्गृहं च पुरा चारु, जीर्णशीर्णं तदाऽस्ति तु॥१३१॥ स्तम्भस्यैकस्य चाधस्तात्, पूर्वैरास्ते निधिः कृतः । तं च ज्ञानेन जानाति, स्थूलभद्रो गणाधिपः ॥ १३२ ॥ स ततस्तमितः स्तम्भं, हस्तं कृत्वा जगाद ताम् । समग्रस्यापि संघस्य, पश्यतः शृण्वतस्तथा ॥ १३३ ॥ इदमीदृक् च तत्तादृक्, पश्य कीदृगजायत? । इति मित्रगृहायातः, स्थूलभद्रस्तदाऽवदत् ॥१३४॥ सा च सर्वजनोऽन्यश्च, दध्यौ यन्नगवानयम् । जीर्णशीर्णगृहं वीक्ष्यानित्यतां कथयत्यलम् ॥ १३५ ॥ कतिथैस्तिथिभिस्तस्मिन्नायातेऽकथयच्च सा ।

आयातः स्थूलभद्रोऽभूद्, गृहे संघयुतस्तव ॥ १३६ ॥ स प्राह भणितं किञ्चिन्न किञ्चिदिति साऽवदत् । स्तम्भस्याभिमुखं हस्तं, दर्शयन्नित्ययं जगौ ॥ १३७ ॥ इदमीदृक् च तत्तादृक्, पश्य कीदृगजायत? । सुधीः स दध्यौ सद्बुद्धिचेष्टितं तस्य चेष्टितम् ॥१३८॥ इदमीदृग् निधिप्रायं, यत्तादृग् भ्रमणं व्यधात् । पश्य कीदृगभून्मन्ये, धनं स्तम्भेऽस्ति किंचन ॥ १३९ ॥ ध्यात्वेति स खनन्नाप, स्तम्भाधो रत्नसम्भृतम् निधिं सत्पात्रदानाद्यैः, सफलं विदधे च तम् ॥१४०॥ इत्थं न स्थूलभद्रेण, सोढो ज्ञानपरीषहः । तथा तथाऽपरैर्नैव, विधेयं शुद्धसूरिभिः ॥१४१॥ अहो मोहस्य माहात्म्यं, श्रुतकेवलिनोऽपि यत् । दृष्टान्तो व्यतिरेकेणाजनि ज्ञानपरीषहे ॥ १४२ ॥ अन्वयेनैष दृष्टान्तः, सोढव्ये स्त्रीपरीषहे । व्यतिरेकेण दृष्टान्तः, पुनर्ज्ञानपरीषहे ॥ १४२ ॥

अथ सम्यक्त्वपरीषहः, वत्सेष्वतुच्छशक्त्याढ्यः, आर्याषाढो गणाधिपः । बहुश्रुतोऽस्ति भव्यानामुद्यतः प्रतिबोधने ॥ १ ॥ यो यः कालं करोत्यत्र, तं तं निर्यापयत्ययम् । वक्ति चैनं सुपर्वत्वे, दर्शनं देयमेव मे॥२॥ इत्थं निर्यापिताः प्राज्या, दिवः कश्चित्तु नागमत् । तैरन्यदादरादिष्टः, स्वशिष्योऽप्येवमर्थितः ॥ ३ ॥ सूरिस्तत्राप्यनायाते, दध्यौ क्वास्ति भवः परः ? । यत्कोऽपि नागतस्तस्माद्भोगेभ्यो वञ्चितो मुधा ॥४॥ इति मिथ्यात्वमापन्नो, लिंगमात्रव्रतोऽभवत् । त्यक्त्वा गच्छं व्रतं त्यक्तुमनाः स प्रचचाल च ॥ ५ ॥ शिष्यदेवोऽवधेर्मत्वा, तान् बोधयितुमागतः । चक्रे संवसथे दिव्यनटप्रेक्षाविकुर्वणम् ॥ ६ ॥ तत्प्रेक्षमाणः षण्मासीं, गुरुस्तृष्णां क्षुधं श्रमम् । देवानुभावान्नाज्ञासीदथ तां संजहार सः ॥ ७ ॥ अटव्यां गच्छतोऽथास्य, परीक्षार्थं सुरो व्यधात् । षण्णां जीवनिकायानां, नाम्ना बालानलंकृतान् ॥८॥ तेष्वाद्यं पृथ्वीकायसंज्ञं प्रेक्ष्य व्यचिन्तयत् । गृहीत्वाऽऽभरणान्यस्य, भुंजे भोगान् यथारुचि ॥ ९ ॥ स याचितोऽप्यलङ्कारमददद्विधृतो गले । सोऽवदच्छरणायातमटव्यां पाहि मां प्रभो ! ॥ १० ॥ विधुरं योऽवल-

न्वेतोद्धरेदापद्गतं तथा । रक्षेच्च शरणायातं, त्रिभिस्तैर्भूषिता हि भूः ॥ ११ ॥ तन्मुञ्च मामिति प्रोक्तः, स गलावलनोन्मुखः । दारकेण पुनः प्रोचे, शृणु त्वं मत्कथां ततः ॥ १२ ॥ यथा ज्ञातं पुनः कुर्याः, शृणोमीतीतरोदिते । दारकः कथयामास, कथामवितथामिति ॥ १३ ॥ कुलालः कश्चिदाक्रान्तस्तट्याऽधस्तात् खनन्मृदम् । किमेतदिति लोकेन, पृष्टः ? प्रोचे च दीनवाक् ॥ १४ ॥ ददे यया बलिं भिक्षां, स्वजनान् पोषये यया । सा मामाक्रमते पृथ्वी, जातं शरणतो भयम् ॥ १५ ॥ शरणार्थिनि मय्येवं, प्रहरस्यथ सूरिणा । बालातिपण्डितोऽसीति, वदताऽग्राहि भूषणम् ॥ १६ ॥ प्रतिग्रहे च तत्क्षिप्तमथाप्कायो द्वितीयकः । भयार्त्तः कथयत्यस्य, कथामित्थं यथातथाम् ॥ १७ ॥ कश्चित्तालाचरो गाथापाठकः कथकस्तथा । जाह्नवीमुत्तरन् दूरं, पयःपूरेण नीयते ॥१८॥ तं निरीक्ष्यावदल्लोकश्चित्राख्यानं बहुश्रुतम् । स्वर्वापी वहते त्वां तत्, पठ किञ्चित् सुभाषितम् ॥ १९ ॥ स प्राह येन बीजानां, जनि जीवन्ति कर्षकाः । तस्य मध्ये विपद्येऽहं, जातं शरणतो भयम् ॥ २० ॥ तस्यापि भूषणान्येष, जग्राहाथ तृतीयकः । तेजस्कायाख्यया बाल, आख्यात्याख्यानिकामिति ॥ २१ ॥ अग्निहोतृकृतः कस्याप्यागारं दहनो दहन् । लोकपृष्टः स चोवाच, तालमाहत्य पाणिना ॥ २२ ॥ दिवा रात्रौ च यमहं, तर्पये मधुसर्प्पिषा । तेन दग्धं ममागारं, जातं शरणतो भयम् ॥२३॥ तस्यापि हि गृहीतेषु, भूषणेषु चतुर्थकः । वायुकायाभिधो बालोऽकथयच्च कथामिति ॥ २४ ॥ युवा कोऽपि महाप्राणः, प्रत्यंगं व्यानपीडितः । वृद्धवत्कंप्रगात्रः सन्, पृष्टो मित्रेण केनचित् ॥ २५ ॥ प्राक्त्वं वेगगतौ शक्तोऽधुना यष्टिकरोऽसि यत् । शनैः शनैर्व्रजसि यत्, को व्याधिस्तव मित्र ! तत् ? ॥ २६ ॥ स प्रोवाच निदाघेऽपि, यः सुखो वाति मारुतः । तेन मे भज्यते गात्रं, जातं शरणतो भयम् ॥२७॥ भूषणेषु गृहीतेषु, ततोऽप्यागाच्च पञ्चमः । कथामाख्याति सोऽप्येवं, सूरिसम्बोधनाविधौ ॥ २८ ॥ एकत्र वृक्षे काप्यस्ति, नीडं

नीडनिवासिनाम् । तेषां च तत्र जातानि, शिशुरूपाणि कालतः ॥ २९ ॥ अथोद्गता लता वृक्षान्तिके वेष्टनि तं च सा । उपरिष्टा-द्विलमाऽथ, बभूव फलभाजनम् ॥ ३० ॥ ततस्तदनुसारेण, तत्रारूढो भुजंगमः । हेलया निशि रूपाणि, भक्षयामास पक्षिणाम् ॥ ३१ ॥ तैरप्युक्तमथो पूर्वं, शाखिन्यध्युषितं सुखम् । मूलादभ्युत्थिता वल्ली, जातं शरणतो भयम् ॥ ३२ ॥ तस्यापि हि गृहीतेषु, भूषणेष्वघृणावता । त्रसकायाभिधः षष्ठस्तथैवाकथयत् कथाम् ॥ ३३ ॥ एकस्मिन्नगरे क्वापि, परचक्रेण रोधिते । मातङ्गास्तद्बहिर्भागाः, प्रविशन्ति पुरान्तरे ॥ ३४ ॥ अन्तर्निवासिभिर्लोकैर्निर्वास्यन्ते च ते बहिः । बहिश्च परचक्रेण, गृह्यते कश्चिदाह च ॥३५॥ अन्तर्निवासिनः क्षुब्धाः, प्रेरयन्ति बहिर्नरान् । दिशं भजत मातङ्गा, जातं शरणतो भयम् ॥३६॥ तथाऽप्यमुञ्चत्याचार्ये, स आख्यात्यपरां कथाम् । पुरे क्वापि नृपः स्तेनः, पुरोधाः प्रणिधिः पुनः ॥ ३७ ॥ तावुभावपि सर्वस्वं, हरतः परतः सदा । परिज्ञाय जनस्तच्च, पठति स्मेति सस्मितः ॥ ३८ ॥ यत्र राजा स्वयं स्तेनो, हेरिकश्च पुरोहितः । वनं भजत हे पौरा !, जातं शरणतो भयम् ॥ ३९ ॥ तथाऽप्यमुच्यमानोऽयं, कथयत्यपरां कथाम् । वर्णज्येष्ठेन केनापि, खानितं प्रवरं सरः ॥ ४० ॥ पालौ देवकुलं तस्यारामस्तेन च रोपितः । प्रवर्तितस्ततो यज्ञः, पशुमारणलक्षणः ॥ ४१ ॥ इति प्रवृत्तिं तां कृत्वा, स द्विजन्माऽन्यजन्मनि । बभूव च्छगलत्वेनार्त्तध्यानवशतो मृतः ॥ ४२ ॥ तथैव तनयास्तस्य, पशुघातमखं सदा । सरस्यां तत्र कुर्वन्ति, गुर्वन्तिकविलोकिताम् (गुर्वाजकं विलोकता) ॥ ४३ ॥ चरन्तं तं पितृचरं, तेऽपश्यन् पशुमन्यदा । मखं चिकीर्षवो मूल्यं, दत्त्वा नैपुर्गृहे च तम् ॥ ४४ ॥ जातिस्मरः सरस्तीरे, नीयमानो मखावनौ । छगलः स गलन्यस्तरज्जुर्बेबेवचोऽवदत् ॥ ४५ ॥ अयं चानागतश्चापि, गतौ मम भवाविति । द्वौ द्वाविति वदत्येष, मन्ये प्राकृतभाषया ॥ ४६ ॥ बाढस्वरेण शोचन् स, ज्ञानिना मुनिना श्रुतः । तस्य तस्य सुतानां च, प्रबोधायेत्य-

मापत ॥ ४७ ॥ स्वयं संरोपिता वृक्षाः, खानितं च स्वयं सरः। स्वयं प्रवर्तितो यज्ञः, किं वेवे वस्त ! भापसे ? ॥ ४८ ॥ श्रुत्वेति मंश्रितो जोपमेप मेपः सपद्यपि। द्विजेन च मुनिः पृष्टः, किमयं मौनमाश्रितः ? ॥ ४९ ॥ तमुवाच मुनिस्तातस्तवैष प्रत्ययोऽत्र कः ?। द्विजेनोक्ते मुनिः प्राह, कथयिष्यत्ययं स्वयम् ॥ ५० ॥ अनेन भवता चापि, न्यस्तो योऽस्ति निधिर्गृहे। पृष्टस्तमेष वस्तस्ते, पदाभ्यां दर्शयिष्यति ॥५१॥ द्विजः सोऽथ पितृचरं, पशुं दर्शितसेवधिम्। अमुंचत् स मुनेर्भक्तं, प्रत्याचक्ष्य दिवं ययौ ॥ ५२ ॥ इत्यारामसरोयज्ञपशुघातादि कुर्वतः। पशुत्वे शरणं तस्याशरणं समजायत ॥ ५३ ॥ अयेऽतिपण्डितोऽसीति, स ब्रुवन् श्रमणब्रुवः। कृकाटिकां मोटयितुमारेभे सोऽथ तं जगौ ॥ ५४ ॥ बालवृद्धान्धपंगुस्त्रीमुनीनां श्रमणाश्रिताम्। दीनानां च वधो भूरिपापव्यापद्विधायकः ॥ ५५ ॥ तं बालमतिवाचालं, वदन्निति निहत्य तम्। आदाय भूषणान्यस्याप्यन्यतः सोऽचलच्चलः ॥ ५६ ॥ दध्यौ देवोऽस्य चरणपरिणामो गतो ध्रुवम्। तत्परीक्षेऽधुना सम्यग्दर्शनं नास्ति वाऽस्ति वा ? ॥ ५७ ॥ ध्यात्वेति गुर्विणीं साध्वीमसाध्वीमयमादधौ। भूषितां मंडितां चापि, वीक्ष्य तां सोऽब्रवीदिति ॥ ५८ ॥ सर्वांगभूषितेऽशीके, धूपिते पापरूपिते। जैनमालिन्यकवित्वं ( कारित्वे ? ) दुष्टशैक्ष्याऽऽगता कुतः ? ॥ ५९ ॥ सोचे सर्षपमात्राणि, पराच्छिद्राणि वीक्षसे। आत्मनो बिल्वमात्राणि, पश्यन्नपि न पश्यसि ॥ ६० ॥ श्रमणः संयतो ब्रह्मचारी तुल्याश्मकांचनः। वैहारिकोऽसि ज्येष्ठार्य !, तव किन्तु पतद्ग्रहे ? ॥ ६१ ॥ इत्युक्तः स तया ह्रीणो, याति यावत् किलाग्रतः। तावद् वैक्रियमागच्छत्, कटकं वीक्षते स्म च ॥ ६२ ॥ तद् दूरेण व्रजन् राज्ञो, यतिः सोऽभिमुखोऽभवत्। द्वीपादुत्तीर्य च नतः, प्रोक्तश्चाद्य सुमंगलम् ॥ ६३ ॥ अहो मे भागधेयानि, यद् दृष्टोऽसि मुनीश्वर !। ततः प्राशुकपाथेयग्रहेणानुगृहाण माम् ॥६४॥ स नैवेच्छति वक्त्यन्यं, नाद्य पारणकं

मम । पश्यत्वाभरणान्येप, भाजनस्थानि मा किल ॥ ६५ ॥ बलादपि नृदेवेशस्तत्पतद्ग्रहमग्रहीत् । अपश्यत्तत्र पुत्राणां, सर्वाण्याभरणान्यथ ॥ ६६ ॥ कुपितो भ्रूकुटिं कृत्वा, प्रोवाचानार्यकार्यकृत् । हे क्षतव्रत मे पुत्राः, कुपात्र ! निहतास्त्वया ॥ ६७ ॥ तन्नामाभरणान्येतान्यतस्त्वं कुत्र यास्यसि ? । कांदिशीको न किंचिच्च, यावज्जल्पत्यनर्हधीः॥६८॥ तावद्देवः स संहृत्य, स्वमायामखिलामपि । प्रकटीभूय च प्राह, तं सम्बोधनपूर्वकम् ॥ ६९ ॥ असौ न युज्यते तत्रभवतां भवतान्तिदः । एवंविधः परीणामः, शुद्धसिद्धान्तधारिणाम्॥७०॥ मम चागमनं नाभूत्, स्वर्लोके स्वर्गिणो यतः । गतं कालं न जानन्ति, प्रमोदभरनिर्भराः॥७१॥दिव्येन प्रेक्षणीयस्य, क्षणेनाक्षिप्तमानसः । ऊर्ध्वस्थानेन पण्मासान्, स्थितो यद्भगवानपि ॥७२॥अन्यच्च भगवन्तोऽपि, स्वयमेव हि जायते (जायन्ते स्वयमेव हि)। संक्रान्तदिव्यप्रेमाणो, विषयासक्तमानसाः॥७३॥ असमाप्तस्वकर्त्तव्या,अनधीननृकार्यकाः । नृलोकमशुभं नैव, यदायान्ति सुधाशनाः ॥ ७४ ॥ युग्मम् ॥ श्रुत्वेत्याचार्यवर्योऽयमार्यापाढो विरागवान् । स्वंनिन्दितुं समारेभे, मारेभेण हतो हृदि ॥ ७५ ॥ हृतं वृत्तं हृतं ज्ञानं, हतं धैर्यं हता धृतिः । हतः पुरुषकारस्ते, हता निर्लज्जता तव ॥ ७६ ॥ हतं च तव धृष्टत्वं, दुष्टचेष्टितचेष्टित! । ज्ञातेऽपि जिनवाक्ये यदित्थं दुश्चेष्ट ! चेष्टसे ॥७७॥ युग्मम्॥ किं रे जीव ! त्रिदोषी त्वमथ धत्तूरितोऽसि किम् ? किंवाऽभव्यसमानोऽसि, यदेवं भ्रष्टभावनः ॥ ७८ ॥ जानन्नपि तथा भ्रष्टं, लघूभूतो जनेऽखिले । सम्प्रत्यपि तपःकर्म्म, कर्म्मक्षयकरं कुरु ॥ ७९ ॥ ध्यात्वेत्यूचे तवेच्छामोऽनुशिष्टिं सुष्ठु शिक्षणम् । स देवमभिनन्द्येति, सूरिः स्वस्थानमागमत् ॥ ८० ॥ नत्वा देवोऽथ तं भक्त्या, देवलोकं गतस्ततः । आलोचितप्रतिक्रान्तः, सूरिर्विहरतेऽन्यतः ॥ ८१ ॥ नाधिसोढो यथा तेन, प्राग्दर्शनपरीषहः । न तथा साधुभिः कार्यं, सहनीयस्तु सर्वदा ॥८२॥ ज्ञानाज्ञाने ज्ञानावरणे लाभोऽन्तरायमभिसरति । दर्शनमोहे दर्शन-

परीषहो भवति विज्ञेयः, ॥ १ ॥ आक्रोशारतिनारीनैषेधिक्योऽप्यचेलतायाच्ञाः । सत्कारपुरस्कारश्चरित्रमोहे त्विमे सप्त ॥ २ ॥ वेद्ये पंच क्षुधाद्याः स्युः, शय्या चर्या मलो वधः । तृणस्पर्शश्च रोगश्चैकादशैतेऽत्र कर्मणि ॥ ३ ॥

अथ गाथाचतुर्थपादार्थः 'तहेव उवसग्ग दिव्वाइं'ति तथैवेति पूर्वापेक्षया, न केवलं परीषहाः सह्याः, उपसर्गा अपि दिव्यादयः सह्याः, ते च चतुर्द्धा-दैवतमानुषतैरश्चाध्यात्मिकभेदात्, तत्र दैवतमानुषोपसर्गेषु भगवान् वीर एवोदाहरणं, आध्यात्मिके च सनत्कुमारचक्रिमुनिः, तैरश्चोपसर्गे तु चिलातीपुत्रदृष्टान्तः, तथाहि-क्षितिप्रतिष्ठेऽर्हन्निंदां, यज्ञे देवद्विजोऽतनोत् । जितः शिष्यो भवेज्जेतुः, प्रतिज्ञां त्विति कुर्वता ॥१॥ क्षुल्लकेन स केनापि, वादे जित्वा व्रतीकृतः । उक्तः शासनदेव्या च, ज्ञानश्रद्धानवानभूत् ॥ २ ॥ युग्मम् ॥ वस्त्रांगयोर्मलं निंदन्, स व्रतं समलं व्यधात् । तत्प्रिया त्वत्र नामुंचद्, रागं दृगिव सव्यथा ॥ ३ ॥ कार्मणं पारणेऽदात्सा, तद्वशा तद्वशार्थिनी । हन्ति रक्ता विरक्ता वांगना शृङ्गिकवल्लिवत् ॥४॥ स तेन क्षीयमाणांगो, विपद्य त्रिदशोऽभवत् । तद्दुःखात्तद्व्रताऽनालोचना सापि गता दिवम् ॥ ५ ॥ जीवोऽथ यज्ञदत्तस्य, च्युत्वा राजगृहे पुरे । सुतश्चिलात्याः सार्थेशधनदास्यास्ततोऽजनि ॥ ६ ॥ यज्ञदेवप्रियाजीवश्च्युत्वा पंचांगजानुजा । भद्राया धनगेहिन्याः, सुंसुमेति सुताऽभवत् ॥ ७ ॥ सुतायास्तं च दासेरं, वोढारं स व्यधाद्धनः । अन्यायिनं परिज्ञाय, गेहात्तं निरवासत् ॥ ८ ॥ गतः सिंहगुहां पल्लीं, तत्पल्लीशं च संश्रितः । पल्लीशे नामशेषे स, पल्लीशस्तस्करैः कृतः ॥ ९ ॥ मायद्रजगतिः सिंहमध्या पंचेषुचौरभृत् । चित्ततो नोत्तरत्यस्याटवी मा सुंसुमापि च ॥ १० ॥ स स्वानाह धनो नाम, धनी राजगृहे पुरे । सुजातरूपा तस्यास्ति, श्रीश्च पुत्री च सुंसुमा ॥ ११ ॥ श्रीरस्तु भवतां सर्वा, तदीया सुंसुमा तु मे । व्यवस्थाप्येति ते पेतुरर्द्धरात्रे धनालये ॥ १२ ॥ समं च पंचभिः पुत्रैर्धने संकुच्य

आहारक्षान् धनोऽर्थो वः, पुत्री मे व्याहराविधौ । तैः समं
तस्थुषि । आत्तवित्तैः समं चौरैः, सोऽगादादाय सुंसुमाम् ॥ १३ ॥ नेशुस्तल्लोप्त्रमादाय,व्यावृत्तं पुररक्षकैः
सायुधैः पुत्रैः, पंचभिश्चाचलद्धनः॥१४॥ तीक्ष्यानुपदमायातांस्तान् स्तेनास्त्यक्तलोप्त्रकाः । धनेऽच्छिनत् समी-
॥ १५ ॥ चैलातेयो वहन् कन्यामत्राणः प्राविशद्वनम् । तामानेतुं धनं तं चान्वागात् ससुतपंचकः ॥ १६ ॥ दिशं यमसमोऽगमत् ।
पस्थे, स पापः सुंसुमाशिरः । प्रस्थितस्तद्वहंश्चाभादुद्गतोरुपदामिव ॥ १७ ॥ पश्यन् स तन्मुखं याम्यं, विधिं
धनः पुत्र्याः सपुत्रोऽपि, दृग्भिरेव जलं ददौ ॥ १८ ॥ श्रमशोकार्कतापक्षुत्तृष्णापंचहुताशनीम् । स सहन् दुःसहां निन्दन्, पापकाष्ठां
स्वगृहमागमत्॥१९॥ समचित्तः स वैराग्यात्, श्रीमहावीरसन्निधौ । धनस्तपोधनो भूत्वा, तपस्तप्त्वा दिवं ययौ ॥२०॥ मद्यप-
गतकाष्ठामटवीमपरो व्रजन् । सौसुमं हस्तविन्यस्तं, मस्तकं गतकन्धरम् ( सास्रकं धरन् )॥२१॥ कायोत्सर्गस्थितं वीक्ष्य, मुनिं क्रूर-
वद्वचः (पादपवद् ध्रुवं) । ऊचे कथय धर्म्मं मे, नो चेच्छेत्ताऽस्मि ते शिरः ॥ २२ ॥ युग्मम् ॥ बोधयोग्यं मुनिर्मत्वोवाच त शमः
मप्यदः । कार्यः शमो विवेकश्च, संवरश्च मुमुक्षुणा ॥ २३ ॥ गते मुनौ पदत्रय्याः, सोऽर्थमित्थं व्यभावयत् । क्रोधशान्त्या प्रकीर्त्तितः
शस्त्रं, क्रोधमूलं त्यजामि तत् ॥ २४ ॥ विवेको हेयहानेन, हेयं च स्त्रीशिरो ह्यदः । यः सर्वेन्द्रियसंकोचः, संवरः स अस्रग-
॥ २५ ॥ ध्यात्वैवं हृदि हित्वा च, सुंसुमायां मनः शिवः । कायोत्सर्गस्थितो ध्यायंश्चिलातिस्तत्पदत्रयम् ॥ २६ ॥ पीलिकाभिस्त-
न्धाच्च तद्गात्रे, प्रविष्टाः कीटिकाः पदैः । तत्कर्म्मेव शिरोरूढं, चखादुर्मध्यगाः पलम् ॥ २७ ॥ पीलिकाभिः प्रति ।
स्याङ्क्षांत्तितउकृतात् । चित्रं निष्कम्पतोऽप्याशु, यत्पपात वही रजः ॥ २८ ॥ तथापि स्थिरचित्तोऽयमद्विष्टः कीटिकाः
सार्द्धाहोरात्रयुग्मेन, गीर्वाणपदमासदत् ॥ २९ ॥ इति षष्ठगाथार्थः ॥ अथ सप्तमगाथया प्रव्रज्यास्वरूपं कथयति—

लद्धावलद्धवित्ती सीलंगाणं च तह सहस्साइं । अट्ठारसेव य सयं वोढव्वा आणुपुव्वीए ॥ ७ ॥ (९)

लब्धं चापलब्धं च लब्धापलब्धे ताभ्यां वृत्तिः-प्राणधारणं यस्य स लब्धापलब्धवृत्तिः, साधुर्भवतीति शेषः, यदुक्तं-"लभ्यते लभ्यते साधु, साधु चैव न लभ्यते । अलब्धे तपसो वृद्धिर्लब्धे तु देहधारणा ॥१॥" तथा शीलांगानां सहस्राणि अष्टादश वोढव्यान्येव आनुपूर्व्या, क्रमेणेत्यर्थः, स चायं क्रमः-क्षान्त्यादिधर्म्मदशकं दशभिः पृथ्व्याद्यजीवपर्यन्तैः । गुणितं जायेत शतं पञ्चगुणं पञ्चभिः करणैः ॥१॥ अथ च सहस्रद्वितयं. संज्ञाभिश्चतसृभिस्ततः षट् ते । योगत्रिकेण ते षट् [सहस्राः,] वधघातानुमतिभिरष्टदश ॥२॥ एतत्संवादि गाथाचतुष्कम्-न हणेइ सयं साहू मणसा आहारसन्नपरिहीणो । सोइंदियसंवरणो पुढविजिए खंतिसंपन्नो ॥१॥ खंती य मद्दवज्जव मुत्ती तव संजमे य बोद्धव्वे । सच्चं सोयं आकिंचणं च बंभं च जइधम्मो ॥ २ ॥ इत्येतत्संवरेण अष्टादश शीलांगसहस्राणि साधुना दुर्वहानीति गाथार्थः ।—इत्थं पञ्चमहाव्रतान्यरजनीभोज्यं ममत्वोज्झनं, निर्दोषाशनमातृकाष्टकतपोद्रव्यादिकाभिग्रहाः । मासादिप्रतिमाः कचोद्धृतिमहीस्वापोपसर्गक्षमाः, शीलांगोद्वहनं परीषहपरिष्वंगश्च तुर्ये गतम् ॥ १ ॥ इत्यस्यां विवृतौ श्रीमत्प्रद्युम्नस्य कवेः कृतौ । प्रव्रज्यायाः स्वरूपेऽदस्तुर्यं द्वारमपूरयत् ॥ १ ॥

अथ पञ्चमं द्वारं प्रव्रज्यादुष्करत्वं पञ्चभिर्गाथाभिर्नवभिरुपमानैः प्ररूपयति, तद्यथा—

तरियव्वो य समुद्दो बाहाहिं इमो महल्लकल्लोलो । नीसायवालुयाए चावेयव्वो सया कवलो ॥ (१०) ॥

चंकमियव्वं निसियग्गखग्गधाराहिं अप्पमत्तेणं । पायव्वा य सहेलं हुयवहजालावली सययं ॥ ९ ॥ (११)

गंगा पडिसोएणं तोलियव्वो तुलाइ सुरसेलो । जइयव्वं तह एगागिणावि भीमारिदुट्ठबलं ॥ १० ॥ (१२)

राहावेहविणिम्मियचक्कट्ठियलक्खमग्गपुत्तलिया । विंधेयव्वाऽवस्सं उवसग्गपरीसहे जेउं ॥ ११ ॥ (१३)
तथा,-तिहुयणजयप्पडागा अगहियपुव्वा तहेव गहियव्वा । इय एवमाइ साहूण दुक्करा होइ पव्वज्जा ॥१२॥(१४)
अयं प्रव्रज्याविधिः समुद्रः महाकल्लोलसंकुलो बाहुभ्यां तरणीयः, यथा स तरीतुं सुदुष्करस्तथा प्रव्रज्याविधिरपि, तथा निःस्वाद-वालुकायाः कवलः सदा चर्वणीयः, यथा स सुदुष्करस्तथा प्रव्रज्याविधिरिति गाथार्थः ॥ तथा—चंक्रमितव्यं-अतिशयेन चलनीयं, क ?-निसिताग्रतीक्ष्णखड्गधारायां, कथंभूतेन ?— अप्रमत्तेन साधुनेति गम्यम्, पातव्या च सहेलं-सलीलं हुतवहज्वालावली सततं, यथा निसिताऽसिधाराचंक्रमणं ज्वलनज्वालामालापानं च दुष्करं तथा प्रव्रज्याऽपीति गाथार्थः ॥ गंगा प्रतिश्रोतसा तार्येति शेषः, तोलनीयस्तुलया मेरुः, जेतव्यं तथा एकाकिना-असहायेन भीमारिदुष्टबलं, यथा एतानि त्रीणि दुष्कराणि तथा प्रव्रज्याविधिरपीति गाथार्थः ॥ राधावेधार्थं विनिर्मिता चासौ लक्ष्मार्गपुत्रिका च वेध्या अवश्यं-असंशयं उपसर्गपरीषहान् पूर्वोक्तान् जित्वा-अभिभूय । अत्रार्थे सुरेन्द्रदत्तो बहिरंगोऽप्युदाहरणम्, नृत्वदुर्लभताप्रस्तावे दशदृष्टान्तान्तरे दृष्टान्तः यः पूर्वमुत्क्षिप्तः स साम्प्रतमत्र प्रस्तावे भण्यते, तथाहि-इन्द्रदत्ताभिधो भूपोऽभूत् पुरेन्द्रपुरे पुरे । तस्य द्वाविंशतिः पुत्राः, सन्ति देवीषु भूरिषु ॥१॥ अस्ति तस्य नरेन्द्रस्य, पत्नी सचिवपुत्र्यपि । पाणिग्रहक्षणे तेन, दृष्टा सा नान्यदा पुनः ॥ २ ॥ एकदा तामृतुस्नातामपश्यत्कश्यपीपतिः । अपृच्छच्च समीपस्थं, क्वाऽस्थं कस्येयमंगना ? ॥ ॥३॥ सोऽवदद्देव ! देवीयं, तवैवामात्यनन्दना । तया सीमन्धरोऽधीशो, निशामेकामुवास च ॥४॥साऽथ सम्भूतगर्भाऽऽख्यत्, ज्ञात्वा प्र(मंत्रिणं)मदर्हतुताम् । सोऽभिज्ञानकृते भूपोल्लापाद्यं पत्रकेऽलिखत्॥५॥पित्रा प्रपाल्यमाना सा, सूते स्म समये सुतम् । चत्वारि दासरूपाणि,तत्र जातानि चाहनि ॥६॥ मातामहो महामात्यो, द्वादशाहे विधानतः। सुरेन्द्रदत्त

इत्याग्र्यां, दाहड्रस्य प्रदत्तवान् ॥ ७ ॥ अग्निस्तु पर्वतश्चैव, बहली सागरोऽपि च । चतुर्णां दासरूपाणामिति नामानि जज्ञिरे॥८॥ तं चाष्टवार्षिकं मन्त्री, कलाचार्यमुपानयत् । सवेलं ग्राहयामास, क्रमाद् द्वासप्ततिं कलाः ॥ ९ ॥ कलाग्रहणकाले तं, करक्रममिवाग्रहीत् । कर्पन्ति दासरूपाणि, पातयन्ति मुहुर्मुहुः ॥ १० ॥ एकतानमनास्तानि, तृणवद्गणयन्नयम् । सुविचार्य कलाचार्यादाददे सकलाः कलाः ॥ ११ ॥ ये च द्वाविंशति सन्ति ( दासी ) सुताः सर्वे सहैव तु, । उपाध्यायं च तं चातिखलीकुर्वन्ति ते खलाः ॥ १२ ॥ ग्रामणाः कलाजालं, कलाचार्यं शपंति ते । यष्टिभिर्मुष्टिभिर्वापि, प्रत्युत ताडयंति च ॥१३॥ यदि तांश्च कलाचार्यः, कदाचिदपि ताडयेत् । ततो निजनिजांवानां, कथयन्ति सगद्गदम् ॥ १४ ॥ तन्मातरः कलाचार्यं, वदन्त्याहंसि किं सुतान्?। यतो न सुलभाः पुत्रास्तेन ते नैव शिक्षिताः ॥ १५ ॥ इतश्च मथुरापुर्यां, जितशत्रुर्नरेश्वरः । तस्यास्ति निर्वृतिर्नाम, दुहिता महिता सताम् ॥ १६ ॥ तां च प्राप्तवरां प्रेक्ष्य, जगाद जगतांपतिः । यस्तुभ्यं रोचते भर्ता, वत्से ! वृणु तमिच्छया ॥ १६ ॥ सोचे विध्यति राधां यः, स मे भर्त्ता भवत्विति । राज्यं तस्मै च दातव्यं, तातेनातः परं हि किम् ? ॥ १७ ॥ बहुपुत्रं निशम्येन्द्रदत्तमिन्द्रपुरे पुरे । सा प्राप्य पितुरादेशं, सामग्रीसहिताऽगमत् ॥ १८ ॥ आत्मानमन्यभूपेभ्यः, प्रवरं मानयन्नयम् । बहुपुत्रतया राज्ञो, दूतैराकारयत् परान् ॥ १९ ॥ महाविभूत्या भूपेषु, समायातेषु तेषु तु । पुरमिन्द्रपुराधीश, उत्पताकमकारयत् ॥ २० ॥ बहिः पुरस्य वैपुल्यं, विपुलाया विलोकयन् । मण्डपं कारयांचक्रेऽतुच्छच्छायसमुच्छ्रितम् ॥ २१ ॥ उपर्युपरि चक्रं च, चक्राण्यष्टाक्ष एकके । न्यस्य पाञ्चालिका तेषामुपरि न्यासि चोर्ध्वगा ॥ २२ ॥ इन्द्रदत्तनृपस्तत्र. द्वाविंशत्या सुतैः सह । अगात् समग्रालङ्कारकलिता सुकुमार्यपि ॥ २३ ॥ सप्रपञ्चेषु मञ्चेषु, प्रतिमाप्रतिमा नृपाः । तत्र

तच्चित्रवीक्षार्थमुपाविक्षन् विचक्षणाः॥२४॥ इन्द्रदत्तोऽथ सानन्दं, ज्येष्ठं श्रीमालनामकम् । उवाच तनयं पुत्र!, विद्ध्वा वामेऽक्षिण पुत्रिकाम् ॥ २५ ॥ गृहाण राज्यं सर्वार्थसार्थसार्थकतास्पदम् । निर्वृतिं राजपुत्रीं च, सर्वनिर्वृतिमन्दिरम् ॥ २६ ॥ मालिते नृपमालाभिः, श्रीमाली तत्र मण्डपे । नाभूदपि धनुर्धर्तुं, क्षमः प्रागकृतश्रमः ॥ २७ ॥ कथंचिदन्यथा चापलताप्रथमसङ्गमे । असात्त्विकोऽपि कम्पाद्यैः, स सात्त्विक इवाभवत् ॥ २८ ॥ कुलालचक्रवच्चक्राष्टकं सव्यापसव्यतः । समं भ्रमत् समुद्वीक्ष्य, किंकर्तव्यजडोऽजनि ॥ २९ ॥ धृष्टत्वेनाथ सन्धाय, यत्र तत्र व्रजत्विति । ध्यात्वाऽमुञ्चदमुं चक्रे, स श्रीमाली शिलीमुखम् ॥ ३० ॥ स चोत्प्लुत्य पतत्रस्य, शिरस्पद इवावदत् । इदृक् पततु विज्ञानं, यत्तवैव हि मस्तके ॥३१॥ अहो श्रीमालिनो धन्वकौशलं चेति भाषिभिः । सह विशैरविशैश्च, जज्ञे प्रहसनं तदा ॥ ३२ ॥ शेषाणामप्यशेषाणाममीषामेकविंशतेः । एकं द्वे त्रीणि चक्राण्युल्लङ्घ्य भग्नाः शिलीमुखाः ॥ ३३ ॥ अथाधृतिभृतं धात्रीधवं सचिवपुङ्गवः । अभ्यधादधृतिं देव!, किं दधासि मुधा हृदि ? ॥ ३४ ॥ अप्रधानीकृतोऽस्म्येतैर्नृपोक्ते सचिवोऽवदत् । सुरेन्द्रदत्तनामास्ति, दौहित्रो मे सुतः स ते ॥ ३५ ॥ राधावेधविधाने स, प्रभविष्णुः प्रभो ! ध्रुवम् । राज्ञोऽस्मृतौ दिनाद्यं स, पत्रस्थितमदर्शयत् ॥ ३६ ॥ फ रा फ स इति प्रोक्ते, नृपेणादर्शि मन्त्रिणा । परिरभ्य दृढं दोर्भ्यामभ्यधायि नृपेण सः ॥३७॥ वत्साष्टदलचक्राणि, भित्त्वा वामेक्षिपुत्रिकाम् । विद्ध्वा राज्यं च पुत्रीं च, निर्वृतिं प्राप्तुमीशिषे? ॥ ३८ ॥ सुरेन्द्रदत्त ईशेऽहं, तातपादप्रसादतः । इति प्रोच्य विरच्याथ, स्थानं धनुरुपाददे ॥ ३९ ॥ तं धूलिधूसरं वीक्ष्य, कुचेलं दासकैर्युतम् । कुमाराः स्पष्टशृङ्गाराश्चक्रुर्वक्रोष्टिकां मिथः ॥ ४० ॥ ते स्वं दुर्मेधसो वेध्यवेधसन्धासु दुर्विधाः । सह तं विस्मरन्ति स्म, जनैः परजनैरपि ॥ ४१ ॥ स त्वपश्यन्नधस्तैलकुण्डे तदन्तरम् । ऊर्ध्वं सन्धानमाधाय, राधावेधाय

तन्विथवान् ॥४२॥ तानि तं दासरूपाणि, स्थितानि परितोऽपि हि । आकर्षन्ति स्म तं त्वेप, तृणवत्तान्यमन्यत ॥ ४३ ॥ कृष्टासी द्वौ च निस्त्रिंशौ, पक्षयोरुभयोरुभौ । शीर्षं तवापराधेन, च्छेत्स्याव इति चोचतुः ॥ ४४ ॥ उपाध्यायोऽप्युपान्तस्थस्तस्मै भयमदर्शयत् । त्वामेवमन्तयिष्यामो, यदि वेध्यं न विध्यसि ॥ ४५ ॥ द्वाविंशतिः कुमाराश्च, राधां मैपोऽपि विध्यतु । इति वंठवदुल्लंठवचनैर्विन्नयन्ति तम् ॥ ४६ ॥ तानि तौ च कुमारांश्च, तानप्यगणयन्नयम् । एकतानमना लक्ष्य, एव निक्षिप्तवीक्षणः ॥ ४७ ॥ अष्टानामपि चक्राणां, विज्ञो विज्ञाय चान्तरम् । अविध्यत् पुत्रिकां वामनेत्रे पुत्रो वयोलघुः ॥ ४८ ॥ युग्मम् ॥ साधु साध्विति लोकेन, श्लाघितः स च निर्वृतिम् । राज्यं च प्राप्य पित्रादीनप्यधो विदधे गुणैः ॥ ४९ ॥ अन्तरङ्गा कथा सेयमस्या उपनयस्त्वयम् । ज्ञेयमिन्द्रपुरं सोऽयमिन्द्रजालनिभो भवः ॥ ५० ॥ इन्द्रदत्तोऽत्र भूनेता, मनोभावः प्रकीर्त्तितः । इन्द्रेण ह्यात्मना दत्तः, स स्यादन्वर्थ एव तत् ॥ ५१ ॥ अन्यान्यवस्तुवांछाख्यदेव्या वद्धोऽस्य सन्ति च । तासां द्वाविंशतिः पुत्रा, विज्ञातव्याः परीपहाः ॥५२॥ मन्त्री पुण्याभिधोऽस्त्यस्य, तस्य पुत्री च सन्मतिः । दृष्टा सोपयता किन्तु, भवे भावेन नान्यदा ॥ ५३ ॥ शुचिः सा चैकदा तेन, विवेकद्वाःस्थतो निजा । ज्ञाता पत्न्युपभुक्ता चापन्नसत्त्वा वभूव सा ॥ ५४ ॥ आख्यत् पित्रे स पत्रे च, लिखाति स्म दिनादिकम् । भावस्य संगः सन्मत्या, यत्पुण्येन प्रकाश्यते ॥ ५५ ॥ सुरेन्द्रदत्तवत्तस्याः, सुविचारः सुतोऽजनि । कपायाः सहजास्तस्य, जज्ञिरे दासरूपवत् ॥ ५६ ॥ सुविचारः कलाचार्यस्यागमस्यार्पितः स च । गृह्णन् कलाः कपायांश्च, न किंचिदपि मन्यते ॥ ५७ ॥ ते तु द्वाविंशतिस्तं चागमं च प्रति वैरिणः । कलापात्रं कथं न स्युरित्याशंसाकृतः सदा ॥ ५८ ॥ ज्ञेया सिद्धिशिलाकिन, मथुराऽथ नरेश्वरः । जितशत्रुर्जिनस्तस्माद्गता निर्वृतिदारिका ॥ ५९ ॥ सा च प्रौढा परिव्रज्या, राधावेधकृतो भवेत् ।

राज्यं च परमानन्दसुन्दरं परमं सुखम् ॥ ६० ॥ यथा वर्षति पर्जन्यस्तन्दुलानुपचारवाक् । तथा दशविधो धर्म्मस्तद्धेतुर्निवृ-
र्तिर्मता ॥ ६१ ॥ भवेत् सा च मनोभावपुरे श्रीमज्जिनाज्ञया । यदा याति मनोभावो, मुदितः स्यात्तदा किल ॥ ६२ ॥ परानपि
परिणामभूपानाहूय तत्र सः । प्रकर्षस्थानमंचेषु, निवेशयति तद्दिने ॥ ६३ ॥ विपुलो मण्डपस्तत्र, चित्तस्थैर्याभिधोऽभवत् ।
जातावेकवचश्चाक्षे, कर्म्मचक्राष्टकं मतम् ॥६४॥ प्रव्रज्या पुत्रिका सामायिकं वामं च लोचनम् । तत् कर्म्मविवरेणैव, धन्यो विध्यति
कश्चन ॥ ६५ ॥ समं परीषहैस्तत्र, मनोभावे समागते । तत्र निर्वृतिरप्यागाद्दशभिर्धर्म्मलक्षणा ॥ ६६ ॥ क्षुधापरीषहश्चाद्यो,
धर्म्ममादातुमक्षमः । शरवत्प्रहितो येन, यत्र तत्र व्रजेज्जनः ॥ ६७ ॥ भवेत् प्रहासपात्रं च, क्षुधितः पुरुषो नृणाम् । एवंविधः कथं
योग्यो, दीक्षासमतयोर्भवेत् ? ॥ ६८ ॥ प्रज्ञासम्यक्त्वरूपौ तु, ज्ञानदर्शनभावतः । द्वयोर्वेध्यस्य च च्छिद्रं, लभेते किंचन
क्वाचित् ॥ ६९ ॥ मनोभावनरेन्द्रोऽथाधिचित्तमधृतिं दधत् । पुण्येन मन्त्रिणा प्रोक्तः, किं देव ! कुरुपेऽधृतिम् ॥ ७० ॥ यतो-
ऽस्ति मम दौहित्रस्त्रयोविंशः सुतस्तव । उत्पन्नः सुमतेः कुक्षौ, राधावेधविधिक्षमः ॥ ७१ ॥ पुण्योन्मीलितसंकेतं, सुविचारं सुतं
नृपः । आनाय्यालिंगय्य च प्रोचे, वत्स ! वेत्सीति दुष्करम् ॥ ७२ ॥ तातपादप्रसादेन, सर्वं वेद्मि वदन्निति । सन्धायाजिह्मगं
चित्तं, धर्म्मभेदव्रतोत्करे ॥ ७३ ॥ उपद्रवत्सु क्षुद्रेषु, कषायेषु चतुर्ष्वपि । उद्यन्निस्त्रिंशयो रागद्वेषयोर्मूलघातिनोः ॥७४॥ भय-
दर्शनसिद्धान्ते, त्रस्यत्स्वस्खलितेष्वपि । परीषहेषु चोल्लुण्ठवचनैर्विस्मयत्स्वपि ॥७५॥ स्नेहकुण्डमधः पश्यन्नूर्ध्वं संधानमादधत् ।
विज्ञाय विवरं दृष्ट्या, चाष्टानामपि कर्म्मणाम् ॥ ७६ ॥ प्रव्रज्यापुत्रिकां सामायिके वामे च लोचने । अजिह्मगेन मनसा, विध्य-
द्ध्यागमभावभृत् ॥ ७७ ॥ पञ्चभिः कुलकम् ॥ सुविचारः स लोकेन, श्लाघितः प्राप्य निर्वृतिम् । राज्यं चापि सदानन्दं, विश्वं

विश्वं व्यधादधः ॥७८॥ यथा सुदुर्भिदं चक्राष्टकं तद्वत् सुदुर्लभम्। नृजन्म भिद्यतोऽप्याद्यमपरं तु न लभ्यते ॥७९॥ इति गाथार्थः॥

त्रिभुवनजयपताका अगृहीतपूर्वा गृहीतत्यैव, त्रिजगज्जयिनं कामं जितवतः साधोः सत्यैव सा इति, एवमादिभिरुपमानैः, माधुना दुष्करा भवति प्रव्रज्या, तथापि निर्वाहणीयेति गाथार्थः॥ इत्यस्यां विवृतौ श्रीमत्प्रद्युम्नस्य कवेः कृतौ। प्रव्रज्याविषमत्वेन, पञ्चमद्वारमत्यगात् ॥ १ ॥ अथ षष्ठं द्वारं धर्म्मफलदर्शनाख्यं गाथाद्वयेनाह—

जिणधम्मो मुक्खफलो सासयसुक्खो जिणेहिं पन्नत्तो। नरसुरसुहाइं अणुसंगियाइं अह किसि पलालं व॥१३॥(१५)

जिनधर्म्मो-रागद्वेषरहितदेवताभिहिता सामाचारी मोक्षफलो जिनैः प्रज्ञप्तः, तस्य जिना मोक्षमेव फलमवदन् वदंति वदिष्यन्ति च, नरसुखसुरसुखानि-राज्यसाम्राज्यदेवत्वदेवाधिपतित्वसुखान्यानुषंगिकाणि जिनैरेवोक्तानि, दृष्टान्तमाह—विभक्तिलोपात् कृष्याः पलालमिव, कृषिर्हि कणनिमित्तं क्रियते, पलालं त्वानुषङ्गिकं स्यादिति गाथार्थः॥ अत्रार्थे बाहुभवे विहितचतुर्दशपूर्वलक्षानाभ्यन्तरतपश्चरणः श्रीभरतचक्री दृष्टान्तः, तथाहि—अष्टापदाद्रौ निर्वाणे, युगादिजगदीशितुः। पृथिव्यामुच्छलच्छोकभरतो भरतोऽपतत् ॥१॥ सर्वंसहापतौ तस्मिन्, द्राक् तस्मात् पतिते तदा। भेजे सर्वंसहा कम्पं, निःसहा युक्तमेव तत् ॥ २ ॥ महीन्द्रचेतनस्थानः, शोकग्रन्थिं विभेदितुम्। कण्ठे लगित्वा शक्रेण, पूच्चक्रे वीक्ष्ववर्जितम् ॥ ३ ॥ ततः सचेतनश्चक्री, श्रुत्वा शक्रस्य पूत्कृतम्। गुरोर्वाक्यमिव च्छात्रोऽनुगम्य प्रालपत्ततः ॥ ४ ॥ अहमेव कथं नाथ!, मुक्तो मुक्तिं यियासता। अशरण्ये भवारण्ये, कारुण्याम्बुधिना त्वया? ॥ ५ ॥ लोकः सर्वोऽपि शून्योऽयं, मोहनिद्रास्तचेतनः। तमसा ग्रस्यते बाढं, स्वामिनं

चतुर्दशगुणस्थानमतिक्रम्य गतं त्वया । न चतुर्दश रत्नानि, साम्प्रतं प्रीणयन्ति माम् ॥८॥ विलपन्निति त्वा शिवं विना ॥७॥ चतुर्दशगुणस्थानमतिक्रम्य गतं त्वया । न चतुर्दश रत्नानि, साम्प्रतं प्रीणयन्ति माम् ॥८॥ विलपन्निति शक्रेण, बोधितो भरताधिपः । सुतः किं तस्य तातस्य, त्वादृशः कातरो भवेत् ? ॥ ९ ॥ तं प्रबोध्येति सुत्रामा, चारुगोशीर्ष- दारुभिः । आनायितैः सुरान् प्रेष्य, पूर्वाद्याशास्वथ क्रमात् ॥ १० ॥ वृत्तां विभोः शरीरस्य, त्र्यश्रामिक्ष्वाकुजन्मिनाम् । चतुरश्रां चितामन्यमुनीनां च व्यधापयत् ॥ ११ ॥ युग्मम् ॥ सुरास्तानि शरीराणि, स्नपयित्वा विलिप्य च । शिबिकाभिः समानीयाक्षि- पंस्तासु चितासु च ॥ १२ ॥ ततः प्रज्वालयामासुरग्निमग्निकुमारकाः । चिता विध्यापिता कालेऽनल्पैर्मेघकुमारकैः ॥ १३ ॥ ऊर्ध्वं दंष्ट्राद्वयं शक्रेशानौ दक्षिणवामगम् । आदातां तदधःस्थं तु, क्रमेण चमरो बलिः ॥ १४ ॥ देवैरस्थिचयो वह्निः, श्रावकै- भस्म कैश्चन । जगृहेऽजनि पावित्र्यं, ततः पावकभस्मनोः ॥ १५ ॥ देवैश्चिताञ्यस्थाने, रत्नस्तूपत्रयं कृतम् । स्वाम्यङ्गकृत्यं शक्रेण, चक्रेऽन्येषां तु नाकिभिः ॥ १६ ॥ कृत्वा नन्दीश्वरे यात्रां, स्वस्वसर्वासमागताः । दंष्ट्रां माणवकस्तम्भे, पूजनाय न्यवी- विशत् ॥ १७ ॥ चक्री वर्धकिमारोप्य, संस्काराभ्यर्णभूतले । चतुर्गव्यूतिविस्तारं, त्रिगव्यूतिसमुच्छ्रयम् ॥ १८ ॥ चैत्यं सिंह- निषद्याख्यं, सर्वरत्नशिलामयम् । मेरुचूलामिवानीय, निवेशितमकारयत् ॥ १९ ॥ युग्मम् ॥ चक्रे निजनिजोच्चत्ववर्णलक्षण- लक्षिताः । चतुर्विंशतितीर्थेशप्रतिमास्तस्य चान्तरे ॥ २० ॥ मूर्त्तीस्तदग्रे बन्धूनां, नवाग्रनवतेरपि । प्रत्येकं त्वकरोत् मूर्तिं, स्व- सत्कां तदुपासिकाम् ॥२१॥ रक्षार्थं बहुशो यन्त्रप्रयोगांस्तत्र तेनिरे । चक्रे दुस्संचरो दण्डरत्नेनोल्लिख्य दन्तकान् ॥ २२ ॥ निर्मानुषप्रचारोऽसौ, पर्वतस्तेन सर्वतः । चक्रेऽष्टमेखलायुक्तः, कीर्त्यतेऽष्टापदस्ततः ॥ २३ ॥ युग्मम् ॥ तासामप्रतिमानां च, प्रतिमानां नराधिपः । स्नानपूजाः स्तुतीः कृत्वा, विनीतां नगरीमगात् ॥ २४ ॥ तत्रापि प्रभुपादानां, संस्मरन् शोक-

विह्वलः । अमात्यैः प्रतिबोध्यैष, स्वकृत्येषु प्रवर्त्तितः ॥ २५ ॥ स्वामिमोक्षदिनात्पञ्चपूर्वलक्षीमलक्षयत् । यान्तीं निमेषवन्नैष, विष्वग्गोचरगोचरः ॥ २६ ॥ अन्यदा विहितस्नानो, हरिचन्दनचर्चितः । देवदूष्याण्यदूष्याणि, वसानो वसनान्यसौ ॥ २७ ॥ बिभ्राणो मुकुटं मूर्ध्नि, कर्णयोः कुण्डलद्वयम् । ग्रैवेयकं च ग्रीवायामङ्गदे बाहुरङ्गदे ॥ २८ ॥ अंगुलीष्वंगुलीयानि, मुक्ताहारं च वक्षसि । चरणद्वितये योग्यचरणाभरणानि तु ॥ २९ ॥ श्रीनाभेयकुलाब्धीन्दुसनाभिमृगनाभिजाम् । बिभ्रच्छिरसि ताम्बूलमास्ये पञ्चसुगन्धिकम् ॥ ३० ॥ चतुःषष्ट्या सहस्रैश्च, सुभद्रादिभिरावृतः । प्रेयसीभिः स्मरक्ष्मापद्वारावलगकैरिव ॥ ३१ ॥ निजश्रीभरतश्चक्री, भरतः शक्रसन्निभः । रत्नादर्शगृहे गत्वाऽऽत्मादर्शे समलोकत ॥ ३२ ॥ षड्भिः कुलकम् ॥ इतश्च निश्चयोपात्तपरिव्रज्येन बाहुना । या तपःश्रीः समाराद्धा, पूर्वलक्षाश्चतुर्दश ॥ ४३ ॥ एकान्ते चैकदा सैवाभ्येत्य श्रीकेवलिश्रिया । अभिलाषातिदुःखिन्या, सुतयेव निजा प्रसूः ॥ ४४ ॥ मातस्तदा मयाऽज्ञायि, सङ्गं त्वं जनयिष्यसि । भवेऽत्रैव ममानेन, वरेण सह बाहुना ॥ ४५ ॥ तैस्तैस्तदातनैस्तस्येङ्गितैरन्तस्तरंगितैः । बाढं बद्धानुरागं मां, तदा वेत्ति भवत्यपि ॥ ४६ ॥ दैवयोगात् परं नाभूत्तदा मे तेन संगमः । सर्वार्थसिद्धिं सम्प्राप्तस्तत्राप्यजनि दूरतः ॥ ४७ ॥ गृहिणीरहितं तत्र, तं श्रुत्वा श्रुतवाक्यतः । तस्मिन्न त्यक्तवत्यस्मि, रागं दूरगताऽपि हि ॥ ४८ ॥ अधुना स प्रियः प्राप्तस्तीर्थकृत्पुत्रतामपि । अभद्राभिः सुभद्राभिः, स्त्रीभिर्विप्लाव्यतेऽधिकम् ॥ ४९ ॥ विश्वालोकस्वभावायाः, पश्यन्त्या अपि मे पुरः । मत्प्रियो भुज्यतेऽन्याभिर्नारीभिः किं करोम्यहम्? ॥५०॥ स्वदुःखं तदिदं मातस्तवाग्रे कथितं मया । यथा तथापि तं नाथं, मम मेलय हेलया ॥५१॥ ततःश्रीः प्राह किं वत्से !, करोमि ? गृहभेदतः । विनष्टं हि तदा कार्यमेतज् ज्ञातं मया स्वयम् ॥ ५२ ॥ परस्य मिलिते ह्यात्मजने

कार्यं विनश्यति। काष्ठखण्डे कुठारेण, घाट्टिते छिद्यते द्रुमः ॥ ५३ ॥ मदीयपरिवारान्तर्यदभ्यन्तरमानुषम्। साधूपकारकं साधु-
वैयावृत्त्याख्यमस्ति यत् ॥५४॥ मिलित्वा तेन विषयाभिलापस्य पुरस्कृताः। विषया मोहराट्पुत्ररागराजस्य मंत्रिणः ॥ ५५ ॥
ततस्तैर्विषयैरेष, वैयावृत्त्याद्विजृम्भते । अपरापरनारीणामानीतः करगोचरम् ॥ ५६ ॥ एतैर्विमोहितौ दानशीलाख्यौ तु
ममाग्रजौ। न मां ममानुजं भावमुपलक्षयते ह्ययम् ॥५७॥ तद्वत्से ! ग्राममध्ये न, प्रवेशोऽपि हि लभ्यते। यत्र देशव्रतानां तु, द्रयं
प्रक्षिप्यते कथम् ? ॥ ५८ ॥ सुन्दरं त्वेकमेवास्ति, चरितेऽस्याधुनातने। यदेष स्वकृतिं कृत्वा, श्रावकानित्यपाठयत् ॥ ५९ ॥
जितो भवान् वर्द्धते भीस्तस्मान्मा हन मा हन। विरागताया मे सख्याः, प्रवेशोऽस्तीति यत् खलु ॥ ६० ॥ कदाचिदेतद्द्वा-
रेण, मामेष सपरिच्छदाम्। सकुटुम्बां च सन्मान्य, विधास्यति तवेप्सितम् ॥ ६१ ॥ केवलश्रीस्ततः प्राह, सहिष्णुर्नाहमस्मि
यत् । इयत्कालविलम्बस्य, बाढमुत्कण्ठिता श्रिये ॥ ६२ ॥ अनन्ता मत्प्रिया भूता, भवन्तो भाविनोऽपि च। यथाऽयं न तथा
कश्चिच्चिरेष्टो मम चेतसि ॥ ६३ ॥ ममाग्रतो गृहीत्वा च, कामितः कामिनीजनैः। अपरैस्तद् गृहीत्वाऽहं, कामये तं तदग्रतः
॥ ६४ ॥ तदम्ब ! निर्विलम्बस्य, कार्यस्यास्य कृते सखीम्। निजां विरागतां छन्नदूतीत्वे त्वं नियोजय ॥ ६५ ॥ मिलितायां हि
मय्येष, पराः स्त्रीस्त्यक्ष्यति क्षणात्। मयाऽऽश्लिष्टो विना सिद्धिं, नान्यया रमते नरः ॥ ६६ ॥ ततस्तपःश्रियाऽऽदिष्टा, तत्र
कार्ये विरागता। उवाच युज्यते प्रष्टुमत्रार्थे भवितव्यताम् ॥६७॥ साऽगाद्विरागताऽऽहूता, भाषिता च तपःश्रिया। सर्वकार्यक्षमा
नान्या, काऽप्यस्ति त्वादृशी सखी ॥ ६८ ॥ केवलश्रीर्विहोः कालात्, कुरुते भरते रतिम्। मां विनाऽप्यनयोर्योगं, तत्त्वं घट्टय
दुर्घटम् ॥ ६९ ॥ प्रत्यूचे सा तपःश्रि ! त्वं, निःस्पृहाणां शिरोमणिः। त्वयाऽदिष्टं करोम्येषा, तदद्यैव क्षणादपि ॥ ७० ॥ अहं

तत्रैव यान्त्यस्मि, पृष्ठे प्रेष्या विरागता। तूर्णं पूर्णं विजानीहि, केवलश्रीमनोरथम् ॥ ७१ ॥ इत्थं कृतप्रातिज्ञा सा, तत्रागाद्भवितव्यता। रत्नादर्शान्तरे मूर्तिं, चक्रिणः पश्यतो निजाम् ॥ ७२ ॥ स पश्यन्मुकुरे मूर्तिं, प्रत्यविस्मयत निश्चलः। कायोत्सर्गस्थितछद्मस्थत्वे श्रीनाभिभूरिव ॥७३॥ मूर्तिं स पश्यन्नादर्शे, पश्यति स्म कनीनिकाम्। अनूर्म्मिकां तदाऽऽयातभवितव्यतया कृताम् ॥ ७४ ॥ विच्छायां प्रेक्ष्य तामन्यांगुलीभ्योऽप्ययमूर्म्मिकाम्। अंगुलीविगलच्छोकममत्वेन सहामुचत् ॥ ७५ ॥ नृकोटीरः स्वकोटीरं, स्वशीर्षाद्दुदतारयत्। शिरोऽधिरूढचक्रित्वभारं चिरमिवोद्धृतम् ॥ ७६ ॥ कुण्डलच्छद्मना कर्णयुगलाच्चक्रवर्त्तिना। चाटूनि चाटुकाराणामिव दूरं वितेनिरे ॥ ७७ ॥ कण्ठभूपाश्रमूं मोहीं, मुंचन्नयमशोभत। प्रेमसूत्रसुभद्रादिबाहुपाशानिवायतान् ॥ ७८ ॥ केयूरकंकणश्रेणीर्भुजयोर्दूरयन्नयम्। दानावलेः चमूर्योऽवलेपद्वयमिवात्यजत् ॥ ७९ ॥ विरागताश्रितः सोऽथ, हारमुज्झांचकार च। वक्षसा मवसंसर्गपरिहारमिवाचरन् ॥ ८० ॥ इत्थं विमुक्तसर्वांगाभरणो भरतेश्वरः। फल्गु तद्रहितं कायं, गतच्छायमलोकयत् ॥ ८१ ॥ ततो विरागताचान्तस्वान्तः शान्तमतिः स तु। जातवेगो भवावासं, संवेगेनेत्यभावयत् ॥ ८२ ॥ देहो दुःसहगन्धोऽयं, छिद्रैर्निं छिद्रलान्नवत्। अधिवास्याधिवास्योच्चैर्भोगयोग्यो विधीयते ॥ ८३ ॥ दुष्टव्यापारधूमेन, वाह्निनेव विनाशता। देही देहेन को वाऽस्मिन्, देहे न च बहुव्यथाम् ॥८४॥ श्रीनाभेयभवेनापि, भवे गृद्धिमता मया। कृते शरीरकस्यास्य, किं न किं दुष्कृतं कृतम् ? ॥ ८५ ॥ पिशुनेन शुनेनेव, सरोपं भवता मया। विहिताः सहिताचाराः, सोदरा अपि दूरतः ॥ ८६ ॥ अमानमानसंक्रोधयोधं मायाऽऽमयार्द्दितं। लोभान्धं विषयग्रस्तं, धिग् धिग् मामधमाधमम् ॥ ८७ ॥ इत्थं विरागतादूतीवाक्यैरागत्य सम्मदात्। क्षपकश्रेणिनिश्रेण्या, केवलश्रीस्तमाश्लिपत् ॥ ८८ ॥ शक्रेणागत्य स प्रोचे, द्रव्यलिंगग्रहं कुरु। ततो वन्दे ततश्चक्रं, स

लोचं पंचमुष्टिकम् ॥ ८९ ॥ देवताऽथार्पयन्मुद्रां, ततः शक्रेण वन्दितः । राज्ञां दशसहस्रया च, तदनु व्रतमाददे ॥ ९० ॥ भव्य-
लोकप्रबोध्येष, पूर्वलक्षं विहृत्य च। जगामाष्टापदं यातो, मोक्षं भरतकेवली ॥ ९१ ॥ एतदेव व्यतिरेकेणोपदिशति—यतः श्रीभरत-
चक्रिणाऽष्टापदे यथावर्णप्रमाणरत्नचतुर्विंशतिजिनप्रतिमास्थापनविहितदुरितावसादः सिंहनिषद्याप्रासादः कारितः, तत्र च
यथोक्तबिंबानि स्थापितानि, प्राग्भवे च सा वैयावृत्यपूजा कृता, दुर्द्धरं च व्रतं धृतं, यस्य त्वेतेषां चतुर्णां मध्ये न किमपि स्यात्
तस्य मनुष्यजन्मव्यर्थत्वे गाथामाह—

भवणं जिणस्स न कयं न य बिंबं नेव पूइया साहू। दुद्धरवयं न धरियं जम्मो परिहारिओ तेहिं ॥१४॥ (१६)

भवनं जिनस्य न कृतं, न बिम्बं, न च पूजिताः साधवो, दुर्द्धरं व्रतं न धृतं, मनुष्यजन्म तेन लब्धं हारितमेवेति ॥ इत्य-
स्यां विवृतौ श्रीमत्प्रद्युम्नस्य कवेः कृतौ । धर्मफलदर्शनाख्यं, षष्ठं द्वारमपूर्यत ॥ १ ॥ अथान्वयव्यतिरेकाभ्यां
शीलनिर्वाहकेभ्यः पंचभिर्गाथाभिः श्लाघते—

मुणिवूढो सीलभरो विसयपसत्ता तरंति नो वोढुं । किं करिणो पल्लाणं उव्वोढुं रासहो तरइ ॥१५॥ (१७)

मन्यन्ते साधुसामाचारीमिति मुनयः तैर्व्यूढः शीलभरोऽष्टादशसहस्रशीलांगभारः पूर्वप्रणीतः यत एव विषयप्रसक्ताः-शब्दादिषु
प्रकर्षेण संसर्गवन्तो न वोढुं तरन्ति-शक्नुवन्ति 'शकेश्चयतरतीरपाराः' इति प्राकृतत्वात्, व्यतिरेकदृष्टान्तमाह-किं करिणः पर्याणं-
भाररूपं उद्वोढुं रासभः शक्नोति?, अपि तु न, मुक्तिपुरपरिघरूपरागादिभुजार्गलाभंगमहागजप्रायमहामुनिव्यूढं शीलपर्याणं रासभप्रा-
यपत्याभ्यासैः कथं वोढुं शक्यत इति भावः, चिद्रूपस्य वयःस्थस्य, शीलमत्यद्भुतं यदि । चित्रं न तर्ह्यचिद्रूपविरूपजरिणां तु किम्?

॥१॥ रूपवन्तो वयःस्थाश्च, विश्वव्यामोहकारिणः । स्त्रीसंगैरर्थभंगैश्च, न ये भिन्ना नमामि तान् ॥२॥ अत्रार्थे श्रीवज्रस्वामिदृष्टान्तः,
तथाहि-अवन्तीविषये तुम्बवनाख्ये सन्निवेशने । धनिपुत्रो धनगिरिर्नाम्नाऽऽस्ते धार्मिकः सुधीः ॥ १ ॥ पितरौ यत्र यत्रास्य,
कृते कन्यां ययाचतुः । तत्र तत्र व्रतेच्छुं स्वं, कन्यापित्रोः शशंस सः ॥ २ ॥ सुनन्दा धनपालेभ्यकन्याऽऽह पितरौ निजौ । विना
धनगिरिं नान्यो, मान्यो मम वरोऽवरः ॥ ३ ॥ व्रतेच्छवेऽपि तस्मै सा, पितृभ्यां प्रददे ततः । भेजे धनगिरिस्तां चान्यदा
कर्म्मनियोगतः ॥ ४ ॥ श्रीदसामानिको देवस्तस्याः कुक्षाववातरत् । मत्वा चापन्नसत्त्वां तामूचे धनगिरिः सुधीः ॥ ५ ॥ यत्रा-
र्यसमितो नाम, भ्राता प्रव्राजितस्तव । ग्रहीष्यामि व्रतं तस्मादहं सिंहगिरोर्गुरोः ॥ ६ ॥ इदमुक्त्वा च मुक्त्वा च, तां सगर्भामसौ
कृती । व्रतमादाय निर्मायस्तपस्तेपे सुदुस्तपम्॥७॥ सुनन्दा सुदिनेऽसूत, सुतं तस्याः सखीजनः । प्रतिजागरणायातस्तमेवं बालमा-
लपत् ॥ ८ ॥ अग्रहीष्यत्तपस्या ते, तातस्तात ! न चेत्पुरा । अभविष्यत्ततः कीदृग्, वत्स ! जन्मोत्सवस्तव ? ॥ ९ ॥ तदाकर्ण्य
स बालोऽपि, ससंज्ञः कर्म्मलाघवात् । जातजातिस्मृतिश्चैच्छत्तातस्य पथि पान्थताम् ॥ ४ ॥ अम्बां विलक्षतां नेतुं, रुदन्न-
स्यादहर्निशम् । सदोलांदोलनैर्गोभिश्चटुश्चित्रदर्शनैः ॥ १० ॥ अब्दार्धं रुदता तेन, स्मृतिज्ञानेन संज्ञिना । नन्दनेन निरानन्दा,
सुनन्दा विदधेऽधिकम् ॥१२॥ अन्यदा धनगिर्यार्यसमितादिभिरावृतः । आचार्यसिंहगिर्याख्यस्तत्रागात् सन्निवेशने ॥ १३ ॥
धनगिर्यार्यसमितौ, विचार्य शकुनं गुरुः । प्राहाचित्ता सचित्ता वा, भिक्षा ग्राह्याऽद्य हे मुनी! ॥ १४ ॥ सुनन्दासदनायातौ, जनी
तस्या सखीजनैः । वीक्ष्य प्रोक्ता सुनन्देति, मुनये! सूनुरर्प्यताम् ॥ १५ ॥ तेनात्युद्विजिता सा च, दोर्भ्यामुत्पाट्य बालकम् ।
मुनिं धनगिरिं प्राह, गृहाणामुं निजांगजम् ॥ १६ ॥ स्मरन् गुरुवचः सोऽमूमूचे कुर्वन्न साक्षिणः । पश्चात्तापवती पश्चाद्बालं न

सुनन्दा साक्षिणः कृत्वा, निर्विण्णा तनयं ददौ । न्यस्तश्च पात्रबन्धेऽसौ, विरतश्चानुरोदनात् ॥ १८ ॥
लभसे शुभे ! ॥ १७ ॥ सुनन्दा साक्षिणः कृत्वा, निर्विण्णा तनयं ददौ । ... सुनन्दामन्दिरादेतावुपेतौ मुदितौ मुनी ।
पितरं विरतं प्राप्य, विरतो रोदनादसौ । मुनिहस्तगतो युक्तं, बालो मौनमवाप सः॥१९॥ पात्रबन्धं करे चक्रे, बालं वज्र-
गुरुर्धनगिरिं वीक्ष्य, भारितं चाभ्यधावत ॥ २० ॥ बालस्य बलिनो भाराद्भज्यमानभुजान्मुनेः । अहं सिंहगिरिः
मिति ब्रुवन् ॥२१॥ गुरुर्वलक्षदृग् वीक्ष्य, तं सुलक्षणलक्षितम् । उवाच शासनस्यायं, बालो भावी प्रभावकः॥२२॥ आर्याणामर्प्प-
सिंहपोतेनानेन जाग्रता । सत्याभिधो भविष्यामि, वादिद्विरदमर्द्दिना ॥ २३ ॥ नररत्नमिदं यत्नरक्ष्यमेवमुदीर्य सः । बालमपालयन्
यामास, बालं पालयितुं गुरुः ॥ २४ ॥ आर्याः शय्यातरीणां तमार्प्पयंस्ताश्च मातृवत् । स्वापत्यानिर्विशेषं तं, मुदा बालकः स च नीहा-
॥२५॥ आक्रीडयन्नधुश्चाङ्केऽस्वपयन्नप्यमण्डयन् । अपीप्यन् प्रस्तुकान् नित्यं, स्तन्यस्तन्यं स्तनन्धयम् ॥२६॥ तं
राहारादिषु सचेतनः । न किंचिद् दुःखकृत्तासां, चक्रे वक्रेतराशयः ॥ २७ ॥ तं बालं नालपद्या च, व्याकुला यत्र वासरे । अर्माणि शिक्षयन्नेष,
मेने सा वृथा साध्वी, यथाऽऽवश्यकवर्जितम् ॥ २८ ॥ प्रत्युपेक्षानिरीक्षादि, प्राशुकान्नाशनेऽपि च । जिघृक्षुस्तमपालयत् ॥३०॥
साध्वीवर्गममोदयत् ॥२९॥ शय्यातरी सुनन्दायै, याचन्त्यै नार्पयत् सुतम् । साऽप्यन्यनारीसामान्यं, सूनुं सुनन्दा साधुभ्यो,
अथैयुधर्नगिर्याद्यास्तत्र वज्रे त्रिवार्षिके । सुनन्दाऽजनि सानन्दा, सुताऽऽदानकृताशया ॥ ३१ ॥ नृपस्य
ययाचे न ददुश्च ते । लोकोऽवादीदमुं वादं, नृपो निर्वाहयिष्यति ॥ ३२ ॥ सुनन्दा स्वजनैर्युक्तोपाविक्षद्वामपक्षतः । बालकः
दक्षिणे पक्षे, सङ्घभट्टारकः पुनः ॥ ३३ ॥ भाषोत्तरं द्वयोर्ज्ञात्वा, बभाषे नृपतिस्ततः । येनाहूतः समायाति, तस्य स्तादेष बालः,
॥ ३४ ॥ अयं पक्षद्वयेनापि, निर्णयो मन्यते स्म च । ऊचे च प्रथमं पुत्रमाकारयतु कः पुनः? ॥ ३५ ॥ स्त्रीपक्षाः प्रोचिरे बालः,

माधुभिश्चिरसङ्गतः । तत्पूर्वं पुत्रमातैव, तदाह्वाने निदिश्यताम् ॥ ३६ ॥ सभ्यैः परममित्युक्ते, सुनन्दा न्यस्य तत्पुरः । खेलनानि समोज्ज्वानि, नानारूपाण्युवाच मा ॥ ३७ ॥ वत्सैतत् पूर्वगात् ( मादाय ), ममोत्सङ्गमुरीकुरु । त्वं मे माता पिता देवः, शरीरं जीवितं गुरुः ॥३८॥ मातुर्दुष्प्रतिकारस्त्वं, विद्वन्नपि न भेदितः । यत्तस्याश्चडुभिः सत्यो, वज्रो नाम्ना हृदापि तत् ॥३९॥ स बालोऽचिन्तयत् सङ्घे, महिमानं ददाम्यहम् । परिणामसुखं दुःखं, मातुर्भावि व्रतात्त्वदः ॥ ४० ॥ ध्यायन्नित्येष तन्मातुः, खाद्यखेलनकादिकम् । दृष्ट्वाऽपि नास्पृशद्भक्तद्वेषी भक्तमिवाखिलम् ॥ ४१ ॥ नुन्नो राज्ञा धनगिरिस्तथ्यामुदगिरद्गिरम् । व्रतेच्छुस्तत्त्वविन्चेत्त्वं, तद्रजोहरणं भज ॥ ४२ ॥ कराद्धनगिरेः शीघ्रमेत्य धर्म्मध्वजं ललौ । चारित्रश्रीनिवासैकशुभ्रांभोजनिभं शिशुः ॥ ४३ ॥ तद्रजोहरणं रेजे, बालस्यास्य कराम्बुजे । तन्मानसनिवासित्वान्नन्यमानसवासिवत् ॥ ४४ ॥ सुनन्दाऽथ निरानन्दाऽध्यायन्मे बान्धवो धवः । सुतश्च व्रतिनोऽभूवन्, ममाप्येतद्धि युज्यते ॥ ४५ ॥ सुनन्दा हृदि कृत्वैवं, निजं सदनमामदन् । आजग्मुर्वज्रमादायोपाश्रयं व्रतिनोऽपि ते ॥ ४६ ॥ स्तन्यं स्तनंधयोऽप्येष, पपौ नैव व्रतेच्छया । तदाचार्यैः परिव्राज्य, व्रतिनीभ्यः समर्पितः ॥ ४७ ॥ अनुव्रज्य सुनन्दाऽपि, सानन्दा व्रतमाददे । एकादशाङ्गीं वज्रस्तु, जग्राहार्यामुखश्रुताम् ॥ ४८ ॥ व्रतिन्युपाश्रयादष्टवार्षिकः स महर्षिभिः । स्वोपाश्रयं समानीतो, विनीतो नीतिवेदिभिः ॥ ४९ ॥ प्रत्यवन्त्यन्यदा तद्गुरवश्चेलुरन्तरा । मेघे वर्षति यक्षस्याश्रयेऽस्थुः सपरिच्छदाः ॥ ५० ॥ वयस्याः प्राग्भवे देवा, जृम्भकाः सत्त्वमीक्षितुम् । वज्रस्य वाणिजीभूयागत्य सूरीन् न्यमन्त्रयन् ॥ ५१ ॥ गुर्वादेशाद्व्रजन् वज्रो, भिक्षार्थं सद्वितीयकः । चचले बिभ्यदप्कायादल्पकादपि त्रिगुप्तः ॥ ५२ ॥ पुनराकारितो वज्रो, देवैर्वारितवारिभिः । गतस्तदुटजे पश्यन्नमरान्निश्चिकाय तान् ॥ ५३ ॥ अनात्तभै-

क्षे वज्रेऽथ, वलिते स्वं निवेद्य ते। विद्यां वैक्रियलब्धिं च, दत्त्वा तस्मै तिरोदधुः ॥ ५४ ॥ तैरेवामन्त्रितो देवैर्वज्रो घृतवरैः
परैः। पूर्ववद्विद्ययाऽऽकाशगामिन्या सहितश्च तैः ॥ ५५ ॥ पदानुसारिप्रज्ञावान्, स्थिरीचक्रे मुनिर्जवात्। अङ्गान्येकादशाप्येष,
किञ्चित्पूर्वगतादपि ॥५६॥ मुनिर्वृद्धैः पठेत्युक्ते, शक्तिव्यक्तिमनाश्रयन्। शुश्रावान्यानधीयानान्, कुर्वन् गिणगिणस्वरम् ॥ ५७ ॥
बाहेर्गुरुषु भिक्षार्थं, गतेष्वपि च साधुषु। वसतौ वज्र एकाकी, सन्निवेश्याथ वेष्टिकाः ॥ ५८ ॥ शिष्यालीनामिवैतासां, स्वयं
गुरुरिव स्थितः। प्रारेभे वाचनां दातुं, स्वयमंगगताश्रिताम्॥५९॥ युग्मम् ॥ गुरुस्तां वाचनावाचं, श्रुत्वाऽध्यायत् किमागताः।
भिक्षां कृत्वा महाप्रज्ञाः, स्वाध्यायैः पालयन्ति माम् ? ॥ ६० ॥ विभाव्य वज्रस्यैकस्य, स्वरं मुदितमानसः। दध्यौ
धन्यो ह्ययं गच्छो, बालो यत्रेदृशश्रुतः ॥ ६१ ॥ क्षोभो मा भूदमुष्येति, चकार द्वारमाश्रितः। गुरुर्गुरुतरारावरुचि-
नैषेधिकीवचः ॥ ६२ ॥ वज्रो गुरोः स्वरं श्रुत्वा, न्यस्य स्थानेषु वेष्टिकाः। एत्यादाय गुरोर्दण्डं, पदरेणुं ममार्ज्ज सः ॥ ६३ ॥
गुर्वंघ्रिरजसा भाले, स कृतालेपनः शिशुः। गुरुक्रमौ क्रमज्ञोऽयं, प्रक्षाल्याम्भोऽभ्यवन्दत ॥ ६४ ॥ गुरुर्ज्ञापयितुं साधुं, मत्वाऽस्य
प्रतिभाप्रभाम्। निश्यूचे दिवसान् द्वित्रान्, यामो ग्रामान्तरं वयम् ॥ ६५ ॥ वाचनाग्राहिणः प्राहुर्वाचनां कः प्रदास्यति ?।
वज्रस्तद्य गुरुप्रोक्तं, तत्तथेति प्रपेदिरे ॥ ६६ ॥ प्रातर्गते गुरौ ग्रामं, मुनयो विनयोज्ज्वलाः। गुरुवन्न्यस्य तं तस्मादाददुस्तत्र
वाचनाम् ॥ ६७ ॥ तं बालमपि तत्कालमतिं सन्देहभेदने। गुरोरपि गुरुप्रीत्या, ददृशुस्ते सुदर्शनाः ॥ ६८ ॥ सूरयोऽथ समा-
याताः, पपृच्छुर्वाचनासुखम्। तेऽप्यूचुर्वाचनाचार्यो, वज्र एवास्तु नः सदा ॥ ६९ ॥ श्रुतशेषमशेषं च, गुरुर्वज्रमपाठयत्।
उदग्राहयदप्येनं, तथाङ्गोपाङ्गसंभवम् ॥ ७० ॥ दृष्टिवादो गुरोर्यावाँस्तावन्तं तमशिक्षयत्। पुरं दशपुरं जग्मुः, सर्वज्ञाः सूरयोऽ-

न्यदा ॥ ७१ ॥ ते वज्रमूचुर्वत्स ! त्वं, सद्गुरोर्भद्रगुप्ततः । दशपूर्वभृतोऽवन्त्यां, दशपूर्वमधीष्व तत् ॥७२॥ स गुर्वाज्ञां दधच्छीर्षे, यतियुग्मयुतो ययौ । रजन्यामुज्जयिन्याश्च, नगर्या न्यवसद् बहिः ॥ ७३ ॥ भद्रगुप्तो गुरुः शिष्यान्, ब्रूते स्वप्ने नवोऽतिथिः । पतद्ग्रहं पयःपूर्णं, पीत्वा तृप्तः क्षणादभूत् ॥ ७४ ॥ दशपूर्वीग्रही तावत्, कोऽप्यद्यातिथिरेष्यति । दिष्ट्या न मयि विच्छेदो, दशपूर्व्या भविष्यति ॥ ७५ ॥ मुदा सूरौ वदत्येवं, वज्रो नैषेधिकीं वदन् । विवेश वसतिं पश्चात्, प्रथमं तु गुरोर्मनः ॥ ७६ ॥ प्रणमन् पादयोर्वज्रः, कराभ्यां गुरुणाऽऽददे । आश्लिष्य भाषितो ज्ञात्वाऽऽकृत्या वज्रो ह्ययं सुधीः ॥ ७७ ॥ कच्चित् सुखविहारस्ते?, गुरुः कुशलवांस्तव? । किमवन्त्या विहारस्य, कारणं वज्र ! पण्डित ! ॥ ७८ ॥ वज्रः प्राहाखिलं भव्यमस्ति पूज्यप्रसादतः । अध्येतुं दशपूर्वीं तु, पूज्यान् गुर्वाज्ञयाऽऽगमम् ॥७९॥ प्रभो ! प्रसीद तन्मह्यं, दशपूर्वीप्रदानतः । तेनेत्युक्ते गुरुर्यत्नात्तस्मै तां प्रत्यपादयत् ॥ ८० ॥ भद्रगुप्ताज्ञया वज्रोऽगच्छद्दशपुरं प्रति । तत्र सिंहगिरिः पुर्यामनुज्ञां चास्य निर्ममे ॥८१॥ पूर्वानुज्ञोत्सवे सूरिपदे च जृम्भकामरैः । प्राग्जन्ममित्रैर्वज्रस्य, महाँश्चक्रे महोत्सवः ॥ ८२ ॥ ततः सिंहगिरिः स्वर्गं, गृहीतानशनोऽगमत् । श्रीवज्रमुनिराजस्तु, विजहार महीतले ॥ ८३ ॥ मुनिपञ्चशतीयुक्तो, यत्र यत्रागमद्विभुः । श्रीवज्रस्तत्र तत्राभूज्जनस्तद्गुणरञ्जितः ॥ ८४ ॥ इतश्च पाटलीपुत्रे, धनाख्यधनिनः सुता । कन्याऽस्ति रुक्मिणी नाम, रूपेणान्येव रुक्मिणी ॥ ८५ ॥ धनस्य यानशालायां, स्थिताः साध्व्यो गुणस्तवम् । वज्रस्याहर्निशं तेनुः, पुण्याहं यद् गुरुस्तुतिः ॥८६॥ तद्गुणश्रेणिमाकर्ण्य, रुक्मिणी वज्ररागिणी । ऊचे निश्चयतः श्रीमान्, वज्र एव पतिर्मम ॥ ८७ ॥ साध्व्यस्तामवदन् मुग्धे !, निष्फलोऽयं ग्रहस्तव । सा प्राहाहं तदादेशवशा स्थास्यामि संयमे ॥ ८८ ॥ इति निश्चयतः कन्या, सा न चक्रे वरान्तरम् । श्रीवज्रोऽपि

समागच्छत्, पाटलीपुत्रपत्तनम् ॥८९॥ विज्ञाय वज्रमायातं, सम्मुखोऽगान्महीपतिः । सर्वान्नृपस्ततः (समान्) प्रेक्ष्य, पप्रच्छैतेषु को गुरुः ? ॥ ९० ॥ मुनयः प्राहुरस्मासु, नक्षत्रेष्विव कान्तिमान् । राजेव राजते राजन् !, योऽसौ वज्रो गुरुः स नः ॥ ९१ ॥ श्रीवज्रं प्रत्यभिज्ञाय, ववन्देऽमन्दसम्मदः । अलीकमनलीकत्वं, नेतुं नत्वा गुरोर्नृपः॥९२॥ पुरोपान्तवनच्छायं, श्रये वज्रमुनीश्वरः । स्थित्वा चकार संसारक्लेशनाशाय देशनाम्॥९३॥वज्रस्य गोपतेरुद्यद्देशनाद्युतिदीपिताः। जिग्यिरे विमलालोका, लोकाः कोका इवोन्मदाः ॥ ९४ ॥ श्रीवज्रदेशनाप्रान्ते, ययुः स्थाने नृपादयः । नृपो निजप्रियां प्राह, श्रीवज्रोऽद्य नतो मया ॥ ९५ ॥ तद् यूयमपि वन्दध्वं, गत्वा वज्रमुनीश्वरम्। नतास्तास्तं प्रभुं राजादेशद्विगुणसम्मदाः ॥ ९६ ॥ रुक्मिणी पितरं प्राह, तात ! मच्चिन्तितः प्रियः। समेतो देहि तस्मै मां, यावद्याति न सोऽन्यतः ॥ ९७ ॥ तदाकर्ण्य धनः पुत्रीं, पुरस्कृत्य धनैः सह । निन्ये कन्यां स वज्राय, प्रदातुं सरलाशयः ॥ ९८ ॥ श्रीवज्रः प्राग्दिने चक्रे, विरूप इव देशनाम् । गुणानुरूपं नो रूपं, गुरोरिति जनोऽवदत् ॥ ९९ ॥ द्वितीयेऽह्नि प्रभुर्भूरिलब्धिः स्वरूपमास्थितः । स्मेरस्वर्णाम्बुजासीनो, विदधे देशनां पुनः ॥ १०० ॥ कल्ये विभुर्विरूपोऽभूत्, पुरक्षोभभयाद् ध्रुवम् । इदं तु सहजं रूपमिति प्रीतो जनोऽवदत् ॥ १०१ ॥ कन्यादानोन्मुखो वज्रे, धनोऽश्रौषीच्च देशनाम् । देशनान्ते च मुग्धोऽयं, वज्रमेवं व्यजिज्ञपत् ॥ १०२ ॥ त्वदेकशरणामेतां, स्वामिन्नुद्वह मे सुताम् । धनकोटीं प्रदास्येऽस्याः, पाणिमोचनपर्वणि ॥१०३॥ वज्रः प्राह महाभाग !, श्रीणां स्त्रीणां च दूरगाः । ईहन्ते मुनयः सिद्धिं, स्त्रियं वा संयमश्रियम् ॥ १०४ ॥ त्वत्पुत्री सानुरागा चेन्, मयि तन्मम वल्लभाम् । संयमश्रियमेवैकामाराधयतु सादरा ॥१०५॥ सपत्न्याराधनाऽऽदिष्टा, रुक्मिणी गणिनीगिरा । प्रबुध्य वाक्यभङ्गीं तामङ्गीचक्रे गुरूदिताम् ॥ १०६ ॥ वज्रोऽयं नवतत्त्वासो, नवो

धनगिरावभूत् । चारूर्म्मिकायां रुक्मिण्यां, यो धात्रापि न यन्त्रितः ॥ १०७ ॥ रुक्मिणीदृष्टिकोटीभिः, स्वर्णकोटीभिरप्ययम् । न लुब्धो लब्धिमान् यः श्रीवज्रायास्मै नमोनमः ॥ १०८ ॥ इति व्यासार्थः ॥

अथ द्वितीयगाथामाह—

**अन्नह सा पव्वज्जा वज्जियसावज्जजोगकरणिज्जा । अन्नह पमायबहुलो जीवो विनडेइ अप्पाणं ॥**

अन्यथा सा प्रव्रज्या वर्त्तते वर्जितसावद्यव्यापारैः करणीया, ये सपापव्यापारपरिहारिणस्तैः क्रियते प्रव्रज्या, नान्यैरिति भावः, अन्यथा प्रमादबहुलः, प्रमादेन-कषायविकथारूपेण बहुलो-वेष्टितः, कोऽसौ ?-जीवः-प्राणी आत्मानं विनटयति- विगोपयति, आसतां वचनशरीरव्यापाराः, कषायप्रगल्भमनोमात्रव्यापारकषायदन्तोऽपि नरकगत्युपार्जनायोग्या भवन्तीत्यत्रार्थे श्रीप्रसन्नचन्द्रराजर्षिदृष्टान्तस्तथाहि- एकदा भवपाथोधिपोतः पोतनपत्तने । श्रीवीरो भव्यराजीववासरः समवासरत् ॥ १ ॥ प्रसन्नचन्द्रो निस्तन्द्रो, नरेन्द्रो धर्म्मकर्म्मसु । आययौ श्रीमहावीरं, वन्दितुं सपरिच्छदः ॥ २ ॥ स श्रुत्वा श्रुतिपीयूषदेशीयां देशनां विभोः । पुत्रं बालमपि न्यस्य, स्वराज्ये व्रतमाददे ॥ ३ ॥ समं समंततः स्वामिपादैश्च विचरन्नयम् । कालेनाल्पेन राजर्षिर्दक्षः शिक्षामलक्षयत् ॥४॥ तेन राजर्षिणा सार्द्धमपरैरपि साधुभिः । स्वामी राजगृहं प्राप, पापद्रुमसमीरणः ॥ ५ ॥ तं ज्ञात्वा चालितामात्यश्रेणिकः श्रेणिको नृपः । वन्दनाय जगद्भर्त्तुश्चलितः कलितो मुदा ॥ ६ ॥ आगच्छन् राजमार्गे च, राजा राजन्निजश्रिया । प्रसन्नचन्द्रं राजर्षिं, कायोत्सर्गस्थमैक्षत ॥ ७ ॥ स्थितं पदा तमेकेन, भुजेनोर्द्ध्वीकृतेन च । सूर्यन्यस्तदृशं दृष्ट्वाऽवातरद्वन्दितुं द्विपात् ॥ ८ ॥ दक्षः प्रदक्षिणीकृत्य, स्थिरचित्तं प्रणम्य च । जातरोमोद्गमश्रेणिः, श्रेणिको हृद्यचिन्तयत् ॥ ९ ॥ अयं स्थितः

मन्ये तीव्रकरे बद्धस्पर्द्धस्तीव्रतरं तपः ।
पदैकेन, पिपासुरिव निर्वृतिम् । ऊर्ध्वस्थेन भुजेनास्या, दत्ते वा दक्षिणं करम् ॥१०॥ धन्योऽयं विरतः सर्वसावद्यादुद्यतो व्रते । विरतिं काकमांसेऽपि, कर्तुं नाहं
तप्यतेऽसौ परित्यज्य, राज्यं राजर्षिरुत्तमः ॥ ११ ॥ ध्यायन्निति धराधीशः, स्रवदश्रुविलोचनः । पुनः प्रणम्य तं प्राप, श्रीमद्वीरक्रमौ नृपः ॥ १२ ॥ त्रिस्तान्
पुनः सहः ॥ १३ ॥ ध्यायन्निति धराधीशः, स्रवदश्रुविलोचनः । पुनः प्रणम्य तं प्राप, श्रीमद्वीरक्रमौ नृपः ॥ १४ ॥ प्रभो ! प्रसन्नचन्द्रर्षिरभ्यवन्दि यदा
प्रदक्षिणीकृत्य, प्रणिपत्योपविश्य च । पप्रच्छ स्वामिनं मौलिन्यस्तहस्ताग्रकुड्मलः ॥ १४ ॥ प्रभो ! प्रसन्नचन्द्रर्षिरभ्यवन्दि यदा
मया । तदा विपद्य सद्यः कां, गतिमासादयेदयम् ? ॥ १५ ॥ सप्तमीं नरकक्षोणीमित्युक्ते स्वामिना नृपः । अनाकर्णितकं कृत्वा,
क्षणेऽपृच्छत् पुनः प्रभुम् ॥ १६ ॥ अधुना कां गतिं गन्ता ?, स महर्षिर्जिनेन्दुना । सर्वार्थसिद्धिमित्युक्ते, पुनर्व्यज्ञपयन्नृपः
॥ १७ ॥ द्विधा व्याकरणं हेतोः, कुतो गतिविधौ मुनेः ? । स्वामी जगाद तच्चित्तवृत्तेर्भेदो गतेरयम् ॥ १८ ॥ कथं
न्विति नृपेणोक्ते, युक्तिं स्वामी समादिशत् । तदा त्वदागमेऽग्रस्थौ, पत्ती सुमुखदुर्मुखौ ॥ १९ ॥ मिथ्यादृशौ निरीक्ष्यैनं,
ध्यानस्थं प्राहतुर्मिथः । सुमुखस्तत्र चावोचद्धन्योऽयं पुण्यवानयम् ॥ २० ॥ तपस्यतस्तपस्तीव्रमस्य मन्ये महात्मनः । नैव
स्वर्गोऽपवर्गो वा, दूरे दूरीकृतक्रुधः ॥ २१ ॥ दुर्मुखः प्राह पापीयानयमग्राह्यनामकः । अद्रष्टव्यमुखोऽश्रव्यचरित्रश्च विपश्चिताम्
॥ २२ ॥ अयं प्रसन्नचन्द्रोऽहितुल्यः स्वासु प्रजास्वलम् । न्यस्य बालं सुतं राज्येऽदः पापण्डममण्डयत् ॥ २३ ॥ शम्पासम्पातभी-
मेन, स चम्पास्वामिनाऽधुना । दधिवाहनराजेन, राज्यादुत्थापयिष्यते ॥ २४ ॥ अन्तःपुरपुरन्ध्र्यश्चाशुष्य शुष्यद्गला बलात् ।
विटैर्विडम्बयिष्यन्ते, धनं धान्यं ग्रहीष्यते ॥ २५ ॥ सचिवैरपि चैतस्य, वैपक्षं पक्षमाश्रितैः । उपेक्ष्यते क्षतेक्षारसदृक्षैः क्षीरकण्ठकः
॥ २६ ॥ तदाकर्ण्य यतेः कर्णतप्तत्रपुसमं वचः । समाधिराधिना तस्य, निश्चलोऽपि चलोऽभवत् ॥ २७ ॥ संकल्पवशतः पश्यन्,

विपक्षं स्वपुरः स्थितम्। योद्धुं प्रवृत्ते क्रोधाद्, रुद्धबोधो विरोधिभिः ॥ २८ ॥ साक्षाद्विपक्षकक्षाशुशुक्षणिस्तत्र स क्षणे। वन्दितो भवता भूपयोग्योऽभूत् सप्तमावनेः ॥ २९ ॥ अधुना तु धुनानेन, योधिनः स्वविरोधिनः। निरस्त्रेण शिरस्त्राणग्रहणायाहितः करः ॥ ३० ॥ कृतलोचशिरःस्पर्शप्रबुद्धः स्वं तास्थितम्। स जातिस्मरणेनेव, सस्मार च निनिन्द च ॥ ३१ ॥क्व मे राज्यं परित्यज्य, स्वामिपार्श्वे व्रतादरः ?। क्व चापध्यानसन्धानात्, कर्म्मबन्धोऽतिबादरः ? ॥३२॥ हृदावालस्थितो धर्म्मध्यानशाखी ममानया। मनोव्यापारसन्तत्या, वात्ययेव प्रपात्यते ॥३३॥ इत्थमेष प्रतिक्रान्तः, क्षमाकान्तः प्रशान्तधीः। सर्वार्थसिद्धियोग्योऽभूद्, द्विधाऽसौ व्याकृतस्ततः॥ ३४ ॥ प्रभुवाक्यस्य संवादे, सति दध्वान दुन्दुभिः। तदा मुदाऽऽहतो देवैरपृच्छन्नृपतिः प्रभुम् ॥ ३५ ॥ किमेतन्नाथ ! नाथश्च, प्राह श्रेणिक ! केवलम्। जज्ञे प्रसन्नचन्द्रर्षेर्देवाः कुर्वन्ति तन्महम् ॥ ३६ ॥ ततश्च श्रेणिको दध्यौ, मन एव निबन्धनम्। प्रसन्नमप्रसन्नं च, शिवस्य च भवस्य च ॥ ३७ ॥ इति प्रसन्नचन्द्रस्य, श्रुत्वा दृष्टान्तमद्भुतम्। मनसाऽपि न कर्त्तव्यः, कषायः कषदो यतः ॥३८॥ अप्रमादवतैव सर्वथा भाव्यमिति गाथार्थः ॥ अथैनमेवार्थं तृतीयगाथया विशिनष्टि—

**अन्नह सो परमत्थो अन्नह लोयाण चिट्ठियं इण्हिं। अन्नेच्चिय दंत गयवराण चावंति अन्नेहिं ॥१७॥ (१९)**

अन्यथा स परमार्थः प्रव्रज्याविधानरूपः, अन्यथा चाधुना लोकानां चेष्टितं-विलसितं इदानीं, किं च-आस्तामिदानीं ऐदंयुगीनानामस्मादृशलोकानां, यत् तदापि श्रीवीरजगद्गुरुशिष्यत्वेऽपि एकेन चरणेन स्थितोऽप्यूर्ध्वबाहुरातापयन्नपि अन्तर्मुहूर्त्तभाविकेवलज्ञानोऽपि मनोव्यापारपारवश्याद् दुर्गतियोग्यः प्रसन्नचन्द्रोऽजनि, अमुमेवार्थमर्थान्तरन्यासेन द्रढयति—' अन्नच्चिये-'

त्यादि, अन्य एव दन्ता गजवराणां युद्धादिविधुरावस्थासहायाः प्रकाशविशदाश्च, यत्तु चर्वणीयं वस्तु तदन्यैरेव मुखमध्यस्थैः कृष्णै(शै)श्चर्वयन्ति इति गाथार्थः ॥ अथ तुर्यगाथया अमुमेवार्थं व्यनक्ति—

वंसी सुहेण छिज्जइ कड्ढिज्जइ दुक्करं कुडंगाओ । पव्वज्जा सुहगहिया सीलभरो दुव्वहो होइ ॥१८॥(२०)

वंशी-वंशजालिका सुखेन छिद्यते, यच्च कुडङ्गात् मिथोमिलंती शाखा गहनात् कृष्यते तद् दुष्करं इति, प्रथमं दृष्टान्तमुपन्यस्य दार्ष्टान्तिकं योजयति-प्रव्रज्या सुखग्राह्या-सुखेनापि गृह्यते, शीलभरः-अष्टादशसहस्रशीलांगभारो दुर्वहो भवति, स हि धन्यैरेवोह्यते, न त्वधन्यैरिति गाथार्थः ॥ किमिति दुर्वह इति पंचमगाथया कथयति—

वुज्झन्ति नाम भारा तेच्चिय वुज्झंति वीसमंतेहिं । सीलभरो वोढव्वो जावज्जीवं अवीसामो ॥ १९ ॥ (२१)

ऊह्यंते नामेत्याप्तोक्तौ आमन्त्रणे वा, भाराः, ते च्चियशब्दस्य व्यवहितसम्बन्धात् उह्यन्ते विश्राम्यद्भिरेव, शीलभरो हि महादुर्वहो वोढव्यो भवति इह जीवितावधि, विश्रामरहितो निरन्तरमित्यर्थः । अत्रार्थे सह्यगिरिसिद्धव्रतिवरस्य कथा, तथाहि सह्यशैलस्योपत्यकानित्यमण्डनम् । समस्ति कोंकणं नाम, नगरं नगराजितम् ॥१॥ तस्य स्वामी नृपः सह्यशैले धान्यानि भूरिशः। आरोहयति वाहीकैस्तो रोहयतेऽपि च ॥२॥ सुखासनसमारूढोऽन्यदा भूमीपतिर्गिरिम् । आरोहन्नायतोऽपश्यद्वाहीकान् भारभारितान् ॥ ३ ॥ भूरिभारभराक्रान्तांस्तान्निरीक्ष्य नराधिपः । व्यतरद् वरमुद्भूतसद्भूतकरुणामयम् ॥ ४ ॥ मार्गो देयो मयाऽप्येषां, कस्याप्येभिः कदापि न । वरेण तेन तेऽभूवन्नतीव प्रमदस्पृशः ॥५॥ इतश्च सिन्धुदेशीयः, कश्चिद्यतिवरः परः । विषयैर्बाधितो बाढं, प्रव्रज्याभारमत्यजत् ॥६॥ स शुद्धहृदयत्वेन, कृत्यकृत्यमिदं विदन् । दध्यौ स्वं दमयाम्युच्चैर्भारवाहनकर्मभिः ॥७॥ यन्महामोहमाहात्म्यात् ,

तपसा संयमेन च । नात्मा दान्तोऽपरेणापि, भारेण दमयामि तम् ॥८॥ यत् सत्यं दम्य आत्मैव, यदात्मा सैष दुर्दमः । दान्तो ह्यात्मा सुखी नित्यमिह लोके परेऽपि च ॥९॥ ध्यात्वेति ध्यामचित्तोऽयं, मध्येवाहीकमण्डलम् । स्थितोऽतिभारवाहीति, तत्र जज्ञे महत्तरः ॥१०॥ महाभारसमुद्धारसमर्थः स महोक्षवत् । जनेशेन जनेनापि, गौरवात् समदृश्यत ॥११॥ उपत्यकामुपेत्यापि, महा-भारेऽवतारिते । न्यत्करोत्यन्यवाहीकानधिरूढानधित्यकाम् ॥ १२ ॥ भारोद्वाहक्षमे तस्मिन्नपरे भारवाहिनः । दिवाकरे दिवाभीता, इव बिभ्रति मत्सरम् ॥ १३ ॥ गणिकत्वेन वैमुख्यं, प्रायः सुमनसामपि । पश्य मालाप्रसूनानि, विमुखानि शुचीन्यपि ॥ १४ ॥ कर्तुं किमप्यशक्तास्ते, मत्सरच्छुरिता अपि । पात्रस्य शाकिनीवास्थुश्छलान्वेषणतत्पराः ॥ १५ ॥ सोऽन्यदा शैलमारोहन्नायन्तं यतिमैक्षत । सदाऽपि दत्तमन्यैश्चादत्त मार्गं च तस्य सः ॥ १६ ॥ तैश्छलान्वेषिभिः प्राप्य, तच्छलं भूभुजोऽग्रतः । विज्ञप्तं देव ! दत्तोऽपि, वरोऽनेन विलोपितः ॥१७॥ स आहूय महीशेन, भाषितः प्राह साहसी । यद्देवेन वरो दत्तोऽस्माकं भारभृतां किल॥१८॥ ततो यद्यसमर्थत्वाद्यो मया भार उज्झितः । तं यो वहति नित्यं किं, मार्गस्तस्य न दीयते ? ॥ १९ ॥ अथोचुरपरे भारवाहिनः क्रोधवाहिनः । नाभूत्तेन समुत्क्षिप्तं, तृणमात्रमपि प्रभो ! ॥२०॥ तेनाथ पृथ्वीनाथेन, पृष्टेन कथितो भृशम् । भारोऽष्टादशशीलाङ्गसहस्राणां सुदुर्वहः ॥२१॥ अत एव समूह्यन्ते, विश्राम्यद्भिः परे भराः । वोढव्यः शीलभारस्तु, यावज्जीवमविश्रमैः॥२२॥ श्रुत्वेति जातसंवेगास्तेनैव सह केचन । व्रतं जगृहिरेऽन्ये तु, गृहिधर्म्मं जिनोदितम् ॥२३॥ मत्वेति साधुना शीलभर एव सुदुर्वहः । अप्रमत्तेन वोढव्यः, सोढव्यश्च प्रयत्नतः ॥ २४ ॥ इत्यस्यां विवृतौ श्रीमत्प्रद्युम्नस्य कवेः कृतौ । व्रतनिर्वाहणाद्वारं, सप्तमं पर्यपूर्यत ॥ २५ ॥ अथ 'श्लाघा निवाहकर्तृष्वि' त्यष्टमद्वारमारभ्यते, तच्च गाथात्रयेणाह—

ता तुंगो मेरुगिरी मयरहरो ताव होइ दुत्तारो । ता विसमा कज्जगई जाव न धीरा पवज्जंति ॥ २२ ॥
ता वित्थिण्णं गयणं तावच्चिय जलहिणो य गंभीरा । गुरुणो कुलायला ताव जाव न धीरेहिं तोल्लंति ॥ २३ ॥
दुच्चिय हुंति गईओ साहसवंताण धीरपुरिसाणं । बलहत्थी रायसिरी अहव पवज्जा सया स्हेरा ॥ २४ ॥

तावत्तुंगः- उच्चैस्तरो लक्षयोजनप्रमाणत्वान्मेरुगिरिः,मकरध्वजो मकराकरः समुद्रस्तावद् दुस्तरो भवति, तावद्विषमा कार्यगतिर्यावन्न धीराः प्रपद्यन्ते, यथा धीराणां नात्युच्चाशिखरः सुरशिखरी न च पयोराशिरपारो न कार्यं किमपि विषमं तथा प्रवज्याऽपि धीराणां सुकरेति भावार्थः । 'विषमा कार्यगतिस्तावद्यावन्न धीराः प्रपद्यन्ते' इत्यत्र पुरुष एव प्रधानं, यतो गर्भवासस्थितोऽपि पुरुषो राज्यश्रियो रक्षिता भवति, अंगवीरवत्, तस्य कथा तथाहि-पुरोऽभवद्वाराणस्यां,नाम्ना सम्बाधनो नृपः। राज्ञ्यो बह्व्योऽपि पुत्रीणां, सहस्राण्यस्य जज्ञिरे ॥ १ ॥ अपुत्रेऽमुत्र वाऽमुत्र, प्राप्ते रुद्धा पुरी परैः । लोकः सर्वोऽपि शोकेनाकुलोऽतिव्याकुलोऽभवत् ॥ २ ॥ बभूवान्तःपुरं शोकातुरं च सचिवाः पुनः । किंकर्त्तव्यजडा जातास्त्राता कोऽपि न कस्यचित् ॥ ३ ॥ सत्येवं नृपतेः पत्नीमन्तर्वर्त्नीं विभावयन् । सचिवः शुचिधीरेनां, राज्ये तत्र न्यवेशयत् ॥ ४ ॥ तद्गर्भश्च तदाकर्ण्य, परानीकं समागतम् । सर्वपर्याप्तिपर्याप्तः, संज्ञी पंचेन्द्रियोऽपि च ॥ ५ ॥ स्वप्रदेशान् बहिष्कृत्वा, स्वयमन्तःस्थितोऽपि सः । वीर्यवैक्रियलब्धिभ्यां, गृहीताचित्तपुद्गलः ॥ ६ ॥ हस्त्यश्वरथपादातसम्पातकलितां चमूम् । विकुर्वित्वा परानीकेनामा संग्राममातनोत् ॥ ७ ॥ विस्मितास्ते परानीकराजानो नीरपूरवत् । व्युत्सृज्य वैक्रियानीकं, दूराद् दूरतरं ययुः॥८॥ पुरीलोकैर्विचार्याथ, तत् सर्वं देवताकृतम् । तस्याङ्गवीर इत्याख्याऽङ्गस्थवीरत्वतः कृता ॥९॥ स विक्रमसमाक्रान्तविक्रान्ताखिलशात्रवः । स्त्रीश्च कन्याश्च राज्यं च, पपौ गर्भगतोऽपि हि

॥१०॥न चैतदत्यन्तासम्भाव्यमिति शङ्कितव्यं, यदुक्तं पञ्चमांगे—जीवे णं भंते ! गब्भगए समाणे नेरइएसु उववज्जिज्जा?, गोयमा! अत्थेगइए उववज्जिज्जा०, से केणट्ठेणं?, गोयमा ! से णं सन्नी पंचिंदिए सव्वाहिं पज्जत्तीहिं पज्जत्तए वेउव्वियलद्धीए पराणीयं आगयं सोच्चा निसम्म पएसे निच्छुभइ, वेउव्वियसमुग्घाएणं समोहणइ, चाउरंगिणीए सेणाए सद्धिं संगामं संगामेइ, से णं जीवे अत्थकामए रज्जकामए भोगकामए कामकामए अत्थकंखिए रज्जकंखिए भोगकंखिए कामकंखिए अत्थपिवासा(सि)ए रज्जपिवासाए भोगपिवासाए कामपिवासाए तच्चित्ते तम्मणे तल्लेसे तदज्झवसिए तदज्झवसाणे तदट्ठोवउत्ते तदप्पियकरणे तब्भावणाभाविए एअंसि णं अंतरंसि कालं करेइ नेरइएसु उववज्जइ" त्ति, भगवत्यंगे प्रथमशतके सप्तमोद्देशके ॥ कथमनेन गर्भस्थेनाप्येवं विदध इति? तदेव धीरत्वं द्वितीयगाथया विशेषयति—

तावदेव गगनं विस्तीर्णं यावद् धीरैर्नोल्लंघ्यते, तावत् समुद्रस्यापारता यावद्धीरैः नोल्लंघ्यते, तावच्च गुरवः कुलाचलाः यावन्न धीरैस्तोल्यन्त इति ॥ किंच—

द्वे एव गती-द्वावेव मार्गौ साहसवतां-सत्त्ववतां धीरपुरुषाणां-बुद्धिमन्नराणां वलहत्थी-कमलहस्ता राज्यश्रीः अथवा प्रव्रज्या, लक्ष्मीर्हि कमलहस्ता भवति, प्रव्रज्या तु विकस्वरा कमला, मोक्षलक्ष्मी इष्टे यस्याः सा तथा, अपरा हि लक्ष्मीः विकस्वराऽपि संकुचिता, आत्मनाशे वा लक्ष्मीनाशे वा अनवस्थितत्त्वं तस्याः, मोक्षलक्ष्मीः सदा स्मेरा प्रव्रज्याऽतो भवतीति ॥ अत्रार्थे हेलापहस्तितचक्रिसम्पदः सनत्कुमारादयः पूर्वोक्ता एव दृष्टान्ता ज्ञेयाः। इत्यस्यां विवृतौ श्रीमत्प्रद्युम्नस्य कवेः कृतौ। निर्वाहकर्तृश्लाघाख्याष्टमा द्वाः समपूर्यत ॥ १ अथ मोहतरुच्छेदाख्यं नवमं द्वारमारभ्यते—

अइगुरुओ मोहतरू अणाइभवभावणाविगयमूलो । दुक्खं उम्मूलिज्जइ अच्चन्तं अप्पमत्तेहिं ॥ २५ ॥ 

अतिगुरुर्मोहतरुरनादिभवभावना-संसारसंस्कारः स एव विगतं-ज्ञातं प्रख्यातं मूलं यस्य स तथा दुःखं यथा भवति एवमुन्मूल्यते
अत्यंतमप्रमत्तैः-मद्यादिप्रमादपञ्चकरहितैरिति, यदवोचमहं-"अनादितरसंसारसंस्कारदृढमूलभृत्। रागद्वेषद्वयीशाखः,कपायप्रतिशा-
खकः ॥१॥ विषयच्छदनच्छन्नो, दुःखपुष्पैश्च पुष्पितः । मोहद्रुमः फलत्येष, फलेन नरकेन तु॥२॥ स चाप्रमत्तैरुन्मूल्यत इति॥२५॥

अत्रार्थेऽप्रमत्ततायां अगडदत्तराजपुत्रो दृष्टान्तस्तथाहि—

अस्ति शङ्खपुरं नाम, पुरं शङ्खसमुज्ज्वलैः । चैत्यैर्ज्योत्स्नी निशा यत्र, निशाकरकरैरिव ॥१॥ तत्र दत्तदरः शत्रुवर्गे सत्सु कृतादरः ।
नाम्नाऽपि सुन्दरः क्ष्मापः, सुन्दरश्च गुणैरपि ॥२॥ अलसा गमने तस्यानलसा धम्मकर्मणि । सुलसा महिषी स्वर्णकलशोभपयो-
धरा ॥३॥ काले सुखमये याति, पंचगोचरगोचरे । तनयोऽगडदत्तोऽभूत्तयोर्दत्तोरुसंमदः ॥४॥ क्रमात् प्रवर्द्धमानोऽयं, स्पर्द्धमानो
मनोभुवा। समग्रविषयक्रीडाभवनं प्राप यौवनम्॥५॥बाल्यादपि सुदुर्दान्तः, किं पुनः सखिभिर्युतः।बभूव विश्वदाहाय, दहनः पवनैरि-
व ॥६॥ स मानवानशङ्कश्च, निःशूकः शुकलाश्ववत् । दुर्विनीतश्च न कदाचन त्यजति पातकान् ॥ ७ ॥ मांसाशी मद्यपो द्यूतवेश्या-
व्यसनलालसः । परनारी रिरंसुश्च,भ्रमति भ्रमतः पुरे॥८॥समागत्यान्यदा पौरैरगौरैर्मुखरागतः। तद् दुष्टचेष्टितं तथ्यमकथ्यत नृपाग्रतः ॥२२४॥
॥९॥ तेजस्वी वह्निवद् दीप्रशिखामात्रो हि पूज्यते । प्रदीपने तु विध्याप्यः, पयसा रजसाऽपि सः ॥१०॥ तदाऽकर्ण्यमथाकर्ण्य,
नृपः पुत्रेऽपि निष्कृपः । भृकुटिं प्रकटीकुर्वन्नत्यर्थं च समीपगान्॥११॥ अरे पुरः कुमारस्य, कथ्यतां गच्छ दूरतः । मदीयविषयाद्
दंड्यो, मदीयान् विषयान् त्यज॥१२॥ बहुप्रजः प्रजामेकामेवं तं नृपतिस्त्यजन्। त्यजेदेकं कुलस्यार्थे, इति सत्यं व्यधाद्वचः ॥१३॥

तं च व्यतिकरं मत्वा, कुमारः सारमाश्रयन् । अमर्षणमनाः खड्गसखः प्रचलितस्ततः॥१४॥ त्यक्त्वा गिरिसरिद्ग्रामपुराद्यं पितृदेशजजम् (व्रजन्)। पूतां सुरसरिद्वारां, आप वाराणसीमसौ ॥ १५ ॥ गंगाग्रे यत्र पार्श्वस्य, कायकान्त्यायनीनिभैः । तद्देशनासरस्वत्यां, त्रिवेणीसंगमोऽभवत्॥१६॥तत्र भ्रमन्नयं पुर्यामपर्यायधृतश्रमः। दध्यौ वन्ध्यं नृजन्मापि,ममाभून्निष्फलत्वतः॥१७॥मयाऽऽत्मवैरिणा मित्रद्वेषवैरिजनाश्रिता । निखिलो वैरितां नीतो, जनः परिजनोऽपि च ॥१८॥ कलासमीरणं स्वस्य, कलाचार्यं लभे यदि । तत्प्राग्लग्नरजःपुञ्जमधुनाऽपि धुनाम्यहम् ॥ १९ ॥ इति वैराग्यतो ध्यायन्नयं चित्ते नयं दधत् । पुरश्चरन् कलापात्रं, बहुशास्त्रं स ऐक्षत ॥ २० ॥ अपृच्छच्च नरं कंचिद्, वृद्धं कोऽयं महापुमान् ? । कीदृक्कीदृक्कलापात्रं, किंनामा ? किं पठत्ययम् ? ॥ २१ ॥ स प्राहैष कलाचार्यः, कलासु सकलास्वपि। नाम्ना पवनचण्डश्च, प्रचण्डः प्रतिवादिषु ॥ २२ ॥ शिक्षन्ते नृपतेः पुत्राः, शस्त्रशास्त्रकलादिकम् । श्रुत्वेति तत्समीपेऽसौ, जगाम च ननाम च ॥ २३ ॥ उपविष्टश्च पृष्टश्च, कुतस्त्वमिति ? तेन सः । एकान्ते कथयामास, वृत्तान्तं निखिलं निजम् ॥ २४ ॥ कलाचार्येण स प्रोक्तः, शिक्षात्र त्वं स्थितः कलाः । इदं तु गोप्यं वक्तव्यं, नापरस्य परं त्वया ॥ २५ ॥ आदेश इति तेनोक्ते, कलाचार्यो नृपात्मजैः । समं तेन च धामागात्, पत्न्यग्रे भ्रातृजं जगौ ॥ २६ ॥ तेन सा प्रणता पुत्रस्येव स्नानाशनादिना । वात्सल्यं विदधे तस्मै, सुधीर्वस्त्रादिकं ददौ ॥ २७ ॥ ऊचे च स्यन्दनाश्वादि, मदीयं भवनं धनम् । सर्वमेव तवायत्तं, यथेच्छं वत्स ! गृह्यताम् ॥ २८ ॥ स सन्तुष्टमनाः क्रूराध्यवसायपराङ्मुखः । तस्यैव सदने तस्थौ, शिक्षमाणः कलावलिम् ॥ २९ ॥ गुरौ विनयवान् विश्वजनानन्दप्रदायकः । स कालेनाल्पकेनापि, जग्राह सकलाः कलाः ॥ ३० ॥ स विज्ञातकलोऽप्येवं, भवनोद्यानगं सदा । तदेकायत्तचित्तः सन्न मुंचति परिश्रमम् ॥ ३१ ॥ उद्यानस्यान्तिके तस्य, प्रधानश्रेष्ठिनो

गृहम् । अस्ति तुंगं गवाक्षेण, वीक्षमाणमिवाखिलम् ॥ ३२ ॥ तत्रास्ति श्रेष्ठिनः पुत्री, नाम्ना मदनमंजरी । साक्षान्मदनवृक्षस्य,
मंजरीवातिसौरभा ॥ ३३ ॥ स्वावासशिखरारूढा, सा तदालोकनोद्यता । फलं दलं दलं पुष्पं, नित्यं क्षिपति तं प्रति ॥ ३४ ॥
स कलारसिकस्तां न, बालामालापयत्यपि । नेक्षते च गुरोर्भीत्या, विद्यालोभाच्च भूपभूः ॥ ३५ ॥ साऽन्यदा तं कलासक्तं,
मनोभूकृतमानसा । जघानाशोकगुच्छेनातुच्छेनानंगधन्वना ॥ ३६ ॥ बाला विलोकिता तेन, सा तदा सातदा दृशोः । पल्लवाभ-
करा च्छन्नतनूः किंकिल्लिपल्लवैः ॥ ३७ ॥ दध्यौ च किमसौ देवी ?, किं नागस्त्री ? रमा किमु ? । पृच्छाम्येनामथो केयं ?,
किमर्थं वाऽत्र तिष्ठति ? ॥ ३८ ॥ ध्यात्वेत्युवाच बाले ! त्वं, काऽसि ? कस्यापि वल्लभा ? । मां कलाग्रहणासक्तं, कुतः क्षोभ-
यसि क्षणे ? ॥ ३९ ॥ सा विकस्वरनेत्रास्या, प्रोचेऽहं श्रेष्ठिनः सुता । इहैव परिणीताऽस्मि, नाम्ना मदनमंजरी ॥ ४० ॥ यतः
प्रभृति दृष्टोऽसि, विषमायुधविग्रहः । ततः प्रभृति जातो मे, विषमायुधनिग्रहः ॥४१॥ तावदेव सुखं यावन्न कोऽपि क्रियते प्रियः ।
प्रिये हि विहिते सद्यो, दुःखेष्वात्मा नियोज्यते ॥४२॥ वराकोऽयं जनः प्राच्यैः, प्रेर्यमाणः स्वकर्मभिः । स दुर्लभजनप्रेममहाम्भो-
धौ निमज्जति॥४३॥भवान्नरमणी रम्यरमणीजनवल्लभः । न रंस्यते यदि मया, मया तदुपरंस्यते ॥४४॥ श्रुत्वेति ध्यातवानेष, दशा-
वस्था हि कामिनाम् । चिन्ता च संगमेच्छा च, निश्वासाश्च ज्वरस्ततः॥४५॥दाहो देहेऽरुचिश्चान्ते, मूर्च्छाऽथोन्माद एव च । नवम्यां
प्राणसन्देहं, दशम्यां मुच्यतेऽसुभिः ॥४६॥ प्राप्स्यति प्राणसन्देहं, तदियं विरहे मम । स विचिन्त्येति तामूचे, सुधामधुरया गिरा
॥४७॥ राज्ञः श्रीसुन्दरस्याहं, सुन्दरः स्वाख्ययापि हि । सुन्दर्यगडदत्ताख्यः, प्रथमः प्रथितः सुतः॥४८॥कला ग्रहीतुमायातः, कलाचा-
र्यस्य सन्निधौ । त्वां गृहीत्वा गमिष्यामि, प्रयाणदिवसे पुनः ॥ ४९ ॥ इत्युक्त्वा तां समाश्वास्य, तद्रूपगुणरञ्जितः । भुवनं भुवनो-

ध्यानादायातस्तां दधद् धृदि ॥५०॥ अन्यदा राजपुत्रोऽयं, राजमार्गमधि व्रजन्। अश्वाधिरूढः शुश्राव, बहुलं तुमुलं पुरे ॥ ५१ ॥
दध्यौ किं क्षुभितोऽम्भोधिर्ज्वलितो ज्वलनः किमु ? । किं प्राप्तं रिपुसैन्यं वा !, तडिद्दण्डः पपात किम् ? ॥ ५२ ॥ इति चिन्त-
यता तेन, सहसा महसाऽद्भुतः। बलादुन्मूलितालानो, महामात्रसमुज्झितः ॥ ५३ ॥ मारयन् गोचरायातान्, शुण्डादण्डेन
हेलया। साक्षाद्यम इवागच्छन्, तेनैको ददृशे गजः ॥ ५४ ॥ पातयन् परितोऽप्यट्टगृहदेवकुलादिकम्। प्रचण्डः स क्षणादेव,
कुमारस्य पुरोऽभवत् ॥ ५५ ॥ प्राकारादिस्थितो लोकः, कुमारं व्याजहार तम्। करिमार्गादपसरापसरेति महारवैः ॥ ५६ ॥
कुमारस्तुरगं हित्वा, गजमाकारयत् कृती। पीलुः काल इव क्रुद्धोऽन्वधावत च तं प्रति ॥ ५७ ॥ सिन्धुरस्य पुरः सोऽथ, न्यस्त-
वानुत्तरीयकम्। क्रुधाऽन्धश्च मदान्धश्च, विध्यति स्म स तन्मुहुः ॥५८॥ कुमारः पृष्ठभागे तं, प्राहरद् दृढमुष्टिना। बली तत्र भ्रमं-
श्चक्रभ्रमेण तमखेदयत् ॥ ५९ ॥ सुचिरं खेदयित्वा तं, वशीकृत्य च भृत्यवत्। कुमारो गजमारोहदारोहकशिरोमणिः ॥ ६० ॥
तद्वीक्ष्य कौशलं भूपः, सौधसप्तमभूमिगः। पप्रच्छ वेत्रिणं कोऽयं, बालोऽबालो निजैर्गुणैः ? ॥ ६१ ॥ तेजसा तेजसामीशः, सोमः
सोमतया तया। रूपेणाप्रतिरूपेण, हृतकंदर्पदर्प्पकः ॥ ६२ ॥ स प्राहैष कलाचार्यसदने वीक्ष्यतेऽनिशम्। कलापरिश्रमं कुर्वन्,
ज्ञायते न परम्परा ॥ ६३ ॥ राज्ञा हृष्टेन पृष्टेन. कलाचार्येण भाषितम्। अभयाध्येषणापूर्वं, सर्वं तस्य कुलादिकम् ॥ ६४ ॥ तुष्टो
नृपः प्रतीहारं, प्रहित्याकारयत्ततः। कुमारमयमालाने, न्यस्य नागं मुदाऽनमत् ॥ ६५ ॥ पंचांगेन प्रणामेन, प्रणामेच्छुर्महाभुजा।
परिरभ्य दृढं दोर्भ्यामासने स निवेशितः ॥ ६६ ॥ तं च ताम्बूलदानाद्यैः, परिपूज्य नरेश्वरः। निध्यायन्नेनमध्यायदुत्तमः पुरुषो
ह्ययम्॥६७॥ धर्म्मो मूलं सुखानां यो, व्यवसायः श्रियां पुनः। दर्पो मूलं विनाशानां, गुणानां विनयः पुनः ॥६८॥

चित्रं यथा मयूरेषु, यथा हंसेषु सद्गतिः । यथा गन्धश्च पद्मेषु, कुलेषु विनयस्तथा || ६९ || ध्यात्वेति परितुष्टेन, कुशलं च शरी-
रके । कलासु कौशलं चापि, तस्य पृष्टं महीभुजा || ७० || नृपं यावन्न लज्जात्मा, स किंचिदपि जल्पति । तावदाख्यदुपाध्यायः,
सर्वत्र निपुणो ह्ययम् || ७१ || परं सत्स्वपि लज्जंते, स्वगुणेषु मनीषिणः । इतरास्तु न मांत्यङ्गेऽलीकयाऽपि प्रशंसया || ७२ ||
इत्थं कुमारवृत्तेन, मुदिते मेदिनीपतौ । समागत्य नमश्चक्रुः, पौराः प्राभृतसम्भृताः || ७३ || मुदा तदुपदावस्तु, कुमारायार्प-
यन्नृपः । पुनर्नत्वा च ते राज्ञे, विज्ञा व्यज्ञपयन्निति || ७४ || अलीकामलकामृद्ध्या, कुर्वतो देवपूस्तव । दरिद्रमन्दिरातुल्या,
विदधे परिमोषिणा || ७५ || क्षितिक्षिता तलारक्षं, प्रोचेऽदस्त्वयि सत्यपि । मुष्यते नगरं सर्वं, परितः परिमोषिभिः || ७६ ||
स प्राह दिवसा देव !, बहवोऽपि ममाभवन् । तस्करं वीक्षमाणस्य, न स क्वापि तु वीक्ष्यते || ७७ || कुमरेणाथ विज्ञप्तो, नृपो
ममादिश प्रभो !। यथैकागारिकं सद्यो, लभेऽहं सुलभेतरम् ||७८|| सप्तदिन्याऽप्यलब्धेऽस्मिन्, सप्तार्चिषि विशाम्यहम् । राज्ञाऽथ
विदधे आज्ञा, सत्त्ववान् साधयेद्धितम् || ७९ || नत्वा नरपतिं मद्यद्यूतवेश्यासुदुःसहः । मठकांदविकावासोद्यानदेवकुला-
दिषु || ८० || एकागारिकमेकोऽयं, वीक्षमाणो दिवानिशम् । बभ्राम षड् दिनाश्चेत्थं, गतास्तस्य निरर्थकाः || ८१ || सप्त-
मेऽथ दिने दध्यौ, तमादाय मृगेक्षणाम् । यामि देशान्तरं किन्तु?, यद्वा नैताद्धि सज्जतम् || ८२ || निर्वाहः प्रतिपन्ने हि, परमं
पुरुषव्रतम् । तत्र लुप्ते ह्ययं नारी, तन्नारीं कामये कथम् ! || ८३ || प्रतिपन्नस्य निर्वाहं, सर्वथा विदधामि तत् । ध्यात्वेति
निश्चितोऽगच्छदपराह्णे पुराद्बहिः || ८४ || अगालस्य रसालस्य, छायायां यावदस्ति सः । परिव्राड् तावदायातस्तत्रैकस्तस्य
चाग्रतः || ८५ || स तं निरीक्ष्य रक्ताक्षं, रौद्रं कर्कशकुन्तलम् । दीर्घजङ्घं करिकराकारं चायं व्यचिन्तयत् || ८६ || शरीर-

लक्षणैरेतैरमुं मन्ये मलिम्लुचम् । पटुस्तु कपटे वेषं, परिव्राजामयं दधे ॥ ८७ ॥ इति ध्यायन्नयं तेन, सम्बभाषे कुतो भवान् ? । केन कार्येण वा चिन्ताचान्तस्वान्त इवेक्ष्यसे ? ॥ ८८ ॥ ईषन्नत्वा कुमारेण, भावज्ञेन स भाषितः । दारिद्र्यविद्रुतः शून्यचित्तः पुर्यां भ्रमाम्यहम् ॥ ८९ ॥ परः प्राह छिनद्म्यद्य, दारिद्र्यं तव पुत्रक ! । कुमारः प्रोचिवानेवं, स्तात्त्वत्पादप्रसादतः ॥ ९० ॥ अथैतत् कूटसाक्षित्वं, मा भून्मे कर्मसाक्षिणः । ध्यात्वेतीव जगद्दीपो, द्वापान्तरमुपागमत् ॥ ९१ ॥ तमसि प्रसृते दूरात्तमसिव्यग्रहस्तकम् । अग्रस्थितं तदादेशात्, कुमारोऽप्यनुजग्मिवान् ॥ ९२ ॥ स तस्य पश्यतः खात्रं, श्रीवत्साकृति दत्तवान् । आचकर्ष च पेटाद्यं, वस्तु सौवगृहादिव ॥ ९३ ॥ कुमारं तत्र मुक्त्वैष, प्राग्जल्पितदरिद्रनृन् । आनीय न्यस्य पेटाद्यं, तच्छीर्षे शेषमाददे ॥ ९४ ॥ स्वेन भूपभुवा वापि, सर्वेऽपि निरगुः पुरात् । दध्यौ कुमारो हन्म्येनं, छलघातस्तु नोचितः ॥ ९५ ॥ पश्यामि च कृते कस्य, मुष्णाति ? मुषितं कियत्? । क्व चास्य भवनं ध्यायन्नित्ययं दस्युमन्वगात् ॥९६॥ इति सर्वान् पुरोद्यानमागतान् दस्युरब्रवीत् । विश्रम्यते कियदपि, रजनी महती यतः ॥ ९७ ॥ तस्य प्रोक्ते कुमारेणानुमते तत्र तौ स्थितौ । वाहीकास्तु परे सुप्ताः, सर्वे विश्वस्तमानसाः ॥ ९८ ॥ तावुभावपि साशंकौ, द्वयोर्वृक्षस्य पक्षयोः । अलीकनिद्रया सुप्तौ, प्रजिहीर्षू परस्परम् ॥ ९९ ॥ कुमारस्तु करे कृत्वा, करवालं परे तरौ । विमुच्य स्रस्तरं तस्थावप्रमत्तो मुनीन्द्रवत् ॥ १०० ॥ दस्युः परान्निहत्याथ, कुमारं यावदीक्षते । तावदेत्य कुमारेण, स प्रोचे कृष्टरिष्टिना ॥ १०१ ॥ छलघातिन्नरे ! पाप !, पुरसर्वस्वतस्करः । न भवस्यधुनेत्युक्त्वा, कृत्तौ तच्चरणौ क्षणात् ॥ १०२ ॥ कृत्तजंघायुगः सोऽथ, कृत्तबुध्न इव द्रुमः । पृथिव्यां पतितः प्राह, कुमारं स्फारविक्रमम् ॥ १०३ ॥ अहं भुजंगमो नाम, प्रख्यातः परिमोषिषु । गृहं मम श्मशानेऽस्ति, स्वसा वीरमतीति च ॥ १०४ ॥

न्यग्रोधमूले गत्वा त्वं, व्याहरेस्तां यथा शनैः । द्वारमुद्घाटयत्याशु, सा ह्यद्यापि कुमारिका ॥ १०७ ॥ तस्याः करं गृहीत्वा त्वं, गतस्तत्र
सर्वस्वं मे करे कुरु । पश्चात्त्र सुखं तिष्ठेर्गच्छेर्वा नगरे क्वचित् ॥ १०६ ॥ तेनेत्युक्तस्तमाश्वस्य, खड्गमादाय तस्य च । गतस्तत्र
कृते शब्दे, सा द्वारमुदघाटयत् ॥ १०७ ॥ दध्यौ कुमारस्तां वीक्ष्य, बालाऽसौ स्मरसेवधिः । सापि पप्रच्छ कोऽसि त्वं ?, किमर्थ-
मिह चागतः ?, ॥ १०८ ॥ तेनाथ कथिते कृत्वा, दूनाऽप्याकारसंवृतिम् । निवेश्य चासने प्राह, सर्वस्वं जीवितं च ते ॥१०९॥
अत्र वासगृहे तल्पे, त्वं विश्राम्य सुलोचन! । अहं तव कृते गत्वाऽऽनयामि तु विलेपनम् ॥ ११० ॥ उक्त्वेति निर्गतेयं द्राक्,
तस्यां दध्यौ नृपात्मजः । नीतेर्मूलमविश्वासो, विशेषेणाबलाजने ॥ १११ ॥ यच्छोभोऽलीकता मौढ्यमशौचं साहसं छलम् ।
निस्तृंशत्वं च नारीणां, सप्त दोषाः स्वभावजाः ॥ ११२ ॥ गुणप्रेमप्रजामानवपुर्द्रविणयौवनैः । दुर्ग्रहं महिलाचेतः, कथंचन
निगृह्यते ॥ ११३ ॥ कामार्त्तः कामिनीनां स्वं, यो ह्यर्पयति पूरुषः । पतत्ययमसंदेहं, दुस्तरे दुःखसागरे ॥ ११४ ॥ ध्यात्वेति
शय्यामुत्सृज्य, यावत्तस्थौ स दूरतः । तावत्तत्र तया मुक्ता, पपात सहसा शिला ॥ ११५ ॥ सोवाच सोदरं हत्वा, मदीयं क्व नु
यास्यसि ? । श्रुत्वेति धृत्वा केशेषु, तामूचे सुन्दरांगभूः ॥ ११६ ॥ आः पापे! मां निहन्तुं कः, शक्नोति ? मतिशालिनाम् ।
जागर्त्ति परपष्ठ्या यः, स्वपष्ठ्यां किं शयीत सः ? ॥११७॥ उक्त्वेति बालां बालेषु, धृत्वा तां तद्विरागवान् । आख्यद्राज्ञे हतश्चौर-
स्तत्स्वसा नाप्यसौ पुनः ॥ ११८ ॥ प्रातः पातालगेहं तद्दर्शितं नृपतेः पुरः । स च यद्यस्य तत्तस्यार्प्पयत् प्रकृतिवत्सलः ॥११९॥
नृपोऽथागडदत्तायादत्त स्वमिव लोचनम् । सुतां कमलसेनाख्यां, कमलामिव जंगमाम् ॥ १२० ॥ शतं गजानां ग्रामाणामश्वानां
पादचारिणाम् । कोशस्य च क्रमेणैव, सर्वं दशगुणं ददौ ॥ १२१ ॥ इत्थं स लब्धराज्योऽपि, यशःप्रसरवानपि । अलीकं मन्यते

सर्वं, विना मदनमंजरीम् ॥ १२२ ॥ तावल्लज्जा च मानश्च, धर्म्मबुद्धिश्च जायते । द्विषो यावद्विवेकस्य, न लगन्ति शराः स्मरात् ॥१२३॥ इति स्मरार्दिते तस्मिन्नेका नारी समागता । दत्तासनोपविष्टा च, पृष्टाऽऽगमनकारणम्॥१२४॥ सोचे मदनमंजर्या, तवेति समदिश्यत । मां विप्रलम्भमूर्छालां, सिंच संगमवारिणा ॥१२५॥ किंच श्रुत्वा गजक्रीडां, वधं च परिमोषिणः । दुष्टनारीपरित्यागं, भूपतेरपि पूजनम् ॥ १२६ ॥ साधुवादं च लोकेन, क्रियमाणं पदे पदे । विस्मृता सा त्वदीयाशाबन्धाद्धरति जीवितम् ॥ १२७ ॥ युग्मम् ॥ श्रुत्वेति तस्यै ताम्बूलं, दत्त्वा स्वकरकुड्मलात् । तामाह निपुणे ! वाच्या, सा त्वया मोत्सुका स्म भूः ॥१२८॥ प्रस्तावं प्राप्य सर्वं हि, विधास्यामि सुसुन्दरम् । इत्युक्त्वा व्यसृजत्तां स, तया चाश्वासिता परा ॥ १२९ ॥ अन्यदा वाहिकारूढा, ययुस्तत्तातपुरुषाः । पृष्टाश्च कुशलं पित्रोराननाश्रु विमुंचता॥१३०॥ ते प्राहुः कुशलं पित्रोर्दुनोति विरहस्तव । यदि त्वं नैषि सपदि, तत्तयोः प्राणसंशयः ॥ १३१ ॥ निशम्य सम्यगित्येष, नृपं विज्ञप्य चादरात् । आदाय तनयां तस्य, तद्दत्तमुचितं तथा ॥१३२॥ निवेश्य शिबिरं सर्वं, नगर्या बहिरेव हि । स्वयं स्थितः पुरीमध्ये, रथेनैकेन भूपभूः ॥ १३३ ॥ यामिन्याः प्रथमे यामे, संगमादूतिकाऽन्तिके । प्रैष्यनेन निजः प्रेष्यः, स गत्वाऽऽख्यत् प्रयाणकम् १३४ ॥ तया मदनमञ्जर्याः, कथिते साऽचलत्ततः । रोमांचिततनुः सख्या, सहिता च सुदक्षया ॥ १३५ ॥ तामारोप्य कुमारेण, रथे प्रेर्य तुरंगमान् । सैन्ये चागम्य तत्कालं, प्रयाणं कारितं जवात् ॥ १३६ ॥ निरंतरप्रयाणैश्चोल्लंघ्य देशं नरेशितुः । जगामारण्यमध्येऽसौ, तदा चागाद् घनागमः ॥ १३७ ॥ तदा च कटके तस्य, भिल्लधाटी समापतत् । तया च सहसा भग्नं, कुमारस्य बलं बली ॥१३८॥ रथेनैकेन पत्न्या च, युतो राजसुतः स्थितः । एक एव महेभानां, यूथे पंचाननो यथा ॥ १३९ ॥ तन्मार्गणावलीभिन्नं, भग्नं भिल्लबलं क्षणात् । भिल्लाधिपो डुढाकेऽथ, कुमारेण समं रणे

। १४० ॥ अन्योऽन्यं प्रक्षिपन्तौ तौ, क्षिपन्तौ च शरोत्करम् । चिरं मध्यस्थभावेन, जयलक्ष्म्या विलोकितौ॥१४१॥ दध्यावगड- दत्तोऽथ, विपक्षं प्रेक्ष्य दुर्जयम् । बलेनापि च्छलेनापि, निहन्तव्या हि शत्रवः ॥१४२॥ ध्यात्वेति सावधानोऽभूत्, प्रोचे मदन- मंजरीम् । विहितस्फारशृंगारोपविश त्वं ममाग्रतः ॥ १४३ ॥ तथा चक्रे च सा तस्याः, प्रेक्ष्य रूपमनुत्तमम् । हृतः पूर्वं स मारेण, कुमारेणाशु पत्रिणा ॥१४४॥ स पृथ्व्यां पतितः प्राह, नाहमस्मि त्वयाऽऽहतः । मारेण मारिते चक्रे, भवता मृतमारणम् ॥१४५॥ इत्युक्त्वाऽस्मिन् यशःशेषे, कुमारो यावदीक्षते । तावत्कोऽपि कुतोऽप्यस्ति, नैव दैवप्रपंचतः ॥ १४६ ॥ एकेनैव रथेनाथ, समुल्लंघ्य स काननम् । प्राप गोकुलमेकं च, चारुगोकुलसंकुलम् ॥ १४७ ॥ द्वौ नरौ गोकुलादेत्य, कुमारमिदमूचतुः । कुतस्त्वं ? कुत्र याता ? स, प्रोचे शंखपुरे गमी ॥१४८॥ यदि त्वं सप्रसादस्तदावामपि सह त्वया । तत्रायाव इति प्रोक्ते, ताभ्यां सोऽवददो- मिति ॥ १४९ ॥ संयोजयन्नथ प्रोचे, ताभ्यामध्वैष दुर्गमः । चौरो दुर्योधनो नाम, यदाऽऽस्ते सान्वयाभिधः ॥ १५० ॥ मत्तेभो द्विपः सर्पो, व्याघ्रश्चास्ति सुदारुणः । अन्येऽपि श्वापदाः क्रूरास्तदन्येनाध्वना व्रज ॥ १५१ ॥ कुमारः प्राह मा भैष्ट, नये शंखपुरे सुखात् । श्रुत्वेति नहवश्चेलुः, समं तेन च सार्थिकाः ॥ १५२ ॥ तदा कश्चिज्जटी भस्मोद्धूलितः शूलमुद्वहन् । प्रतिचारु- कसंयुक्तः, करे बिभ्रत् करण्डिकाम् ॥ १५३ ॥ महाव्रती प्रशस्तः स, समेत्य नृपनन्दनम् । ऊचे शंखपुरे तीर्थे, दर्शनार्थमुपेम्यहम् ॥ १५४ ॥ दत्ताः सन्ति कियन्तोऽपि, दीनारा मम धार्मिकैः । तान्निधेहि रथे येन, व्रजामो निर्भयं वयम् ॥ १५५ ॥ वहृदित्वेति स द्रव्यनकुलं कुलपांशनः । कुमारायार्पयामास, प्रवरा ददताऽऽशिषः ॥१५६॥ गायन्नृत्यन् जन्तुजातिं, गत्या रावैश्च हासयन् । कथाश्च कथयन्नेष, पथि सार्थमरंजयत्॥१५७॥ तस्मिंस्तपस्विन्येषेऽपि, व्यश्वसीन्न नृपात्मजः । अप्रेरयत् तुरंगांश्च, गहने च समा-

गमत् ॥ १५८ ॥ तपस्विपांशनः सोऽथ, सार्थिकानित्यभापत । अद्यातिथ्यं करिष्यामि, सर्वेषां भवतामहम् ॥ १५९ ॥ वर्षारात्रे
स्थितोऽत्राह, गोकुले बहुगोकुले । अत्रायान् मध्य एतस्यारण्यस्यासन्नमेव तत् ॥१६०॥ एवं निमन्त्र्य शीघ्रं स, गत्वाऽऽगच्छत् स
मस्करी । दधिदुग्धघृतादीनां, पूर्णैर्भाण्डैर्महत्तरैः ॥ १६१ ॥ कुमारोऽनेन विज्ञप्तो, मधुरैर्वचनैस्तदा । अद्यास्माकं कृपालो ! त्वं,
कर्त्तुमर्हसि वांछितम् ॥१६२॥ उक्तं ततः कुमारेण, शिरो मे व्यथते भृशम् । अन्यच्च व्रतिनामन्नं, न मेऽशेनापि कल्पते ॥१६३॥
भणिताः सार्थिकाः सर्वे, कुमारेणाक्षिसंज्ञया । यदनेनान्ध आनीतं, न तद्भोज्यं कदापि वः ॥१६४॥ अवमत्य कुमारं तं, बुभुजुः सार्थिकाः
समम् । भुक्तमात्रा विनष्टास्ते, भुवि पेतुरचेतनाः ॥ १६५ ॥ ज्ञात्वा तान् सार्थिकान् सर्वान्, विपन्नान् शरसंचयम् । मुंचन् व्रती
कुमारस्य, वधाय द्रुतमुद्यतः ॥१६६॥ क्रुद्धः कुमारो वेगेन, वंचयित्वा शरव्रजम् । अर्धचन्द्रेण हतवानिमं मर्मस्पृशा ततः ॥१६७॥
मह्यां पपात दस्युः स, जीवशेषोऽब्रवीदिदम् । मलिम्लुचो यो दुर्जेयो, दुर्योधनोऽहमेव सः ॥१६८॥ चित्तेन रञ्जितोऽहं ते, दृष्ट्वा
निर्भीकचित्तताम् । सविक्रमां महाभाग !, शृण्वेकं वचनं मम ॥ १६९ ॥ अहं जीवितशेषोऽस्मि, त्वदीयेन पतत्रिणा । परं प्रसन्नो
यद् घातो, वैरिणोऽपि प्रशस्यते ॥१७०॥ कथयामि हितं वाक्यं, तत्त्वं समवधारय । कुर्यास्तथैव यद् दृष्टो, मया सत्त्ववतां परः॥१७१॥
॥१७१॥ वामेनास्य गिरेः सिन्धुद्वयान्तर्देवमंदिरम् । अस्त्यस्य पश्चिमे भागे, सज्जिता तलिना शिला ॥ १७२ ॥ तां प्रेर्य वामतो
भूमिगृहे कार्यं प्रवेशनम् । जयश्रीनाम पत्न्यस्ति, तत्र मे नवयौवना ॥ १७३ ॥ द्रव्यं च बहु तत् सर्वं, कुर्वीथाः निजहस्तगम् ।
त्वया काष्ठानि देयानि, मदीये जीविते गते ॥ १७४ ॥ एवं वदन्नयं दस्युः, सहसा प्राप पंचताम् । कुमारो मेलयित्वाऽस्य,
दारूणि दहनं ददौ ॥ १७५ ॥ गतो रथमथारुह्य, तदाख्यातप्रमाणतः । शिलामुद्घाट्य शब्दं स, विदधे दस्युयोषितः ॥१७६॥

द्विधापि रमणीया सा, समागत्य तमालपत् । कोकिलामधुरालापं, यदेहि गेहमभ्यतः ॥१७७॥ तद्रूपं प्रेक्षमाणोऽसौ, सानन्दं नृपनन्दनः । इतो मदनमंजर्याऽपहस्तेनास्तलज्जया ॥ १७८ ॥ ऊचे च त्वत्कृते बन्धुः, पिता माता सखीजनः । मयाऽत्याजि गृह त्वमन्यासक्तोऽसि निस्त्रपः ॥ १७९ ॥ तच्छ्रुत्वा धनमुज्झित्वा, रथमारुह्य चाग्रतः । गच्छन्नतुच्छधीर्भिल्लाश्रयतः पश्यति स्म सः ॥ १८० ॥ साशंकोऽथ दिशः पश्यन्नपश्यन् मदवारणम् । शुभ्रवर्णं महाकायं, तरुभंगप्रभंजनम् ॥ १८१ ॥ तं वीक्ष्य सहसोद्विग्नां, चित्ते मदनमंजरीम् । सम्बोध्योत्तार्य च रथाच्चचाल कलभं प्रति ॥ १८२ ॥ उत्तरीये पुरो न्यस्ते, सिन्धुरे वेधदायिनि । कुमारः कुशलः शिक्षावशेनैनं वशे व्यधात् ॥१८३॥ सुचिरं खेदयित्वा तं, भयभीतं विमुच्य च । रथारूढोऽग्रतो व्याघ्रं, व्यात्तवक्त्रं व्यलोकत ॥१८४॥ रथं हित्वा भुजं वामं, पटेन परिवेष्टितम् । मुखे तस्य ( क्षिप्त्का ) परेतं तं, कृपाण्या निष्कृपो व्यधात् ॥१८५॥ पुरो व्रजन्नथ श्यामं, फणामण्युग्रभासुरम् । सोऽपश्यद् दृग्विषं सर्प्पं, दूरादपि पराङ्मुखम् ॥१८६॥ दृग्बन्धं मुखबन्धं च, विधाय सोऽनवधया । विद्यया खेदयित्वा तं, त्यक्त्वा चाचलदग्रतः ॥१८७॥ इत्थमुल्लंघ्य कान्तारं, कान्तारंजनकोविदः । जितशंखपुरं कीर्त्या, स शंखपुरमासदत् ॥१८८॥ तमायातं नृपो मत्वा, पुनर्जातमिवांगजम् । प्रत्युज्जगाम त चैप, ननाम लुठदंगणः ॥१८९॥ तदा पल्लीपतित्रस्तं, कुमारस्याखिलं बलम् । अपरेण पथा पुर्यां, तत्सेवायामिवागमत् ॥ १९० ॥ अथ सर्वसहाधीशस्तदुच्चैर्गोपुरं पुरम् । मंचातिमचकलितं, कारयामास तत्क्षणात् ॥ १९१ ॥ प्रावेशयदथो हस्तिस्कन्धारूढं महामहात् । नृपो नरविमानस्थवधूद्वययुतं सुतम् ॥ १९२ ॥ भोजनानन्तरं पृष्टः, सर्ववृत्तान्तमंगजः । आख्यत् पित्रे खिदाहर्षभयविस्मयदायकम् ॥ १९३ ॥ अन्यदा मानिनीमानम्लानिकृन्मलयानिलः । प्रावर्त्तत वसन्तर्तुः, कर्त्तुमुन्मादिनं जनम् ॥ १९४ ॥ गतेऽथ सुन्दरे राज्युद्याने

सुरभिसुन्दरे । तमन्वगात् समग्रोऽपि, जनः परिजनस्तथा ॥ १९५ ॥ कुमारोऽपि सुहृद्वर्गसहितः प्रिययाऽन्वितः । निरीक्ष्यमाणः पौरीभिरगादुद्यानमुद्यतः ॥ १९६ ॥ मारोपमः कुमारोऽथ, रतिप्रतिमया तया । समं मदनमंजर्याऽरमतारामसध्यगः ॥ १९७ ॥ स्थित्वा चिरं विनोदेन, कुसुमावचयान्वितः । कुमारः सुचिरं स्थित्वा, यावत्किल चलिष्यति ॥ १९८ ॥ तावदाशीविषेणैषा, दष्टा मदनमंजरी । दष्टा दष्टेति जल्पन्ती, पत्युत्संगे पपात सा ॥ १९९ ॥ यावन्मन्त्रादिभिस्तस्याः, प्रतिकारं करोत्ययम् । विषमेण विषेणैषा, तावज्जज्ञे विचेतना ॥ २०० ॥ कुमारो मूर्च्छितो लब्धचेतनो विललाप च । स्वां संवृत्य स्वयं चित्यामशून्यामकरोदथ ॥ २०१ ॥ तत्र प्रियतमां क्षिप्त्वा, स्वं च प्रक्षेप्तुमुद्यतः । सन्धुक्षाप्य त्वसौ यावज्ज्वलनं ज्वलयिष्यति ॥ २०२ ॥ तावत् खेचरयुग्मं द्राक्, तत्रागाद्गगनाध्वना । अपृच्छच्च कुतो हेतोः, स्वं क्षिपस्याशुशुक्षणौ ? ॥ २०३ ॥ स प्राह प्रेयसीयं मे, प्राणास्ते प्रथमं गताः । कुणपोऽस्मि च तद्धीनः, संगतं ज्वलनं ततः ॥२०४॥ त्वत्प्रियां जीवयामीति, प्रोच्य खेटयुगेन सा । अभिमन्त्र्य जलं सिक्ता, निद्राक्षय इवाबुधत् ॥ २०५ ॥ सुसंवृत्तशरीराऽथ, किमेतदितिवादिनी । समुत्तस्थौ क्षणादेव, कुमारस्य मुदा समम् ॥२०६॥ विद्याधरयुगे तस्येत्युपकृत्य गते सति । तस्मिन् स सप्रियः प्रत्यासन्नदेवकुलेऽगमत् ॥२०७॥ आनये वह्निमह्नाय, यावत्तावदिह त्वया । स्थेयं प्रोच्येति तां यावत्, वह्निमादातुमेति सः ॥ २०८ ॥ तावद्देवकुलेऽपश्यदुद्योतं विस्मयावहम् । आगतेन च सा प्रोचे, मयोद्योतोऽत्र वीक्षितः ॥२०९॥ सोचे निजकरस्थाग्नेर्ज्वलितस्य समीरणात् । संक्रान्तो भवतोद्योतः, प्रिय ! दृष्टो भविष्यति ॥ २१० ॥ तदा खड्गं समर्प्यासौ, महीनिहितजानुकः । धीरो धमत्ययं यावद्धनंजयमधोमुखः ॥ २११ ॥ तावत्कराग्रतस्तस्याः, करवालं महीतले । पपात निष्परीवारं, स पप्रच्छ च तामृजुः ॥२१२॥ सा प्राह मनसा मोहात्, पपातासिर्ममाग्रतः ।

प्रज्वाल्य ज्वलनं तत्र, गमिता रजनी च सा ॥२१३॥ प्रातः स्वभवनं गत्वा, दम्पती मुदिताविमौ । कथयामासतुर्वृत्तं, वृत्तान्तं
खेदहर्षदम् ॥ २१४ ॥ उभयोरपि सम्पन्नसमग्रहितयोस्तयोः । ययौ सुखमयः कालः, पंचगोचरचर्यया ॥ २१५ ॥ वाहकेल्यां
गतोऽन्येद्युरश्वेनापहृतो वने । तं विमुच्य भ्रमन्नेकं, जिनवेश्म व्यलोकयत् ॥२१६॥ तत्र साहसगत्याख्यं, चारणश्रमणाधिपम् ।
बहुभिः श्रमणैर्युक्तमुपयुक्तं सदागमे ॥ २१७ ॥ धिष्ण्येशमिव धिष्ण्येषु, मणिष्विव च कौस्तुभम् । द्रुमेष्विव च कल्पद्रुं, मुनिष्वेवं
ददर्श सः ॥२१८॥ युग्मम् ॥ गत्वा नत्वा च लब्धाशीरुपाविक्षत् तदन्तिके । पप्रच्छावसरं वीक्ष्य, चैवं विनयवासनः ॥ २१९ ॥
प्रभो ! केऽमी नराः पंच, रूपयौवनशालिनः । वैराग्यमार्गमापन्नाः, स्वतो दीक्षां जिघृक्षवः ? ॥ २२० ॥ चतुर्ज्ञानधरः सोऽथ,
प्रोवाच मुनिपुंगवः । अत्रास्ति नगरी पल्ली, भिल्लीहल्लीसकैर्युता ॥ २२१ ॥ भिल्लभर्त्ता भुनक्त्येतां, धरणीधरनामकः । ससैन्यश्च
तदा तस्य, पल्ल्यामागान्नृपात्मजः ॥ २२२ ॥ भिल्लाधीशेन तत्सैन्ये, नाशिते तावुभावपि । युयुध्येते चिरं तेन, स्वजायाऽथ
पुरस्कृता ॥ २२३ ॥ पश्यंस्तांश्च शराधीशः, कुमारेण स मारितः । सप्रिये च गते तस्मिन्, पंचैते भिल्लबान्धवाः ॥ २२४ ॥
वैरनिर्यातनाहेतोरन्वगुस्तं रथाध्वना । गतैः शंखपुरे दृष्टः, कुमारः परिवारयुक् ॥२२५॥ वीक्षमाणा अपि च्छिद्रं, लभन्ते तस्य ते
नतु । दृष्टः स चान्यदोद्याने, जायामात्रपरिच्छदः ॥ २२६ ॥ चिन्तयत्सु वधोपायं, तेषु दष्टाऽहिना प्रिया । मृतेति स्वं तया
सार्द्धं, यावत् क्षिपति सोऽनले ॥ २२७ ॥ विद्याधरयुगेनैत्य, तावत् स्वस्थीकृता च सा । प्रत्यासन्ने देवकुले, मुक्त्वा तां सोऽग्नये
गतः ॥ २२८ ॥ प्रच्छन्नास्तत्र पंचापि, सन्ति लब्धच्छला अमी । भ्रातृघातकघातार्थं, लब्धावसरतोपिणः ॥ २२९ ॥
अमीपां च कनिष्ठेन, प्रदीपश्चिरगोपितः । प्रकाशितोऽथ सा वीक्ष्य, तं तस्मिन् नन्वरज्यत ॥ २३० ॥ ऊचे च भव मे भर्त्ता, स

प्राहेच्छाम्यहं ननु । परं जानाति ते भर्त्ता, यदि तन्मे न जीवितम् ॥ २३१ ॥ सोचेऽहं निहनिष्यामि, त्वत्प्रत्यक्षं निजं पतिम् । ततो निर्वापितो दीपः, स समेतश्च वह्नियुक् ॥ २३२ उवाच च मयोद्योतो, दृष्टः सोचे त्वया प्रिय ! । स्वकरस्थं ज्वलद्वह्न्युद्योतो दृष्टो भविष्यति ॥ २३३ ॥ खड्गं तस्याः समर्प्यैष, यावज्ज्वालयतेऽनलम् । तावदाकृष्य सा तस्य, कण्ठे घातममुंचत ॥ २३४ ॥ कृपाणमपहस्त्यैष, कृपालुस्तमवंचयत् । निजांगजानामाख्याय, तत्तादृक् चरितं स्वयम् ॥ २३५ ॥ एतद्विलसितं वीक्ष्य, निरपेक्षं सुदारुणम् । एते ममाऽन्तिके पंचाप्यागुर्वैराग्यसंगताः ॥२३६॥ आकर्ण्येति स्वकं वृत्तं, सम्भ्रान्तो भूपभूर्हृदि । दध्यावहो महेलानां, चरित्रमातिदारुणम्॥२३७॥ विषव्याघ्राहिशार्दूलशरभार्कजरक्षसाम् । हेलयाऽऽभिर्महेलाभिश्चरितं त्वरितं जितम्॥२३८॥ तदहो अधमत्वं मे,यदस्याः कारणान्मया । अपकीर्त्तिरुरीचक्र,कुलं च मलिनीकृतम्॥२३९॥तावत् स्फुरति वैराग्यं,लज्जा शीलं कुलं यशः । दमो गुरुभ्यः शंका च, यावन्न स्त्रीवशो नरः ॥२४०॥ दृष्टनष्टाखिले द्रव्ये, सुखदुःखसमाकुले । द्राक् संयोगावियोगाढ्ये, संसारे हि सुखं कुतः?॥२४१॥ इत्यादि भावयन्नेष, परं संवेगमागमत् । नत्वाऽऽह भगवन्नेतच्चरितं निखिलं मम॥२४२॥एतद्बन्धुनिहन्ताऽहमुद्विग्नो भववासतः । तद्दीक्षायाः प्रदानेनानुग्रहः क्रियतां मयि॥२४३॥गुरुणा दीक्षितश्चैष, श्रामण्यं पर्यपालयत् । क्रमात् कर्म्मक्षयं कृत्वा, निर्वाणं च गमिष्यति ॥ २४४ ॥ अप्रमत्तोऽगडदत्तो, यथाऽयं सुखभागभूत् । भावतो यतयस्तद्वल्लभन्ते परमं पदम् ॥ २४५ ॥ इत्थं सुन्दरभूपनन्दनमुनेर्गेहस्थितिर्द्रव्यतस्तेन । स्तेनभगिन्यवञ्चनफलां मत्वा रतिमास्थिताम् ॥२४६॥ बोधस्यावसरे तु भावत इमां प्रेमावनद्धप्रियां, मोहद्रुच्छिदुरां महाव्रतफलां कः स्यात् प्रमत्तो मुनिः ? ॥ २४७ ॥ इत्यस्यां विवृतौ श्रीमत्प्रद्युम्नस्य कवेः कृतौ । मोहक्षितिरुहोच्छेदा, नवमी द्वारपूर्यत ॥ २४८ ॥

अथ दशमं धर्म्मसर्वस्वदेशनाख्यं द्वारमारभ्यते,—

खणभंगुरे असारे मणुयभवे अब्भपडलसारिच्छे । सारं इत्तियमित्तं जं कीरइ सोहणो धम्मो ॥ २६ ॥

क्षणभंगुरे शूलविषविषधरविशूचिकानलशस्त्रवातपित्तश्लेष्मोद्रेकसन्निपातादिभिः अत एव चासारे—तुषमुष्टिकल्पे मनुजत्वे-मानुष्यभवे, औपम्यमाह— अभ्रपटलसदृक्षे, यथाऽभ्रपटलं कुतोऽप्यायातं क्वापि च गतं चेति न ज्ञायते तथा छद्मस्थेन मनुजत्वमपीति भावः, सारमेतावन्मात्रं यत् क्रियते शोभनो धर्म्मः—सर्वविरतिरूप एव, एतावता प्रकारेण मनुष्यभवासारत्वं सद्धर्म्मकरणं च वदता सकलप्रकरणार्थनिर्वाहोऽप्युपन्यस्त इति मतिमद्भिर्विचार्यं ॥ इह केचिन्महात्मानः सम्यक् परिज्ञातसर्वज्ञागमाः स्वयंविदिततत्त्वाः सद्धर्म्मस्थिरमानसाः परं जीवं अविदितपरमार्थतया धर्म्मेऽस्थिरमपि स्थिरं कुर्वंति, अत्रार्थे अभयकुमारो मंत्री दृष्टान्तः, तथाहि–अस्थिरोऽपि स्थिरो धर्म्मे, जीवः कार्यो महात्मभिः । यथाऽभयकुमारेण, स्वबुद्ध्या काष्ठभारिकः ॥१॥ पुरा पुरे राजगृहे, श्रीश्रेणिकनृपांगजः । नाम्नाऽभयकुमारोऽभूत्, सुनन्दाकुक्षिसम्भवः ॥२॥ पंचांगभूषणं राजकार्यं सम्यक्त्वमुद्वहन् । जज्ञे द्वादशसंख्येषु, भूपालेषु व्रतिष्विव ॥ ३ ॥ बुद्धीश्चतस्रो धर्म्मस्य, भिदा इव विवर्द्धयन् । यः प्राप परमां काष्ठां, मंत्रित्व-श्रावकत्वयोः ॥ ४ ॥ गणभृत्पंचमः पंचमहाव्रतभृदन्यदा । सुधर्म्मा समवासार्षीत्, महर्षीणां शतैः श्रितः ॥५॥ निनंसवस्तमा-बद्धश्रेणिकाः श्रेणिकादयः । समाजग्मुर्जनास्तस्माद्देशनां चापि शुश्रुवुः ॥६॥ घनागमात्ततः स्वादु, संवरं विनिपीय ते । गततृष्णा निजनिजं, वेश्मागुश्चातका इव ॥ ७ ॥ कोऽप्युद्विग्नोऽन्यदा काष्ठभारात्कर्म्मभरादिव । बुद्ध्वा तस्य प्रभोः पार्श्वे, प्राव्रजत्काष्ठ-भारिकः ॥ ८ ॥ भिक्षाद्यर्थमटत्यस्मिन्नुपहासाज्जना जगुः । महात्मा महतीमृद्धिमयं मुक्त्वाऽग्रहीद् व्रतम् ॥९॥ सोढुं तच्चासहः

सोऽथ, गणनाथं व्यजिज्ञपत् । सोऽपि प्रातर्विहारो न, इत्याख्यदभयाग्रतः ॥१०॥ कल्पेऽपूर्णे कुतो हेतोर्विहार इति सोऽवदत् । सूर्युक्ते कारणे प्रातः, स्थेयमुक्त्वेति चागमत् ॥ ११ ॥ रत्नकोटीत्रयं कोशात्, प्रातः कृष्ट्वा चतुष्पथे । विमुच्याघोषयद्रत्नान्यागत्यादत्त हे जनाः! ॥ १२ ॥ तच्चाकर्ण्यायुर्लोकास्तानूचेऽभयमंत्रिराट् । जलाग्निस्त्रीवर्जको यस्तस्य स्याद्रत्नसंचयः ॥ १३ ॥ ऊचुर्जनास्त्रयं त्यक्तुमिदं कः स्यात् प्रभुः? प्रभो! । विमुक्ते च त्रयेऽमुत्र, को यत्नो रत्नसंग्रहे? ॥१४॥ मंत्र्यूचे तत्त्रयत्यागाद्रत्नकोटीत्रयत्यजः । काष्ठभारिकसाधोस्तदुपहासं विधत्त किम्? ॥१५॥ मन्त्री न्याह्वन्मुनिं रत्नत्रयकोटीं निनाय ताम् । नैच्छत् तां तत्त्रयत्यागी, धर्मे जातस्त्वसौ स्थिरः॥१६॥ समारुह्य मुनिर्निष्ठाकाष्ठायां काष्ठभारिकः । जगाम द्युसदां धाम, क्रमाल्लब्धं परं पदम्॥१७॥

किंच केचिज्जिनेन्द्रस्य, दर्शनाल्लब्धदर्शनाः। स्युस्तदुक्तस्ततो धर्म्मः, सार एको नृजन्मनि ॥ १ ॥ करिणः कालिकुण्डोऽभूत्कुक्कुटात् कुक्कुटेश्वरः । कथ्यतेऽत्रस्तयोराख्या, सावधानैर्निशम्यताम् ॥ २ ॥ उत्तमांगसमांगाख्यदेशेऽस्ति क्षितियोषितः । चम्पा चम्पकमालेव, पुरी पौरालिमालिता ॥ ३ ॥ तत्रास्ति द्विड्करकण्डुः, करकण्डुर्महीपतिः । लोको नालोकते यत्रातंकमातंकहारिणि ॥ ४ ॥ तस्याः पुरो नदूरे चास्त्यटवी स्फुटवीतभृत् । नाम्ना कादम्बरी कादम्बरी श्वापदसम्मदे ॥ ५ ॥ तस्यां बलिरिवास्त्युच्चैः, कलिर्नाम्ना महीधरः । सफलद्रुफलस्तोमैरार्थिसार्थं कृतार्थयन् ॥ ६ ॥ उपत्यकायां तस्यास्ति, स्वामृतस्वादुतामदात् । अधःकृतसुधाकुण्डं, कुण्डं नाम सरोवरम्॥७॥ तत्रास्ते हस्तिनीयूथनाथः प्रथितविक्रमः । नाम्ना महीधरो हस्ती, महीधर इव स्थिरः ॥ ८ ॥ छद्मस्थोऽपि हि निश्छद्माऽन्यदा पार्श्वजिनेश्वरः । कलिकुण्डसदेशस्थप्रदेशे व्यहरद्विभुः ॥ ९ ॥ यत्रास्तमितवासी स, कायोत्सर्गेण तस्थिवान्। आत्मनः संज्ञया जन्म, जानुदघ्नमिवादिशन् ॥ १० ॥ सोऽथ यूथाधिपस्तत्र, प्रभुं प्रेक्ष्य तथा स्थितम् ।

जातजातिस्मृतिश्चित्तेऽचिन्तयत् प्राग्भवं निजम् ॥ ११ ॥ विदेहेषु पुरे हेमंधर इत्याह्वयोऽभवम् । लोकस्य केलिपात्रत्वाद्वामनोऽहं मनोहरः ॥ १२ ॥ तथाभूतं च मां भूताभिभूतमिव बालकाः । विभाषन्ते युवानश्च, विटाश्चोपहसन्त्यलम् ॥ १३ ॥ इत्थं च हस्यमानस्य, त्रास्यमानस्य सर्वतः । मूर्खस्य मे मुमूर्षाऽभूदतिवैराग्यतस्ततः ॥ १४ ॥ शाखिनो नम्रशाखस्य, शाखायां स्वं विबन्धयन् । श्राद्धेन सुप्रतिष्ठेन, दृष्टः पृष्टश्च कारणम् ॥ १५ ॥ मया यथातथं तस्य, कथिते स जगाद माम् । वामनः कर्म्मणा त्वं तद्, उच्छेत्तुं वामनं कुरु ॥१६॥ कथं न्विति मया प्रोक्ते, स प्राह न हि साहसम् । कर्म्मवामनतोपायः, किन्तु सम्यक्त्वनिश्चयः ॥ १७ ॥ तदेहि सुगुरोः पार्श्वे, जिघृक्षुर्व्रतमस्म्यहम् । त्वमाश्रयस्व सम्यक्त्वं, चारित्रमहमाश्रये ॥१८॥ मया गत्वाऽथ सम्यक्त्वमेवंरूपमुपाददे । अर्हन् देवो गुरुः साधुर्धर्म्मस्तदुदितस्तथा ॥ १९ ॥ तत्प्रपाल्यानशन्यन्ते, निदानं च व्यधामहम् । उच्चैर्भूयासमित्यार्य !, मृत्वाऽभवमिभो वने ॥ २० ॥ छद्मस्थजिनलिंगं प्राग्गुरुणेति निवेदितम् । भवोऽयं दूषितोऽप्युच्चैर्दर्शनादस्य भूषितः ॥२१॥ सरसः सरसैरस्य, सुरसैः पूजयाम्यमुम् । ध्यात्वेत्ययं व्यधाद्भावबन्धुरः सिन्धुरस्तथा ॥ २२ ॥ प्रपाल्य प्राच्यसम्यक्त्वमन्तेऽनशनमागसौ । सुविशुद्धान्तरप्रौढव्यन्तरत्वमवाप च॥२३॥ इदमद्भुतमुद्भूतं, चरितं करकण्डुना । श्रुत्वाऽऽयातेन नो दृष्टः, स्वामिंस्त्वं तदशोचयत् ॥ २४ ॥ एकोऽपि हस्तिनस्तस्य, हस्तः शस्तो जिनार्चया । उभावपि तमोग्रस्तौ, हस्तौ मे तदभावतः ॥२५॥ विश्वाघातकरो विश्वभूषणं चिन्तितप्रदः । स्वामी जगाम हीं रत्नमजाग्रत इवाग्रतः ॥२६॥ स्वामिनोऽनेकपस्यास्य, प्रसादो यदनेकपे । तद्युक्तं यत्तु मामेकं, न पाति स्म तदद्भुतम् ॥ २७ ॥ इति स्वं शोचतस्तस्य, धरणेन्द्रप्रसादतः । नवहस्तप्रमाणाऽभूत्, पुरतः प्रतिमा प्रभोः ॥२८॥ ततो जय जयेत्युच्चैः, स्तुवंस्तामनमन् नृपः । चैत्यं च कारयांचक्रे, तत्र तस्याः

प्रमाणतः ॥ २९ ॥ स नित्यमर्चामर्चायास्त्रिसंध्यं कुरुते त्रिभिः । प्रकारैः पुष्पनैवेद्यैस्त्रिकालप्रेक्षणक्षणैः ॥ ३० ॥ कलिकुण्डाभिधं तीर्थं, प्रसिद्धिं नयति स्म सः । तत्र च व्यन्तरो हस्ती , स्थेरोऽधिष्ठातृभावभाक् ॥ ३१ ॥ तत्र भक्तिकरे लोके, प्रत्ययान् विविधान् व्यधात् । नवयन्त्र्यादियन्त्राणि, मंत्राण्यपि च नैकशः ॥ ३२ ॥ षड्धर्म्मसिद्धिदानाय, स चक्रे व्यन्तरस्तथा । ग्रामवासी जनो ग्रामाभिलापेनोच्यते यथा ॥ ३३ ॥ कलिकुण्डनिवासित्वात्, कलिकुण्डो जिनस्तथा । तीर्थं श्रीकलिकुण्डाख्यं, करकण्डुप्रकाशितम् ॥ ३४ ॥ गजव्यन्तरसान्निध्याज्जायते सर्वसिद्धिदम् । इत्यदः कलिकुण्डस्य, चरितं गदितं विभोः ॥ ३५ ॥

कुक्कुटेश्वरसम्बन्धोऽधुना प्रोच्यते—पार्श्वप्रभुः पुरा कायोत्सर्गे राजपुरे स्थितः । तत्रास्ति हस्तिस्वी ( रत्नी ) येश्वरक्ष्मापतिरीश्वरः ॥ १ ॥ वाहकेल्यां गतस्तस्य, बन्दी भाणोऽर्जुनाभिधः । प्रभुं प्रेक्ष्य स्तुतिं चक्रे, सद्भूतगुणकीर्त्तनैः ॥२॥ देवायं देवदेवोऽश्वसेनस्य नृपतेः सुतः । च्यवनोत्पत्तिदीक्षाभिः, सूतात्रिजगतीसुखः॥ ३ ॥ श्रुत्वेति नागादुत्तीर्णो, नत्वाऽथालोकयन् विभुम्। मूर्च्छोत्थितो नृपः पृष्टो. मन्त्रिणा प्राग्भवान् जगौ ॥४॥ चारुदत्तः पुरा भूत्वाऽथ वसन्तपुरेऽभवम् । पुरोहितसुतो नाम्ना, दत्तः कुष्ठादिरोगवान् ॥ ५ ॥ गङ्गायां निपतन् दृष्टो, बोधितश्चारणर्षिणा । कथयित्वाऽऽन्तरसर्वरोगहारि रसायनम् ॥ ६ ॥ पुष्टिर्व्रतानां पञ्चानामिन्द्रियाणां च शोषणम् । जयो मोहकषायाणामिति पञ्चदशौषधीः ॥ ७ ॥ तदुक्तं तत्तथा कुर्वन्नन्यदा चैत्यमागमत् । दृष्टः पुष्कलिनाम्नाऽहं, श्रावकेण नमन् जिनम् ॥८॥ सोऽपृच्छच्च मुनिं मौशालिनं गुणसागरम् । चैत्येऽस्यागमने दोषः, कुष्ठिनोऽस्य भवेन्नवा ? ॥ ९ ॥ मुनिरूचेऽस्य को दोषो, दूरतो नमतो जिनम्? । अद्यापि चास्य कर्म्मास्ति, कुक्कुटत्वभवप्रदम् ॥ १० ॥ तदकर्ण्यमथाकर्ण्य, हृदि खेदमहं दधत् । बोधितः पुनरप्येवं, गुरुणा करुणावता ॥ ११ ॥ तदा वीक्ष्य मुनिं जातिस्मरोऽनशनतो

मृतः। भावी त्वमीश्वरो नाम, राजा राजपुरीश्वरः ॥ १२ ॥ तुष्टोऽहमिदमाकर्ण्य, तत् सर्वमनुभूय च । ततोऽधुना विभुं वीक्ष्य, जातिस्मरणमाप्नुवम् ॥ १३ ॥ मंत्रिणः कथयित्वेत्थमीश्वरो जगदीश्वरम् । नत्वा गत्वाऽथ संगीतमविगीतं व्यधापयत् ॥ १४ ॥ विभौ तु विहृते तत्र, स प्रासादमकारयत् । बिम्बमप्रतिबिम्बं च, सम्प्रीतः प्रत्यतिष्ठिपत् ॥ १५ ॥ यत्कुक्कुटवरेणायमीश्वरेण तथा कृतः । ततः ख्यातमभूत्तीर्थं, कुक्कुटेश्वरसंज्ञया ॥ १६ ॥ कुक्कुटेश्वरतीर्थस्य, निर्माणात् कर्म्मणां क्षये । क्रमाद्भावीश्वरो भूमीश्वरः सिद्धिपुरीश्वरः ॥ १७ ॥ इति श्रीकलिकुण्डाख्यकुक्कुटेश्वरतीर्थयोः । अनुध्यानोद्भवं धर्म्मं, कुर्म्मः प्रद्युम्नसूरयः ॥ १८ ॥ इत्यस्यां विवृतौ श्रीमत्प्रद्युम्नस्य कवेः कृतौ । अपूरि दशमं द्वारं, धर्म्मसर्वस्वदेशना ॥ १७ ॥

श्रीदेवानन्दशिष्यश्रीकनकप्रभशिष्यकः । समरादित्यसंक्षेपकर्त्ता वृत्तिमिमां व्यधात् ॥ १ ॥ वादीन्द्रदेवसूरेर्वंशे श्रीमदनचन्द्रगुरुशिष्यः । प्रथमादर्शेऽदर्शयदेनां मुनिदेवमुनिदेवः ॥ २ ॥ श्रीप्रव्रज्याविधानप्रकरणतिलकस्यास्य वृत्तिं विधाय, प्राप्तं किञ्चिन्मया यत् सुकृतमकृतकं योगशुद्धया विशुद्धम् । तेनायं भव्यलोको भवतु भवभवभ्रान्तिशीतोपशान्तौ, धर्म्मे जैनेन्द्रधर्म्मे विशदलविशदस्वान्तवृत्तिप्रवृत्तिः ॥३॥ किञ्च-आकिञ्चन्यवतापि याचकजनो येन स्वतुल्यः कृतः, कारुण्यं विविधोपसर्गजनकेऽप्युचैर्भुवे दुर्जने । एकेनाप्यखिला परीषहचमूः साऽपि द्रवाद् द्राविता, श्रीसिद्धार्थनरेन्द्रनन्दनजिनोऽव्याद्वः स वीरस्त्रिधा ॥ ४ ॥ श्रीद्वीरजिनेन्द्रस्य, विबुधानां सदास्पदम् । सुधर्म्मायाः सधर्म्मा श्रीसुधर्म्माऽभूद्गणाधिपः ॥ ५ ॥ अनम्बूकृतवाग्जम्बूस्तस्य शिष्यः प्रशस्यधीः । नान्योऽस्मान्मुक्तिकामिन्या, कामितोऽस्मिन्ननेहासि ॥ ६ ॥ जम्बूकथाप्रबंधैर्यैः, स्तेनो न्यायेन संयतः । सोऽभूत्तत्प्रभवः पूर्वप्रभवः श्रुतकेवली ॥ ७ ॥ शय्यम्भवो भवोदन्वत्तारणे तरणीनिभः । दशवैकालिकग्रन्थं, निर्ग्रन्थोऽपि

व्यधादथ ॥ ८ ॥ यशोभद्रं वितन्वानं, यशोभद्रं विभुं स्तुमः । कर्म्मसंग्रामनामभ्यां, सम्भूतविजयं तथा ॥९॥ श्रीभद्रबाहुपादेभ्यो, नमो यैर्विहिता हिता । आवश्यकादिग्रन्थानां, निर्युक्तिर्युक्तिसंगता ॥ १० ॥ नमः श्रीस्थूलभद्राय, यो गार्हस्थ्ये व्रतेऽपि च । निजद्रूर्या वर्द्धयन् कामं, कामं कोशाप्रियाहृदि ॥ ११ ॥ श्रुतकेवलिभिः षड्भिस्तैः सदाऽऽचरणैरियम् । नास्त्यस्तिपक्षा जैनी वाक्, भ्रमरीवाभ्रमयद् भुवि ॥ १२ ॥ दशपूर्वभृतामाद्यो, जयत्यार्यमहागिरिः । यस्योन्नतिरनुल्लङ्घ्याऽन्यैः सच्चरणचारिभिः ॥१३॥ श्रीसुहस्ती सुहस्तीव, जिनराजस्य शासने । चित्रं त्वनेन भूपालो, निजद्वारि नियन्त्रितः ॥१४॥ श्रीसुस्थितगणाधीशः, स्वनामसदृशं जनम् । श्रीमान् सुप्रतिबुद्धश्च, चक्रतुर्दशनावशात् ॥ १५ ॥ अथ गणः कोटिकनामकोऽभूत्तेजस्विसंहत्युदयाद्रितुल्यः । यत्रैन्द्रदत्तो रविराविरासीद्भव्याम्बुजन्मप्रतिबोधकर्त्ता ॥१६॥ शिष्यः सिंहगिरिस्तस्य, श्रीरोहणगिरिप्रभुः । यत्र वज्राकरे वज्र, इव वज्रोऽभवद्विभुः ॥ १७ ॥ वज्रस्वामी नवो वज्रो, ब्रह्माष्टादशकोणभृत् । रुक्मिण्यूर्मिकया नैव, यः कथंचिन्नियंत्रितः ॥ १८ ॥ उद्दामधामवयधाम बभूव नाम, श्रीवज्रसेन इति तस्य विनेयरत्नम् । यच्चन्द्रमुख्यसमितिप्रवरक्षमाभृन्मौलिष्ववाप वसतिं दुरवापरूपाम् ॥ १९ ॥ नागेन्द्रचन्द्रनिर्वृतिविद्याधरसंज्ञकाश्च चत्वारः । शिष्यास्तस्याभूवन् मर्यादायां नदीनालाः ॥२०॥ संज्ञाकषायविकथानरकादिकायुर्बद्धार्त्तरौद्रभवभेदचयं निपेष्टुम् । ये द्रव्यकर्म्मचरधर्म्मकथानुयोगास्ते जज्ञिरे किल चतुर्मितमूर्त्तिभाजः ॥ २० ॥ श्रीवज्रसेनदृढमूलकृतप्रतिष्ठश्छायां सदा विदधात्यतिरम्यरूपाम् । पुष्पैरिव प्रसृमरैः सुरभिर्यशोभिश्चन्द्राख्यया विजयवानयमस्ति गच्छः ॥ २१ ॥ तत्र श्रीतलवाटमन्दिरमहाराजाल्लुकस्याग्रतो, वादं सप्रतिपक्षमक्षततमं कुर्वन् सदस्यैः समम् । संजातैकपदः समैरभिहितः प्रद्युम्नसूरिः प्रभुः, सूर्योऽयं जयताज्जडेऽपि रुचिमद्यन्नामबिम्बं मयि

॥२२॥ तस्मात्ततोऽथ न भूरिषु सूरिषु श्रीचन्द्रप्रभः प्रभुरभूद् गुणरत्नभूमिः । जिह्वाङ्कुर्वीभिरानिशं कविभिः खनाद्भिः, प्राप्तानि
तानि न यतः, परिनिष्ठितानि॥२३॥ पट्टे तस्य धनेश्वरः प्रभुरभूच्चारित्रलक्ष्मीपुष्प(गुणा)कलापोऽनल्पविकल्परम्यविहतिः शुद्धाहृतिः
प्राच्यवत्। श्रीमत्पापुल(भूमि)निचममप्पुर्यां तु देवी(च्याः पुरा,)देवीभूतगुरुप्रदत्तमिव यो मन्त्रं फलाढ्यं व्यभात्॥२४॥ तेनोच्छ्रितं
पतनतो विरताप्रबोधं, वक्ति स्तगं हि सनयूपुरपट्टदेवी । किं ब्रूमहे मनुजनोभविभो नयं तु, श्रीमद्धनेश्वरगुरोर्गरिमाणमस्य ॥२५॥
शिष्यास्तस्याथ चत्वारस्तत्वारम्भगुनेतसः । श्रीवीर१शान्ति२देवेन्द्र३देवपूर्वाक्ष्मगद्गुरवः ४ ॥ २६ ॥ श्रीशान्तिसूरिर्निज-
शान्तवाक्यामृतेन तत्कालजनानपुष्यत् । नंशेषु तेषां सुमनस्त्वमथाप्यरतीति निजं यदि कस्य न स्यात् ? ॥ २७ ॥ ज्ञानेन
रूपेण न देवभद्रस्ततो गणाधीश्वरदेवभद्रः । श्रुतामृतं पीतमनन्तमन्तःसमं शुभं यः शुभमुज्जगार ॥ २८ ॥ द्वसो
पुस्तकमस्ति शरतमुदयत्पयश्च धर्मध्वजः, कीर्तिर्यापनती यदापि विशदा यस्याक्षमाला प्रभोः । देवानन्दगुरुर्जगत्त्र-
यमितः पुंरूपभृद्भारती, शब्दानामनुशासनं तददितं न्यायेन सारस्वतम् ॥ २९ ॥ शिष्यास्तस्याभूनाद्यो रत्नप्रभाभिधः
सूरिः । परमानन्दः सूरिः सूरिः कनकप्रभस्तदनु ॥३०॥ अतुल्यशल्यत्रयव गरते, चारित्रभूभर्तृकरे विरेजुः । निराधनागौरव-
दण्डशल्यत्रिकाणि येत्तुं समकालमेव ॥ ३१ ॥ आद्यस्तु विगमानेषु, श्रीदेवानन्दसूरिषु । जगाम सुरसद्मा भाग, तद्राभनन्दिकीरिव
॥ ३२ ॥ भूयादेष विशेषतोऽपि परमानन्दप्रदानोद्यतः, सूरिर्निष्ठितशेखरः स परमानन्दः प्रभुः प्राणिनाम् । यस्य श्रीजय-
सिंहसूरिरजनि स्यातो विनेयाग्रणीः, सिद्धान्तार्थविचारसारसरणिः सर्वोपकारक्षमः ॥ ३३ ॥ वन्दे श्रीकनकप्रभस्य समतां
गवामवर्णत्रयी, पौरस्त्या निपरीततामपि निजं रूपं न मुंचत्यलम् । किं नोपश्रुतिनिःश्रितोऽप्यरतिदः कार्ये शुभे सर्वदा, मध्यस्थ-

त्वमुपागमद्दमनिधौ यस्मिन्नकारोऽप्यसौ ॥ ३४ ॥ शिष्यः श्रीकनकप्रभस्य सुकविः श्रीबालचन्द्रानुजो, ज्यायान् श्रीजयसिंहतः प्रतिभया श्रीवस्तुपालस्तुतः। विश्वाल्हादनठक्कुरान्वयगुरुर्म्मत्या सतां सम्मतः, सूरीणां सुकवित्वशोधनविधौ प्रद्युम्नसूरिः प्रभुः ॥३५॥ लिखने शोधने सज्जो, मुनिदेवो मुनीश्वरः। वर्षेऽष्टपक्षयक्षाख्ये, ऋषिबाणार्णवैर्मिता(?) ॥३६॥ युग्मम् ॥ प्राग्वाटान्वयनिष्कुटे वकुलवद्बिभ्रन् महाशाखितां, सर्वाशासु व्यचीचरद् बकुलदेवाख्यो यशःसौरभीम्। सूनुस्तस्य कुमारसिंह इति च द्वेधापि लक्ष्मीपतेस्तस्माद्धन्ध इति प्रसिद्धमहिमा प्राचीकशद् धीनिधिः ॥ ३७ ॥ धन्धः ॥ मुनिप्रभोः श्रीकनकप्रभस्य, पट्टप्रभुं प्रार्थयते स्म वृत्त्यै। पितृप्रभुस्वानुजपुण्यहेतोरलेखयत्पुस्तकपंचकं च ॥३८॥ गोपतेर्गौः रुचो राज्ञो, यावत् सर्पति भूतले। वेदिका पयसो वापि, वृत्तिस्तावत् प्रसर्पतु ॥ ३९ ॥ ग्रन्थाग्र ४५०० ॥ संवत् १९८३ विक्रमाब्दे पौषशुक्लपंचम्यां शुक्रवासरे प्राग्वाटवंशे रत्नपुरीनिवासिरामलालात्मजेन ऋषभचन्द्रेण पुण्यपत्तनेऽलेखि ॥ शुभं भवतु ॥ श्री ॥

# इति समाप्तं प्रव्रज्याविधानकुलकं सटीकम्



## ॥ अथ प्रव्रज्याविधानप्रकरणं सावचूर्णिकं प्रारभ्यते ॥



अत्र प्रकरणे दशाधिकाराः, तद्यथा-दुर्लभत्वं मनुष्यत्वे१, बोधेर्दुष्प्रापता ततः२। प्रव्रज्याया दुरापत्वं ३, तत्स्वरूपप्रकाशनम्४ ॥ १ ॥ तस्या विषमताऽऽख्यानं ५, धर्मस्य फलदर्शनम् ६। व्रतनिर्वाहकत्वं च ७, श्लाघा निर्वाहकर्तृषु ८ ॥ २ ॥ मोहक्षितिरुहोच्छेदो ९, धर्मसर्वस्वदेशना १०। धर्मप्रकरणेऽमुष्मिन्, दशद्वारविवेचनम् ॥ ३ ॥ अस्य प्रकरणस्य महार्थस्यापि सूत्रेण स्वल्पत्वात् मनसेप्टदेवतां नमस्कृत्याद्यगाथया परमपदसौख्यमुख्यनिबंधनमनुष्यत्वस्यैव दुर्लभतामाह—

संसारविसमसायरभवजलपडिआण संसरंताणं। जीवाण कहवि जइ होइ जाणपत्तंव मणुअत्तं ॥ १ ॥

संसार एव विषमः पोतप्राप्तावपि दुस्तरत्वात् सागरः-समुद्रः तत्रापरापरजन्मजले पतितानां परिभ्रमतां जीवानां कथमपि महता कष्टेन यानपात्रमिव मनुष्यत्वं यदि भवति, यतस्तत्र संसारसमुद्रे महाभीष्मदुर्दिनप्रबला विषयाः, कुवातप्रेरिता वेला इवाधिरोहंति नवनवा मनोरथाः, महायादस इवोच्छलंति संयोगवियोगाः, जलाच्छादितपर्वत इव मकरध्वजः, आवर्ता इव दुस्तराः कषायाः, नागदंता इवोत्कटा रागद्वेषाः, महोर्मय इव दुःखपरंपराः, और्वानल इवापथ्यान्नं, नेत्रवल्लीव स्खलनहेतुर्ममता, नक्रचक्रमिव कुविलल्पजालं, महामत्स्या इव व्याधयः, एतैः सर्वैः पोतभंगहेतुभिः संसारसागरो विषमोऽस्ति ॥ १ ॥ अथ बोधिदुष्प्रापतां प्रव्रज्यादुष्प्रापत्वं च एवं द्वे द्वारे गाथापूर्वार्धोत्तरार्धाभ्यामाह—

॥ १ ॥

तत्थवि बोही जिणदेसिअंमि धम्मंमि निक्कलंकंमि । पव्वज्जापरिणामो सुकयप्पुन्नस्स जइ होइ ॥ २ ॥

तत्रापि-मनुष्यत्वे प्राप्तेऽपि आर्यदेशशुभजातिसकलेन्द्रियपाटवजीवितव्यस्वमनोवासनासाधुसामग्रीसाधुसन्निधिधर्मश्रवणेषु सत्स्वपि बोधिर्दुर्लभेति गम्यं, कुत्रेत्याह— 'जिणदेसियंमि'त्ति विजितरागद्वेषादिभिस्तीर्थकरैः प्ररूपिते दुर्गतिनिपतज्जंतुजातसमुद्धरणसमर्थे सकलमलकलंकविकले च, अथ तत्र-बोधिप्राप्तावपि प्रव्रज्यापरिणामस्तु सुकृतपुण्यस्यैव प्राणिनो यदि स्यात्तर्हि स्यादिति गाथार्थः ॥ अत्र बोधिद्वारं ऋषभदेवचरित्रं, दुर्लभबोधित्वे च उदायिनृपमारकार्हद्दत्तदृष्टांतौ, प्रव्रज्यादुष्प्रापत्वे च जमालिप्रभृत्यष्टनिह्नवदृष्टांता ज्ञेयाः ॥ २ ॥

२ दुरापता बोधेः
३ प्रव्रज्या दुरापता

सा पुण दुप्परिअल्ला पुरिसाण सया विवेगरहिआणं । वोढव्वाइं जम्हा पंचेव महव्वयवयाइं ॥ ३ ॥
राईभोअणविरई निम्ममत्तं सएऽवि देहंमि । पिंडो उग्गमउप्पायणेसणाए सया सुद्धो ॥ ४ ॥
इरिआइपंचसमिईहिं तीहिं गुत्तीहिं तवविहाणंमि । निच्चुज्जुत्तो अममो आकिंचणो गुणसयावासो ॥ ५ ॥
मासाइआ उ पडिमा अणेगरूवा अभिग्गहा बहवे । दव्वे खित्ताणुगया काले भावे अ बोद्धव्वा ॥ ६ ॥
जावज्जीवममज्जणमणवरयं भूमिसयणमुद्दिट्ठं । केसुद्धरणं च तहा निप्पडिकम्मत्तणमपुव्वं ॥ ७ ॥
गुरुकुलवासो य सया खुहापिवासाइआ उ सोढव्वा । बावीसं च परीसह तहेव उवसग्ग दिव्वाई ॥ ८ ॥ ॥ २ ॥

सेति पूर्वगाथोत्तरार्धकथिता प्रव्रज्या दुष्परिपाल्या, अत्र हेतुमाह-पंच महाव्रतान्येव व्रतानि, न त्वणुव्रतानि, त्रसस्थावरसूक्ष्मबादरजंतुजातपरित्राणविधानरूपमाद्यं व्रतं, क्रोधलोभभयहास्यैरप्यसत्याभापणरूपं द्वितीयं, अन्यादत्ताल्पबहुस्थूलाणुसचित्ताचि-

त्तवर्जनरूपं तृतीयं, दिव्यौदारिककामत्रिविधत्रिविधपरित्यागरूपं तुर्यं व्रतं, स्थूलसूक्ष्माल्पबहुसचित्ताचित्तपरिग्रहपरित्यागरूपं
पंचमं व्रतं, एवंरूपाणि व्रतानि निर्विवेकैर्जनैः कथमूह्यंते ? इति द्वितीयगाथोक्ता प्रव्रज्या दुष्करताऽत्र समर्थिता ॥ रात्रिभोजने
विरतिः-निरोधः कार्यः, ननु रजनीभोजनविरतिर्देशविरतानामप्यस्ति तत्प्रव्रज्याशां को विशेषः ?, उच्यते, प्रव्रजितस्य
हि चतुर्भंगप्रोक्तस्यापि निशाभोजनस्य निषेधः, तद्यथा—रात्रौ गृहीतं रात्रौ भुनक्ति १ दिवा गृहीतं रात्रौ भुनक्ति २,
इति द्वौ भंगौ सुप्रतिपाद्यौ. रात्रौ गृहीतं दिवा भुनक्ति, अयं भंगो रात्रौ पिंडग्रहणानधिकारात्परिहार्यः ३. दिवा गृहीतं दिवा
भुनक्ति, इत्यस्मिन् दिवा गृहीते रात्रौ च पर्युषिते द्वितीयदिनपरिभोगेऽयं भवति, साधूनां सन्निधिपरिहारात् ४. इति चतुर्भंग-
प्रोक्ता निःशेषा अपि निर्विवेकानां दुष्कराः ॥ निर्ममत्वं स्वदेहेऽपि, आस्तां धनकनककलत्रपुत्रमित्रादिके, इदमपि निर्विवेकानां
दुष्करं. तथा पिंडो-भिक्षारूपः, स च उद्गमदोषाः १६ उत्पादनादोषाः १६ एषणादोषाः १० एवं द्विचत्वारिंशद्दोषवर्जितो ग्राह्य
इति शेषः ॥ एतावता द्विचत्वारिंशद्दोषाः सूचिताः, आधाकर्मणि शालिकूरदृष्टांतः, परभावक्रीते मंगुकथा, प्रामित्ये यतिभगिन्युद्धा-
रिततैलदृष्टांतः, परिवर्तिते वणिग्द्वयभगिनीदृष्टांतः, मालापहृते दंपतीदृष्टांतौ, आच्छेद्ये गोपकथा, अनिसृष्टे द्वात्रिंशन्मित्रकथा,
धात्रीपिंडे संगमस्थविरकथा, दूतीत्वे शय्यातरीपुत्रीकथा, निमित्ते श्रवणकथा, क्रोधादौ घेबरक्षपकादिकथा, नयनांजनादौ चंद्र-
गुप्तभोजनांतर्भोजिक्षुल्लकद्वयकथा, योगे आर्यसमिताचार्यकथा, छर्दिते मधुबिंदुदृष्टांतः। एवंविधः साधुर्भवतीति, योग्य इति गम्यते
॥ ४ ॥ ईर्यादिपंचसमितिभिस्तिसृभिर्गुप्तिभिरुपलक्षितः, गुणानां मूलोत्तरगुणरूपाणां सदावासो भवति. तपोविधाने बाह्याभ्यंतररूपे
नित्यमुद्युक्तो निर्ममोऽकिंचनश्च ॥ तपःफले न वसुदेवप्राग्भवदृष्टांतः, ननु नंदिषेणभवे भिक्षाचरकुलोत्पन्नस्यापि वर्णज्येष्ठत्वं,

३ प्रव्रज्या
दुष्पालता

॥ ३ ॥

वसुदेवत्वे च यदुवंशोत्पत्त्या प्राधान्यमन्यत्रापि श्रूयते, तदत्यंतहीनकुलोऽपि कश्चन तस्मिन्नेव भवे देवानामपि पूज्यो द्विजन्मनामपि मान्यः कथ्यः, एवंविधविकल्पदलनाय मातंगदारकहरिकेशिवलर्षेः कथा, तपोविधानमपि क्षमासमायुक्तं मुक्तिफलदं, तच्च गजसुकुमालदृष्टांतेन ज्ञेयं॥५॥मासिक्यादयः प्रतिमा अभिग्रहविशेषाः साधूनां द्वादश स्युः, ताश्च साधुः परिपूर्णदशपूर्वधरो जघन्यतो नववस्तुन्यधीती विशिष्टसंहननयुक्तो महासत्त्वो व्युत्सृष्टदेहो जिनकल्पिवदुपसर्गसहोऽलेपकृतभोजी गुर्वनुज्ञया गच्छान्निष्क्रम्य प्रतिपद्यते, स चाद्यप्रतिमायामन्नपानयोरेकैकां दत्तिं मासं यावद् गृह्णाति, एवं चैकैकमासवृद्ध्या एकैकदत्तिवृद्ध्या च सप्तम्यां सप्त मासान् यावदन्नपानयोः प्रत्येकं सप्त दत्तीर्गृह्णाति, ततस्तिस्रः प्रतिमाः सप्तरात्रिक्यो भवंति, तत्राद्यायां चतुर्थभक्तैः पारणदिनविहिताचामाम्लैरपानकैः प्रतिपद्यमानो ग्रामाद्बहिरुत्तानशयः पार्श्वस्थो निषण्णो वा निष्प्रकंपो दिव्यादीनुपसर्गान् सहते, द्वितीयापि सप्तरात्रिक्येव, नवरं उत्कटिकासनी लगंडशायी वा, लगंडं वक्रकाष्ठं तद्वत् शिरः पादौ च भूमौ लगयति, न तु कटीतटमित्यर्थः, दंडायतस्थानो वा तिष्ठति, तृतीयाऽप्येवं, नवरं वीरासनी वा गोदोहासनी वा कुब्जाम्रवद्वा तिष्ठति इति, तिस्रः प्रागुक्तसप्तकसहिता दश स्युः, एकादशी अहोरात्रिकी, तस्यां ग्रामाद्बहिर्नगराद्बहिर्वा स्थितः प्रलंबितपाणिरपानकषष्ठभक्तं प्रतिपद्यते, द्वादशी प्रतिमा त्वेकरात्रिकी, तस्यां चाष्टमभक्तानन्तरं बहिरीषत्प्राग्भारगतोऽनिमेषनेत्र एकपुद्गलन्यस्तदृष्टिः संहृतपादः प्रलंबितभुजश्च स्थाने तिष्ठतीति द्वादश प्रतिमाः साधुना कार्याः, अनेकरूपा अभिग्रहा बहवः कार्या इति शेषः, अभिग्रहेषु श्रीवीरदृष्टांतः ॥ ६ ॥

यावज्जीवममज्जनम्-अस्नानं, उद्दिष्टमिति द्वितीयपदगतं चतुर्ष्वपि पदेषु योज्यते, यदुक्तं-"कृते स्नाने क्षणं शौचं, रागमानौ च चेतसि । स्त्रीजनप्रार्थनीयत्वं, ब्रह्मचर्यस्य दूषणम् ॥१॥ घातो जलस्थजीवानामन्यसत्त्वविराधनम् । क्षीरक्षालनमंगारे, इवाज्ञान-

प्रकाशनम् ॥ २ ॥ अस्नाने तु न दोषास्ते, मत्वेति मुनिपुंगवैः । वर्ज्यं स्नानं ततः सिद्धिवधूसंगमसंस्पृहैः ॥ ३ ॥" तथा अनवरतं भूमिशयनमुद्दिष्टं, नतु पल्यंकादिशयनं, अपूर्वं विशिष्टमित्यर्थः, निष्प्रतिकर्मत्वं, तत्र निष्प्रतिकर्मत्वे च श्रीसनत्कुमारचक्रवर्तिकथा॥७॥

सदा गुरुकुलवासे हि स्मारणावारणाप्रेरणादयो भवंति, अत्रैव विनयः संभवति, ततो विनयोऽपि विधेय एव, अत्र विनयविषये आर्यचंदनाप्रवर्तिनीमृगावतीसाध्वीदृष्टांतः, क्षुधापरीषहे हस्तिमित्रदृष्टांतः १, तृट्परीषहे क्षुल्लकदृष्टांतः २, शीते श्रीभद्रबाहुशिष्यसाधुचतुष्टयदृष्टांतः ३, उष्णेऽर्हन्नकः ४ दंशमशके श्रमणभद्रः ५, अचेले सोमदेवद्विजः ६, अरतौ अर्हद्दत्तः ७, स्त्रियां स्थूलभद्रः ८, चर्यायां संगमस्थविरः ९, नैषेधिक्यां कुरुदत्तः १०, शय्यायां सोमदत्तसोमदेवौ ११, आक्रोशे व्यतिरेकान्वययोः क्षपकार्जुनमालिकौ १२, वधे स्कंदकशिष्याः १३, याच्ञायां बलदेवः १४, अलाभे ढंढणकुमारः १५, रोगे कालवैशिकः १६, तृणस्पर्शे भद्रः १७, मले सुनंदः १८, सत्कारपुरस्कारे व्यतिरेकान्वययोः श्रावकसाधुकथा१९, पूजायां कालिकाचार्यशिष्यसागरचंद्रसूरिकथा २०, ज्ञाने सूरिशिष्यभ्रातृद्वयकथा २१, दर्शने आषाढभूतिसूरिकथा २२, 'तथैवे'ति पूर्वापेक्षया, न केवलं परीषहाः, उपसर्गा अपि दिव्यादयः सह्याः, ते च चतुर्धा—दैवतमानुषतैरश्चाध्यात्मिकभेदात्, तत्र दैवमानुषोपसर्गेषु भगवान् वीर एवोदाहृतिः, तैरश्चेषु चिलातीपुत्रः, आध्यात्मिकेषु सनत्कुमारमुनिः ॥ ८ ॥ अथ नवमगाथया प्रव्रज्यायाः स्वरूपं कथयति—

लद्धावलद्धवित्ती सीलंगाणं च तह सहस्साइं । अट्ठारसेव सहसाइं बोढव्वा आणुपुव्वीए ॥ ९ ॥ 

लब्धं बहुमानपूर्वं अपलब्धं--अपमानपूर्वं ताभ्यां वृत्तिः-प्राणधारणं यस्य स लब्धापलब्धवृत्तिः, साधुर्भवतीति शेषः, आनुपूर्व्या क्रमेणेत्यर्थः, स चायं—क्षांत्यादिधर्मदशकं दशभिः पृथ्व्याद्यजीवपर्यंतैः । गुणितं जायेत शतं पंचगुणं पंचभिः

करणैः॥१॥अथ च सहस्रद्वितयं संज्ञाभिश्चतसृभिस्ततः पड्भिः। योगत्रिकैरष्टादश वधघातानुमतिभिः सर्वैः॥२॥९॥अथ पंचमं द्वारं,



तरिअव्वो य समुद्दो बाहाहिं इमो महल्लकल्लोलो। नीसायवालुआए चावेयव्वो सया कवलो ॥ १० ॥
चंकमिअव्वं निसिअग्गखग्गधाराइ अप्पमत्तेणं। पायव्वा य सहेलं हुअवहजालावली सययं ॥ ११ ॥
गंगापडिसोएणं तोलेअव्वो तुलाइ सुरसेलो। जइअव्वं पुण एगागिणावि भीमारिदुट्ठबलं ॥ १२ ॥
राहावेहविणिम्मिअचक्कट्ठिअलक्खमग्गपुत्तलिआ। विंधेअव्व अवस्सं उवसग्गपरीसहे जेउं ॥ १३ ॥
तिहुअणजयप्पडागा अग्गहणिज्जा तहावि गहिअव्वा। इअ एवमाइ साहूण दुक्करा होइ पव्वज्जा॥१४॥

प्रव्रज्याया दुष्करत्वं पंचभिर्गाथाभिर्नवभिरुपमानैः प्ररूपयति, तद्यथा -बाहुभ्यां समुद्रस्तरणीयः, यथा समुद्रो बाहुभ्यां तरीतुं सुदुष्करस्तथा प्रव्रज्याविधिरपि, तथा सदा निःस्वादवालुकायाः कवलश्चर्वणीयो, यथा स दुष्करस्तथा प्रव्रज्याविधिरपीत्यर्थः॥१०॥ चंक्रमितव्यं-अतिशयेन चलनीयं निशिताग्रखड्गधारायां, कथंभूतेन?-अप्रमत्तेन, साधुनेति गम्यं, पातव्या च सहेलं, लीलयेत्यर्थः, हुतवहज्वालानली सततं निरंतरं ॥११॥ गंगा नदी प्रतिश्रोतसा तीर्येत्यर्थः, तुलया च सुरशैलो-मेरुस्तोलनीयः। पुनरेकाकिनापि भीमारिदुष्टबलं जयितव्यं ॥ १२ ॥ राधावेधार्थं विनिर्मिता चासौ चक्रास्थिता-लक्ष्यमार्गस्था पुत्रिका वेध्या, अवश्यं निःसंशयं, उपसर्गपरीषहान् जित्वा अभिभूय, अत्रार्थे सुरेंद्रदत्तो बहिरंगेऽप्युदाहरणं॥१३॥ त्रिभुवनजयपताका अग्रहणीयापि-ग्रहीतु दुष्कराऽपि ग्रहणीयैव, त्रिजगज्जयिनं कामं जितवता साधुना त्रिजगज्जितमेवेत्यर्थः. इत्यादिभिरुपमानैः प्रव्रज्या दुष्करा भवति, तथापि निर्वाहणीयेत्यर्थः ॥ १४ ॥ अथ षष्ठं द्वारं धर्मफलदर्शनाख्यं गाथाद्वयेनाह-

जिणधम्मो मुक्खफलो सासयसुक्खो जिणेहिं पन्नत्तो। नरसुरसुहाइं अणुसंगिआइं इह किसि पलालव्व ॥१५॥
भुवणं जिणस्स न कयं न य बिंबं नावि पूइआ साहू । दुद्धरवयं न धारिअं जम्मो परिहारिओ तेण ॥ १६ ॥

जिनधर्मः-प्रव्रज्यारूपो मोक्षफलो-मोक्षरूपफलदायकोऽस्तीति शेषः, स शाश्वतसौख्यहेतुत्वात् शाश्वतसौख्यः, तथा जिनैः-वीतरागैः प्रज्ञप्तः-प्रतिपादितः, ते हि तं जिनधर्ममवदन् वदंति वदिष्यंति च, नरसुरसुखानि-राज्यसाम्राज्यदेवत्वदेवाधिपतित्वसुखानि त्वानुषंगिकाणि-प्रासंगिकानि, जिनैरेवोक्तानि, दृष्टांतमाह—विभक्तिलोपात् कृषौ पलालमिव, कृषिर्हि धान्यनिमित्तं क्रियते, पलालं-तृणं तु प्रासंगिकं स्यादिति गाथार्थः, अत्रार्थे पूर्वं बाहुमुनिभवे विहितचतुर्दशपूर्वलक्षबाह्याभ्यंतरतपश्चरणश्रीभरतचक्रिदृष्टांतः ॥१५॥ एतदेव व्यतिरेकेण दर्शयति-यतः श्रीभरतचक्रिणाऽष्टापदे यथावर्णप्रमाणरत्नमयचतुर्विंशतिजिनप्रतिमास्थापनपुरस्सरं दुरंतदुरितावसादः सिंहनिषद्याभिधः प्रासादः कारितः, तत्र यथोक्तबिंबानि च स्थापितानि, प्राग्भवे साधुभावे च साधूनां वैयावृत्त्यादिपूजा कृता, दुर्धरं व्रतं धृतं, परं येनैतेषां चतुर्णां मध्ये न किमपि कृतं स्यात्तेन मानुष्यजन्म परिहारितं, तस्य मनुष्यजन्म व्यर्थं गतमित्यर्थः ॥ १६ ॥ अथान्वयव्यतिरेकाभ्यां पंचभिर्गाथाभिः प्रव्रज्यां श्लाघते—

मुणिवूढो सीलभरो विसयपसत्ता तरंति नो वोढुं। करिणो पल्लाणं किं उव्वोढुं रासहो तरइ ? ॥ १७ ॥
अन्नह सा पव्वज्जा वज्जिअसावज्जजोगकरणिज्जा। अन्नह पमायबहुलो जीवो विनडेइ अप्पाणं॥१८॥
अन्नह सो पडिमत्थो अन्नह लोआण चिट्ठिअं इण्हि। अन्निच्चिय दंता गयवराण चावंति अन्नेहिं ॥१९॥
वंसिअ मुहेण छिज्जइ कड्ढिज्जइ दुक्करं कुडंगाउ। पव्वज्जा सुहगहिआ सीलभरो दुव्वहो होइ॥ २० ॥

वूहंति नाम भारा ते च्चिअ वूहंति वीसमंतेहिं । सीलभरो वोढव्वो जावज्जीवं अवीसामो ॥ २१ ॥

मन्यंते साधुसामाचारीमिति मुनयः तैर्व्यूढः शीलभरः- अष्टादशशीलांगसहस्रभारः पूर्वप्रणीतः, अत एव विषयप्रसक्ताः— शब्दादिषु प्रकर्षेण संसर्गवंतो जनास्तं-प्रव्रज्याभारं वोढुं न शक्नुवंति,'शक्तिश्चर्यतरतीरपाराः' इति प्राकृतत्वात्, व्यतिरेकदृष्टांतमाह-किं करिणः पर्याणमुद्वोढुं रासभः शक्नोति ?, नेत्यर्थः, तथा मुक्तिपुरपरिघरूपरागादिभुजंगेलाभंगगजप्रायमहामुनिव्यूढं शीलपर्याणं रासभप्रायमुन्याभासैः कथं वोढुं शक्यते ? इति भावः ॥ अत्रार्थे श्रीवज्रस्वामिदृष्टांतः ॥ १७ ॥ अथ तदेव द्वितीयगाथयाऽऽह-अन्यथा वर्जितसावद्ययोगैः-पापव्यापारपरिहारिभिरेव सा प्रव्रज्या क्रियते, नान्यैरिति भावः, अन्यथा 'प्रमादबहुलः' प्रमादेन-विषयविकथादिरूपेण बहुलो-चेष्टितः, कोऽसौ ? जीवः- प्राणी आत्मानं विनटयति-विगोपयति, आसतां वाक्कायव्यापारकषायवंतः, मनोमात्रकषायवंतोऽपि नरकगत्युपार्जनयोग्या भवंतीति॥अत्रार्थे श्रीप्रसन्नचंद्रराजर्षिदृष्टांतः॥१८॥ अर्थनमेवार्थं तृतीयगाथया विशिनष्टि-अन्यथा स प्रतिमार्थः अन्यथा चाधुना लोकानां चेष्टितं-विलसितं इदानीम् -ऐदंयुगीनानां, आस्तामस्मादृशां लोकानां यत्, तदपि श्रीवीरशिष्यत्वेऽपि, एकेन चरणेन स्थितोऽपि, ऊर्ध्वबाहुरातापयन्नपि मनोव्यापारवशाद् दुर्गतियोग्यः प्रसन्नचंद्रोऽजनि, अमुमेवार्थमर्थांतरन्यासेन द्रढयति—'अन्निचिय' इत्यादि, गजवराणां हि अन्ये एव दंता युद्धादौ विधुरावस्थायां सहायाः प्रकाशविशदाश्च दृश्यंते, यत्तु चर्वणीयं वस्तु तदन्यैरेव मुखमध्यस्थैः कृशैर्दंतैश्चर्वयंति ॥ १९ ॥ अथ चतुर्थ्या गाथयाऽमुमेवार्थं व्यनक्ति-वंशी-वंशजालिका सुखेन छिद्यते, यच्च कुडंगात्-मिथोमिलितशाखागहनात् कृष्यते तद् दुष्करं, एवं प्रथमं दृष्टांतमुपन्यस्याथ दार्ष्टांतिकं योजयति-प्रव्रज्या सुखग्राह्या-सुखेनापि गृह्यते, परमष्टादशसहस्रशीलांगभारो

दुर्वहो भवति, किंतु स हि धन्यैरेवोह्यते, नत्वन्यैरिति गाथार्थः ॥ २० ॥ किमिति दुर्वह इति पंचम्या गाथया कथयति–उह्यंते, नामेत्याशोक्तौ आमंत्रणे वा, भाराः, तच्चियत्ति चियशब्दस्यावधारणार्थस्य व्यवहितसंबंधात् ते उह्यंते विश्राम्यद्भिरेव, शीलभारो हि महादुर्वहो वोढव्यो यावज्जीवं-जीवितावधि अविश्रामो-विश्रामरहितो, निरंतरमित्यर्थः, अत्रार्थे सह्यगिरिव्रतधरस्य कथा ॥२१॥

अथ ' श्लाघा निर्वाहकर्तृषु ' इत्यष्टमं द्वारं गाथात्रयेणाह—

ता तुंगो मेरुगिरी मयरहरो ताव होइ दुत्तारो। ता विसमा कज्जगई जाव न धीरा पवज्जंति ॥ २२ ॥

ता विच्छिन्नं गयणं ताधच्चिअ जलहिणो अ गंभीरा। ता गुरुआ कुलसेला धीरेहिं न जा तुलिज्जंति ॥ २३ ॥

दुच्चिअ जए गईओ साहसवंताण हुंति पुरिसाणं। विह्लदलकमलहत्था रायसिरी अहव पव्वज्जा ॥ २४ ॥

यथा धीराणां नात्युच्चः सुरशिखरी, न च पयोराशेः पारो दुस्तर एव, तेषां यथा किमपि कार्यं विषमं न, तथा धीराणां प्रव्रज्याऽपि सुधारैवेति भावार्थः, विषमकार्यगतिस्तावद्यावन्न धीराः प्रतिपद्यंते, इत्यत्र पौरुषस्यैव प्राधान्यं, यतो गर्भावास-स्थितोऽपि राज्यश्रियो रक्षिता भवत्यंगवीरवत्, तस्यात्र दृष्टांतः ॥ २२ ॥ तदेव वीरत्वं द्वितीयगाथया विशेषयति-तावद्विस्तीर्णं गगनं तावद् जलधयोऽपि गंभीराः तावच्च गुरवः कुलशैलाः यावद्धीरैर्न तोल्यंते, इति गाथार्थः ॥ २३ ॥ किंच जगति द्वावेव मार्गौ साहसिकानां पुरुषाणां भवतः, विकस्वरकमलहस्ता राज्यलक्ष्मीः, लक्ष्मीर्हि कमलहस्ता, प्रव्रज्या तु विकस्वरकमलयुता मोक्षलक्ष्मीरूपैव, अतः प्रव्रज्या सदा स्मेरा भवति, अत्रार्थे हि हेलयाऽपहस्तितसुसंपदः सनत्कुमारादयः पूर्वोक्ता एव दृष्टांता ज्ञेयाः ॥ अथ मोहतरुच्छेदाख्यं द्वारमाह—

अइगुरुओ मोहतरू अणाइभवभावणाविगयमूलो। दुक्खं उम्मूलिज्जइ अच्चंतं अप्पमत्तेहिं ॥ २५ ॥

अनादिभवभावना-संस्कारः, स एव विगतं-ज्ञातं निश्चितं मूलं ज्ञानिभिर्यस्य सः, एवंविधोऽतिगुरुर्मोहरूपो वृक्षो दुःखं यथा स्यात्तथोन्मूल्यते, कैः ?-अत्यंतं मदा(द्या)दिप्रमादपंचकरहितैरिति, यदुक्तं—"अनादितरसंसारभावनादृढमूलवान् । रागद्वेषद्वयाशाखः, कषायप्रतिशाखकः ॥ १ ॥ विषयच्छदनच्छन्नो, दुःखपुष्पौघपुष्पितः । मोहद्रुमः फलत्येष, फलेन नरकेण तु ॥२॥" स चाप्रमत्तैरुन्मूल्यते, अत्रार्थेऽगडदत्तराजपुत्रकथा ॥ २५ ॥ अथ दशमं धर्मसर्वस्वदेशनाख्यं द्वारमाख्यायते—

खणभंगुरे सरीरे मणुअभवे अब्भपडलसारिच्छे। सारं इत्तिअमित्तं कीरइ जं सोहणो धम्मो ॥ २६ ॥

क्षणभंगुरे-शूलविषविसूचिकाविषधरानलशस्त्रवातपित्तश्लेष्मोद्रेकसन्निपातादिभिः शीघ्रं विनश्वरे, अत एवासारतुषमुष्टिकल्पे मनुजत्वे-मानुषभवे, औपम्यमाह—अभ्रपटलसदृशे, यथाऽभ्रपटलं कुतोऽप्यागतं क्वापि याति चेति न ज्ञायते तथा छद्मस्थैर्मनुजत्वमिति भावः, अतः शोभनो धर्मः-सर्वविरतिरूपो यत् क्रियते तावन्मात्रमेव सारः, एतावता प्रकरणकारेण मनुष्यभवासारत्वं धर्मस्य सारत्वं च वदता सकलप्रकरणार्थनिर्वाहोऽप्युपन्यस्त इति मतिमद्भिर्विचार्यं, इह केचिद् ज्ञातपरमार्था धर्मे स्थिरचित्ता अन्यं जीवं धर्मेऽस्थिरमपि स्थिरं कुर्वंति, अत्राभयकुमारमंत्रिणा यथा स्वबुद्ध्या काष्ठभारिकः ॥ २६ ॥ शेषा गाथाश्चान्यकर्तृका दृश्यन्ते ॥ इति प्रव्रज्याविधानावचूर्णिः समाप्ता ॥

शेषा गाथाश्चेमाः—पूअंति जे जिणिंदे वयाइं धारंति सुद्धसम्मत्ता । साहूण दिन्नदाणा न हु ते मरणाउ बीहंति ॥ २७ ॥ तवनियमेण य मुक्खो दाणेण य हुंति उत्तमा भोगा । देवच्चणेण रज्जं अणसणमरणेण

इंदत्तं ॥ २८ ॥ काले सुपत्तदाणं सम्मत्तविसुद्धबोहिलाभं च । अंते समाहिमरणं अभव्वजीवा न पावंति ॥२९॥ अथिरेण थिरो समलेण निम्मलो परवसेण साहीणो । देहेण जइ विढप्पइ धम्मो ता किं न पज्जत्तं ? ॥ ३० जा दव्वे होइ मई अहवा तरुणीसु रूववंतीसु । सा जइ जिणवरधम्मे करयलमज्झट्ठिआ सिद्धी ॥ ३१ ॥ जिणसासणस्स सारो चउदसपुव्वाण जो समुद्धारो । जस्स मणे नवकारो संसारो तस्स किं कुणइ ? ॥ ३२ ॥ इइ पव्वज्जाविहाणगरणं सम्मत्तं ॥

इति चिरन्तनाचार्यविहितं प्रव्रज्याविधानकुलकं श्रीमत्प्रद्युम्नसूरिवरसूत्रितया वृत्त्या तदर्वाग्भाव्याचार्यरचितया अवचूर्ण्या च योजितं समाप्तं

इति वृत्त्यवचूर्णिद्वययुतं प्रव्रज्याविधानकुलकं

## ॥ समाप्तम् ॥

नं. ४०००

श्रीमज्जैनसिद्धान्तवाचनाप्रकाशनकारिका

श्रीमती आगमोदयसमितिः

स्थापना–श्रीमल्लीतीर्थे २४४१ माघशुक्लदशम्यां

आगमज्ञो हि सर्वज्ञः



सुयणाणं महिड्ढीयं

वीरसंवत् २४४४·आषाढशुक्लत्रयोदशी । शास्त्रं सर्वत्रगं चक्षुः, सर्वज्ञानशिरोमणिः । विक्रमसंवत् १९७४ क्राइस्टसन १९१८